प्रयोग
१

अथर्वे

# ॥ अथर्ववेद प्रयोगभानुप्रारंभः ॥

श्रीगणेशायनमः ॥ श्रीमन्महागुरुगणपतीष्ट देवताभ्योनमः ॥ अथाथर्ववेदस्य प्रयोगभास्करःप्रारभ्यते ॥
तत्रादौमंगलमाचरति ॥ प्रणम्यश्रीकालीं हरिहरगणेशेन सहितांगुरुं दत्तात्रेयं निलगिरिगतां श्रीभगमयीम् ॥ अथर्वा-
र्थान्दृष्ट्वाबुधजनमनोह्लादजनकंप्रकुर्वेहंग्रंथंसुगममिहसंस्कारसहितम् ॥ १ ॥ रविशंकरनागरद्विजेनक्रियतेऽयंप्रवरःप्रयोग
भानुः ॥ सहृदंबुधपंकजेषुरम्यः सदयंरश्मिभिरातनोतुगौरैः ॥ २ ॥ तत्रादौप्रारीप्सितग्रंथविघ्ननिरासार्थमहत्सुविज्ञप्तिः ॥
कृपालवःकृपालुभिःक्रियतेचेन्ममोपरि ॥ मदेनसंमिदेनसांतरायतात्रनोभवेत् ॥ १॥ कौशिकगृह्यसूत्रादीन्ग्रंथानालोक्य
यत्नतः ॥ कुर्वेहंबाल्यबोधायशाखांस्त्वीकृत्यशौनकीम् ॥ २ ॥ तदुक्तंचरणव्यूहपरिशिष्टभाष्ये ॥ नर्मदोत्तरदेशेतुशाखा
शाखायनीस्मृतेत्युपक्रम्यचतुर्णांवेदानांशाखानांच व्यवस्थापितत्रैवोक्ता ॥ एवंपरिशिष्टानुसारेण नर्मदोत्तरदेशेब्रह्मवेदस्य
शौनकीशाखेतिसिद्धं ॥ अतएवस्वीकृत्यशौनकीमित्युक्तम् ॥ इहहिधर्मादिचतुर्षुपुरुषार्थेषुपुरुषस्यप्राधान्येनधर्मएवसेव्यः ॥
इतरेषांधर्मादेवप्राप्तिःतद्रूव्यासः ॥ धर्मात्संजायतेह्यर्थोधर्मात्कामोभिजायते ॥ धर्मादेवपरंब्रह्मतस्माद्धर्मंसमाश्रयेत् ॥१॥
सचवेदोक्तएवनान्यःयःकश्चिन्नास्तिकादिग्रंथप्रतिपादितः ॥ तदुक्तमभियुक्तैः ॥ वेदेनप्रयोजनमुद्दिश्यविधायमानोर्थोधर्म
इति ॥ तथाच ॥ वेदप्रणिहितोधर्मोह्यधर्मस्तद्विपर्ययः वेदोनारायणः साक्षादितिपेनिश्चितामतिरिति ॥ वेदस्यच
स्वतः प्रामाण्यमपौरुषेयत्वात् ॥ तथाचपराशरः ॥ नकेचिद्वेदकर्त्तारो वेदस्मर्त्ताचतुर्मुखः ॥ तथैवधर्मंस्मरतिमनुः
कल्पांतरेष्वपीति ॥ वेदस्वरूपमाहआपस्तंबः ॥ मंत्रब्राह्मणयोर्वेदनामधेयमिति ॥ कात्यायनोपि ॥ विधिर्विधेय
स्तर्कश्चवेदइति ॥ विधिर्ब्राह्मणम् ॥ विधेयोमंत्रः ॥ तर्कोमीमांसार्थवादश्च तत्प्रभावत्वात्कल्पस्यापिप्रामाण्यम् ॥
यास्काचार्येणतुकल्पारि शृंगेतिमंत्रनिर्वचने त्रिधाबद्धस्त्रेधाबद्धोमंत्र ब्राह्मणकल्पैरिति कल्पस्यवेदतुल्यतैवोक्ताः अतश्च
सिद्धम् कल्पोक्तधर्मस्यानुष्ठानेनपुरुषस्यामि मतफलसिद्धिरिति । सचकल्पोद्विविधः । श्रौतस्मार्त्तश्च ॥ श्रौतस्यच

भानु

वेद
१

स्मार्त्तपूर्वकत्वंतथांचयाज्ञवल्क्यः ॥ आवसथ्यमनादृत्यवैतानेयःप्रवर्त्तते ॥ सोनाहिताग्निर्भवतिपरिवेत्तासउच्यतेइति ॥ कारिकाकारोपि ॥ निषेकाद्यावसथ्यांतैःस्मार्त्तैर्यः संस्कृतोद्विजः ॥ उत्तरेष्वधिकारीसइतिहेत्वर्थताभवेदिति ॥ अनेन स्मार्त्तकल्पस्याभ्यर्हितत्वंसूचितम् ॥ अतएवकौशिकसूत्रेसूत्रकारः । अथविधिंवक्ष्यामइत्युपक्रम्यसंप्रदायः प्रसुक्तत्वात् ब्राह्मणानांयज्ञंव्याख्यास्यामः देवानांपितृणांचप्राङ्मुखउपांशुकरोत्येवमुपक्रम्ययश्चैवंविद्वान् इंद्रंमहेंद्रेणचरतीत्युपसंहारः।॥ गृह्येकृतः ॥ यज्ञशब्दःपाकपरः ॥ मत्यहंपाकस्तुस्मार्त्ताग्नौभवति ॥ तत्रपाकाभावेप्रायश्चित्तस्मरणात् ॥ तदुक्तम् ॥ ब्राह्मणभाष्ये ॥ पचनाग्नौपचेदन्नंसूतकेमृतकेपिवा ॥ अपक्तोपवसेद्रात्रीपुनराधानमर्हतीति ॥ शांखायनेनापि ॥ अथातः पाकयज्ञान्व्याख्यास्यामइति ॥ यतोहिस्मार्त्तकल्पेसंस्काराविहितास्तैश्चब्राह्मण्यमवाप्यते ॥ तदुक्तंकारिकारेण ॥ चित्रकर्म यथानेकैरागैरुन्मील्यतेशनैः ॥ ब्राह्मण्यमपितद्वत्स्यात्संस्कारैर्विधिपूर्वकैरिति ॥ तेचकेसंस्काराइत्यपेक्षायांकारिकाकारः॥ स्मार्त्तामांगल्यसंस्कारागर्भाधानाचस्त्रयः ॥ तथाद्वादशजाताद्याविवाहांतास्तुपुत्रयोः ॥ पाकसंस्थाभवंत्येताह्यष्टकापार्वण श्चरुः ॥ श्राद्धमाश्वयुर्जिचैत्रीश्रावणीचा ग्रहायणी ॥ एतेसप्तात्मसंस्कारास्मार्त्तायेचहुतादयइति । तत्रसर्वेषुकर्मसुगणेश नांदीमुखादिपूर्वकत्वादादौतेषांप्रयोगात्युच्यंते ॥ ॥ अथ प्रयोगः ॥ महत्सुकर्मसुपूर्वेन्हिअल्पेषुकर्मसुतद्दिनेचकृतनित्यो यजमानःपितृवल्यंतंविधाय वैश्वदेवंमंगलस्नानंकुर्यात् ॥ तद्यथा ॥ देशकालौसंकीर्त्यकरिष्यमाणामुककर्मनिमित्तंसपत्नीकः ससंस्कार्योऽहंमंगलस्नानंकरिष्ये इतिसंकल्प्य ॥ सौभाग्यवतीभिर्यथाकुलाचारंनीराजितः सर्वौषध्यादिसुगंधद्रव्यैःससुगंध तैलैः शरीरमुद्वर्त्यस्नात्वाचम्यवस्त्राणिधारयेत् ॥ परिधत्तेतिअथर्वाबृहस्पतिश्चंद्रमास्त्रिष्टुप् वस्त्रधारणेविनियोगः ॐपरिधत्त धत्तनोवर्चसेमंजरामृत्युंकृणुतदीर्घमायुः बृहस्पतिःप्रायच्छद्वासएतत्सोमायराज्ञेपरिधातवाउ ॥ १ ॥ पत्न्याअपिवस्त्र परिधानं कंचुकीपरिधानंचतूष्णींकर्त्तव्यम् ॥ एवंसंस्कार्यस्यापियथासंभवं वस्त्रधारणम् ॥ प्रतिवस्त्रंसर्वेषामाचमनम् ॥ सौभाग्यकुंकुमादिनातिलककरणं ॥ ततोगोमयोपलिप्तस्थलेस्वस्तिकादिरंगैरलंकृतेशुचौदेशेसितवस्त्राच्छादिते श्रीपर्ण्यादि प्रशस्तदारुमयेपीठेस्वयं प्राङ्मुखोपविश्य तादृशपीठयोःस्वदक्षिणतःपत्नींतद्दक्षिणतः संस्कार्यंचोपवेशयेत् ॥ ततःसर्वेषां





कर्मणामारंभेकरिष्यमाणकर्मणोनिर्विघ्नतासिध्यर्थंयथाकुलाचारंगणेशंगणेशांबिकेवापूजयेत् ॥तद्यथा॥ पवित्रपाणिर्जीवास्थं जीव्यासंसर्वमायुर्जीव्यासं । इतिप्रथमम् । उपजीवास्थोपजीव्यासंसर्वमायुर्जीव्यासं । इतिद्वितीयम् । संजीवास्थसंजीव्या संसर्वमायुर्जीव्यासं । इतितृतीयम् ॥ जीवलास्थजीव्यासंसर्वमायुर्जीव्यासमिति विधिवदाचम्य प्राणानायम्याचारात्त्यमूषु वाजिनमितिस्वस्त्ययन सूक्तंपठताकर्मकारयित्वा सौभाग्यकुंकुमेनतिलकंकारयित्वा गणेशादिन् नमस्कुर्यात् ॥ ॐ त्यमूष्विति अथर्वापंक्तिःस्वस्त्ययने विनियोगः ॥ ॐत्यमूषुवाजिनं देवजूतं सहोवानंतरुतारंरथानाम् ॥ अरिष्टनेमिं पृतनाजिमाशुंस्वस्तयेताक्ष्यर्मिहाहुवेम ॥ १ ॥ त्रातारमिंद्रं मवितारमिंद्रं हवेहवेसुहवंशूरमिंद्रं ॥ हुवेनुशक्रंपुरुहूत मिंद्रं स्वस्तिनइंद्रोमघवान्कृणोतु ॥ २ ॥ आमंद्रैरिंद्रहरिभिर्याहिमयूररोमभिः ॥ मात्वाकेचिन्नियमन्विनपाशिनोतिधन्वे वताँइहि ॥ ३ ॥ स्वस्तितन्मेसुप्रातः सुसायंसुदिनंसुमृगंसुशकुनंमेअस्तु ॥ सुहवमग्नेस्वस्त्य१मर्त्यंगत्वापुनरायाभिनंदनम् ॥ ४ ॥ स्वस्तिनोअस्त्वभयंनोअस्तुनमोहोरात्राभ्यामस्तुस्व स्तमात्रउतपित्रेनोअस्तु स्वस्तिगोभ्योजगतेपुरुषेभ्यः ॥ विश्वंसु भूतंसुविदत्रंनोअस्तुज्योगेवदृशेमसूर्यं ॥ ५ ॥ ॐअव्यसश्चव्यचसश्चबिलंविष्यामिमायया ॥ ताभ्यामुद्धृत्यवेदमथकर्माणि कृण्महे ॥ ६ ॥ ॥ श्रीमन्महागणपतये नमः ॥ अंबिकायैनमः ॥ गुरुभ्योनमः ॥ इष्टदेवतायैनमः ॥ श्रीलक्ष्मीनारायणा भ्यांनमः ॥ कुलदेवतायैनमः ॥ मातृपितृभ्यांनमः ॥ सर्वेभ्योब्राह्मणेभ्योनमः ॥ ॐसुमुखश्चैकदंतश्चकपिलोगजकर्णकः ॥ लंबोदरश्चविकटोविघ्ननाशोगणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षोभालचंद्रोगजाननः ॥ द्वादशैतानिनामानियःपठेच्छृणुयादपि ॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ॥ शुक्लांबरधरंदेवंशशिवर्णंचतुर्भुजंप्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ॥ अभीप्सितार्थसिध्यर्थंपूजितोयःसुरासुरैः ॥ सर्वविघ्नच्छिदेतस्मैगणाधिपतयेनमः ॥ वक्रतुंड महाकायकोटिसूर्यसमप्रभ ॥ अविघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ वागीशाद्याःसुमनसःसर्वार्थानामुपक्रमे ॥ यंनत्वाकृतकृत्या स्युस्तन्नमामिगजाननम् ॥ गणाधिपंनमस्कृत्यनमस्कृत्यपितामहं ॥ विष्णुंरुद्रंश्रियंदेवींवंदेभक्त्यासरस्वतीम् ॥ स्थानक्षेत्रंनम-

स्कृत्वदिननाथंनिशाकरम् ॥ भरणीगर्भसंभूतंशशिपुत्रबृहस्पतिम् ॥ दैत्याचार्यंनमस्कृत्यसूर्यपुत्रंजनैश्चरं ॥ राहुकेतुंनमस्कृत्य
कर्मारंभेविशेषतः ॥ शक्रादिदेवताःसर्वाऋषींश्चैवतपोधनान् ॥ गर्भमुनिंनमस्कृत्यनारदंपर्वतंतथा ॥ वसिष्ठंमुनिशार्दूलं
विश्वामित्रंगोभिलं ॥ व्यासंकण्वंहृषीकेशंदेलंगोतमंकृपं ॥ अगस्त्यंचपुलस्त्यंचदक्षमित्रंपराशरं ॥ भरद्वाजंचमांडव्यंयाज्ञ
वल्क्यंचगालवं ॥ अन्येविप्रास्तपोयुक्तावेदशास्त्रविचक्षणाः ॥ तान्सर्वान्प्रणिपत्याहमेतत्कर्मसमारभे ॥ पीतांबरधरंविष्णुं
शशिवर्णंचतुर्भुजं ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥ अग्रतःश्रीनृसिंहश्चपृष्ठतोदेवकीसुतः ॥ उभयोःपार्श्वयोर्देवौभ्रातरौ
रामलक्ष्मणौ ॥ लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः ॥ येषामिंदीवरश्यामोहृदयस्थोजनार्दनः ॥ तदेवलग्नंसुदिनंतदेवता
राबलंचंद्रबलंतदेव ॥ विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेंघ्रियुगंस्मरामि ॥ यत्रयोगीश्वरःकृष्णोयत्रपार्थोधनुर्धरः ॥ तत्रश्री
र्विजयोभूति र्ध्रुवानीतिर्मतिर्मम ॥ सर्वेष्वारंभकार्येषुत्रयस्त्रिभुवनेश्वराः ॥ देवादिशंतुनःसिद्धिंब्रह्मेशानजनार्दनाः ॥ सर्व
मंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते ॥ इतिश्लोकान्पठित्वा संकल्पकुर्यात् ॥ तत्रादौ
निर्विघ्नतासिध्यर्थंगणेशांबिकयोः पूजनमहंकरिष्यइतिएकोपक्षः । अथवाकरिष्यमाणामुककर्मांगत्वेनमंडपदेवता प्रतिष्ठां
स्वस्तिवाचनंमातृपूजनवसोर्द्धारामायुष्यजपंनांदि श्राद्धंचकरिष्यइति ॥ तत्रादौनिर्विघ्नतासि०इतिसर्वसंकल्पंकृत्वा प्रधान
संकल्पंकुर्यात ॥ इतिद्वितीयःपक्षः ॥ अत्रांतिमपक्षएवशिष्टैरादतःसएवात्रगृह्यते ॥ दक्षिणहस्तेसकुशंजलमादाय
ॐ३ इहपृथिव्यांजंबूद्वीपे भारतेवर्षे कुमारिकाक्षेत्रे र्यावर्त्तांतर्गतब्रह्मावर्त्तैकदेशेरेवाया उत्तरतीरे इत्यादिदेशमुच्चार्य ॐ३
ब्रह्मणोद्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वंतरेऽष्टाविंशति तमस्यकलियुगस्य प्रथमचरणेश्रीमद्विष्णोर्बौद्धाव-
तारेऽमुकसंवत्सरे ऽमुकयोगेऽमुकऋतौ ऽमुकमासेऽमुकपक्षे ऽमुकतिथौवमुकवासरे ऽमुकनक्षत्रे ऽमुकयोगेऽमुक करणेऽमुकराशि
स्थेचंद्रेऽमुकराशिस्थेसूर्ये ऽमुकराशिस्थेदेवगुरौशेषेषुग्रहेषु यथास्थानस्थितेषु सत्सुएवंग्रहादिगणविशिष्टेपुण्येकाले देशेच
करिष्यमाणामुककर्मणोनिर्विघ्नतासिध्यर्थं गणेशांबिकयोःस्थापनपूजनमहंकरिष्येइतिसंकल्प्य गणेशांबिकयोःपूजनंकुर्यात् ॥
तदुक्तंस्कांदे ॥ योनैमांगल्यकर्मादौगणेशांबिकयोर्यजेत् ॥ द्वेष्यभावंनकुरुतेगृहेतस्यापिमंगलमितिस्कांदवचनात्गणेशां-





बिकयोःपूजनंकार्यमितिनागरखंडोक्तपक्षोमुख्यः ॥ श्रीपर्ण्यादिप्रशस्तदारुमयेपीठेरक्तवस्त्रंप्रसार्यतदुपरिरक्ताक्षतैरष्टदलंपद्मं
कृत्वातत्ररक्ताक्षतैर्गणेशांबिकेस्थापयेत् ॥ ब्रह्मजज्ञानंवेनोबृहस्पतिब्रह्मात्रिष्टुप्कर्मारंभणीयमंत्रजपेविनियोगः ॥ ॐब्रह्म
जज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ इतिपठित्वाहस्ते
अक्षतान् गृहीत्वा गणेशांबिकेआवाहयेत् ॥ निर्लक्ष्म्यमितिद्रविणोदाविनायकोऽनुष्टुप्गणेशावाहनेविनियोगः ॥
ॐभूर्भुवः स्वर्जनदो ॥ ॐनिर्लक्ष्म्यंललाम्यं३निररातिंसुवामसि ॥ अथयाभद्रतानिनः प्रजायाअरातिंनयामसि श्री
महागणपतयेनमः ॥ गणपतिंआवाहयामिस्थापयामि ॥ पृतनाजितमथर्वांबिकात्रिष्टुप्अंबिकावाहनेविनियोगः ॥ ॐ
पृतनाजितंसहमानमग्निमुक्थैर्हवामहेपरमात्सधस्थात् ॥ सनः पर्षदति दुर्गाणिविश्वाक्षामदेवोतिदुरितात्यग्निः ॥ ॐभूर्भुवः
स्वर्जनदो अंबिकाआवाहयामिस्थापयामि ॥ तदस्त्वित्यात्रेयोप्रतिरथोविश्वेदेवास्त्रिष्टुप्। प्रतिष्ठापने विनियोगः ॥
ॐतदस्तुमित्रावरुणातदग्नेशंयो रस्मभ्यमिदमस्तुशस्तम् ॥ अशीमहिगाधमुतप्रतिष्ठांनमोदेवे बृहतेसादनायेति गणेशः
सुप्रतिष्ठितोवरदो भवेतिगणेशंप्रतिष्ठाप्यपुनःप्रतिष्ठामंत्र मुच्चार्यांबिकासुप्रतिष्ठिता वरदाभवत्वित्यंबिकांप्रतिष्ठापयेत ॥
अथवाप्रतिष्ठामंत्रमुच्चार्यगणेशांबिकेसुप्रतिष्ठिते भवेतामित्यक्षतैस्तंत्रेणप्रतिष्ठापयेत् ॥ ततआवाहनादिभिःषोडशोपचारैः
पदार्थानुसमयेकांडानुसमयेनवापूजयेत् ॥ निर्लक्ष्म्ये तिमंत्रमुच्चार्यसांगायसवाहनायसपरिवाराय गणेशायनमःआसनं
समर्पयामीतिगणपतये आसनंदत्वा पृतनाजितेतिमंत्रमुच्चार्य सांगायै सायुधायैसपरिवारायै अंबिकायैनमःआसनंसमर्प-
यामीतिआसनंदद्यात् ॥ ततआसनदानवत्पयोमुच्चार्य पाद्यार्घ्याचमनीयस्नानाचमनीयवस्त्राचमनीययज्ञोपवीतगंधपुष्प
धूपदीपनैवेद्याचमनीयतांबूलप्रणामप्रदक्षिणादक्षिणानीराजनांतैरुपचारैःपूजयेत् ॥ अथवागंधपुष्पधूपदीपनैवेद्याचमनीयकै
रुपचारैःपंचोपचारैःपूजयेत् ॥ ततोऽर्घपात्रेगंधपुष्प दुर्वाक्षतानिक्षिप्यतत्रनालिकेरंवासंस्थाप्य। पत्रंपुष्पंफलंतोयंरत्नानि
विविधानीच ॥ गृहाणार्घ्यंमयादत्तंदेहिमेवांछितंफलम् ॥ फलेनफलितसर्वंत्रैलोक्यंसचराचरं ॥ फलस्यार्घप्रदानेनसफलाश्च

मनोरथाःरूपंदेहिजयंदेहिभाग्यंभगवान्देहिमे॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमेइतिसांगाय०नमःअर्घ्यंसमर्पयामीति गणपतयेऽर्घ्यंदत्वांबिकायैदद्यात्पत्रंपुष्पभाग्यंभगवतिदेहिमेइतिसांगायैसपरिवारायैअंबिकायैपूर्वोक्तमंत्रे रर्घ्यंसमर्पयामी त्यंबिकायैअर्घ्यंदद्यात् ॥ततोनिर्लक्ष्म्यंललाम्यंपृतनाजितमितिद्वाभ्यांमंत्राभ्यामुभयोःपुष्पांजलिंदत्वाकृतांजलि आतुनेंद्रो भृगुर्गणपतिर्गायत्रीगणपतिप्रार्थनेविनियोगः ॥ आतूनइंद्रक्षुमंतंचित्रंग्राभंसंगृभायमहाहस्तीदक्षिणेन ॥ वक्रतुंडमहाकाय कोटिसूर्यसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ सर्वमंगलेतिद्वाभ्यांमंत्राभ्यां तेप्रार्थ्यंउभयोःसूक्तंपठेत्॥तद्यथा॥ ॐनिर्लक्ष्म्यंललाम्यं ३ निरारातिंसुवामसि ॥ अथयाभद्रातानि नःप्रजाया अरातिंनयामसि ॥ १ ॥ निररणिं सविता सा विषक्यद्दोर्निर्हस्तयोर्वरुणोमित्रोअर्यमा ॥ निरस्मभ्यमनुमतीरराणा प्रेमांदेवा असाविषुःसौभगाय ॥ २ ॥ यतआत्मनि तन्वांघोरमस्तियद्वाकेशेषुप्रतिचक्षणेवा ॥ सर्वंतद्वाचापहन्मोवयंदेवस्त्वासवितासुदयतु ॥३॥ रिष्पदीवृषदतीगोषेधीं विधमामुत ॥ विलीढ्यंललाम्यं३ताअस्मिन्नाशयामसि । ४ इति गणपति सूक्तं पृतनाजीत मिति अंबिकासूक्तंचपठेत्॥ तद्यथा ॥ पृतनाजितं सहमानमग्निमुत्थैर्हवा महेपरमात्सधस्थात् ॥ सनः पर्षदतिदुर्गाणि विश्वाक्षामदेवोति दुरिता त्यग्निः ॥१॥ इदंयत्कृष्णः शकुनिरभिनिष्पतन्नपीपतत् ॥ आपोमातस्मात्सर्वस्मादुरितात्पात्वंहसः ॥२॥ इदंयत्कृष्णुः शकुनिरवामृक्षन्निर्ऋते तेमुखेन ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतु ॥ ३ ॥ प्रतीचीनफलोहित्वमपामार्गरुरोहिथ ॥ सर्वान्मच्छपथांअधीवरी । योयावयाइतः ॥४॥ यद्दुःकृतंयच्छमलंयद्वाचेरिमपापया ॥ तयात्वंविश्वतोमुखापामार्गापमृज्महे ॥ ५ ॥ श्यावदंताकुनखिनाबंडेनयत्सहासिम ॥ अपामार्गत्वयावयंसर्वंतदपमृज्महे ॥ ६ ॥ यदंतरिक्षेयदिवातआसय । दिवृक्षेषुयदिवोलपेषु ॥ यदस्रवन्पशवउद्यमानंतद्ब्राह्मणंपुनरस्मानुनैतु ॥ ७॥ पुनर्मैत्विंद्रियंपुनरात्माद्रविणंब्राह्मणंच॥ पुनरग्नयोधिष्ण्यायथास्थाकल्पयंतामिहैव ॥ ८ ॥ सरस्वतित्रतेषुतेदिव्येषुदेविधामसु ॥ जुषस्वहव्यमागाहुतंप्रजांदेवि





रराास्वनः ॥ ९ ॥ इदंतेहव्यंघृतवत्सरस्वतीदंपितृणांहविरास्यं१यत् ॥ इमानितउदिताशंतमानितेभिर्वयंमधुमंतःस्याम ॥ १० ॥ इतिअंबिकासूक्तं ॥ अत्राद्य० तिथौअमुककर्मणोनिर्विघ्नार्थंश्रीगणेशांबिकयोः स्थापनपूजनादिकृतस्यविधेः सर्वंपरिपूर्णमस्तु॥ गृहेवृद्धिशतानिभवंतु॥ उत्तरकर्मण्यविघ्नमस्तु ॥ ॐयस्मात्कोशाब्रह्मापरमात्मात्रिष्टुप् कर्मसमापनीय मंत्रजपेविनियोगः ॥ यस्मात्कोशादुद्भरामवेदंतस्मिनंतरवद्ध्म ॥ एनंकृतमिष्टंब्रह्मणोवीर्येणतेनमादेवातपसावतेह ॥ इतिकृतंकर्मेश्वरार्पणंकुर्यात ॥ ॥ इतीश्रीमदथर्वगृह्यसूत्र प्रयोगभानौषट्पञ्चाग्नेर द्विवेदिधीरजरामात्मज रविशंकरकृते गणपतिपूजनप्रयोगरश्मिःप्रथमः ॥ ॥ अथाभ्युदयिकश्राद्धनिर्णयरश्मिः ॥ तत्राथर्वांगिरसकल्पे ॥ कन्यापुत्रविवाहेषु प्रवेशेनववेश्मनः ॥ शुभकर्मणिबालानांचूडाकर्मादिकेतथा ॥ सीमंतोन्नयनेचैवपुत्रादिमुखदर्शने ॥ यज्ञोद्वाहप्रतिष्ठासु मेखलाबंधमोक्षयोः ॥ पुत्रजन्मवृषोत्सर्गेवृद्धिश्राद्धंसमाचरेदित्युक्तत्वात॥ अतएववैदिकमांगल्येषुदर्शपूर्णमासादिषुचकर्म सुकर्तव्यमेत्यर्थः ॥ सूत्रकारः ॥ आभ्युदयिकेप्रदक्षिणमुपचारः ॥ अभ्युदयोवृद्धिस्तदर्थं श्राद्धंयत्तदाभ्युदयिकमिति ॥ पूर्वाह्णेपित्र्यंमंत्रवर्जंजपःऋजवोदर्भायवैस्तिलार्थाः ॥ सपन्नमितितृप्तिप्रश्नः ॥ सुसंपन्नमित्यनुज्ञातोदधिबदराक्षतपिंडाः ॥ नम्वधांप्रयुंजीत ॥ नांदिमुखान्पितृन्मातृपूर्वान् पितृन्प्रपूज्यततोमातामहानपि ॥ मातामहस्तथाकेचिद्युग्माभोज्या द्विजाअपिइतिद्वादशदैवतस्य देशाचाराव्यवस्थानतुसर्वत्रेति ॥ ब्रह्मवेदीनांप्रपितामहाद्यारभ्य पितृपर्यंतंयजनक्रमोक्तः कौशिकसूत्रकारेण ॥ प्रपितामहपितामहपितासपत्निकाइत्युक्तत्वात् । अतएवतन्निमित्तान्याह ॥ संस्काराणांचसर्वे षाम.रंभेश्राद्धमिष्यतइति ॥ अष्टकासुतथाश्राद्धेश्राद्धाभावानततुपुनः ॥ अतएवगर्भाधानादिसंस्काराणांप्रारंभेनांदीमुखं भवतीत्यर्थः ॥ एवंस्मार्ताधानादवपि ॥ श्रौताधानादीनामपि संस्कारेषुपरिगणितत्वेनतेष्वपि भवतीत्यर्थः ॥ अग्नि शांतंपशांतौ ॥ होमश्रौतातिदेशतः ॥ अतोयंस्यादुपचयः श्रौतानामेवसंस्कृताविति॥ संस्कारत्वेसर्वत्रप्राप्तौकचिन्निषेध माह ॥ अष्टकादौश्राद्धादौचाभ्युदयिकंनभवति ॥ अष्टकादिव्यतिरिक्तसंस्कारांतर्गतत्वात्पिंडपितृयज्ञेभवति ॥ तदुक्तं गदाधरभाष्ये ॥ पिंडपितृयज्ञेप्याभ्युदयिकंभवतीति ॥ अन्येतुपिंडपितृयज्ञस्यश्राद्धतुल्यत्वान्नभवतीत्याहुः ॥ एवं

शास्त्रार्थविचारेणापिवापिकूपतडागदेवतायतनान्नप्रदानारामेषुकाम्यवृषोत्सर्गेराज्याभिषेके आश्रमग्रहणेनूतनगृहप्रवेशे तुलापुरुषदानायुतलक्षकोटिहोमादिग्रहयज्ञेमहारुद्र शतचंड्यादौतीर्थयात्राप्रारंभेचाभ्युदयकंभवतीतिसिद्धं ॥ अथाधिकारीनिर्णयःकथ्यते ॥ ॥ तत्रकर्त्राकांक्षयाकात्यायनः ॥ स्वपितृभ्यःपितादद्यात्सुतसंस्कार कर्मसुपिंडानोद्वहनात्तेषां तस्याभावेतुतत्क्रमादितिसुतसंस्कारेषु उद्वहनात्प्रथमविवाहमभिव्याप्यपितास्वपितृभ्यः पिंडान्दद्यात् पिंडदानोपलक्षितं वृद्धिश्राद्धंकुर्यात् ॥ इत्यर्थः ॥ द्वितीयादिविवाहेषुपुत्रः स्वयमेवकुर्यात् ॥ तदुक्तंनांदिश्राद्धंपिताकुर्यादाद्येपाणिग्रहेपुनः। अतऊर्ध्वंसुतःकुर्यात्स्वयमेवतु नांदिकमिति ॥ तस्यपितुरभावेयः पितृव्यमातुलादिः संस्कुर्यात्सतत्क्रमात्संस्कार्यपितृक्रमाद्दद्यान्नतुस्वपितृभ्यइतिहेमाद्रिः ॥ तस्यपितुरभावेनेक्रमात् ॥ असंस्कृतास्तुसंस्कार्या भ्रातृभिःपूर्वसंस्कृतैरितियःकर्तृक्रमपितृक्रमेणज्येष्ठभ्रातादिर्दद्यादित्यन्ये पितुरभावोद्विविधः॥ मरणेनप्रवासादिनावा ॥ समावर्तनस्यापिविवाहात्प्राचीनसुतसंस्कारत्वात्तत्रापिनांदिश्राद्धंपिताकुर्यात् ॥ तदभावेज्येष्ठभ्रात्रादिः। तदभावेस्वयमेवकुर्यात् ॥ उपनयनेनाधिकारस्यजातत्वात् ॥ एवमाद्यविवाहेपि ॥ यदातुपितरिसंन्यस्तेप्रोषितेपतितेवाधर्मार्थितत्पुत्रादन्यःसंस्कुर्यात्तदापि संस्कार्यपितुः पुत्रादिभ्योदद्यात् ॥ पितरोजनकस्येन्याज्यवद्व्रतसमाहितं ॥ सम हितव्रतः पश्चात्स्वान्यजेतपितामहानितियमोक्तेः ॥ जीवत्पितृकस्यविशेषमाहकात्यायनः ॥ वृद्धौतीर्थेचसंन्यस्तेताते चपतितेसति ॥ येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतइति ॥ अत्रतातेसतिइतिवृद्धितीर्थसन्यस्तपतितपदैःसंबध्यते ॥ तत्रापिवृद्धौतीर्थेचेत्याद्याभ्यांवैय्यधिकरण्येन ॥ संन्यस्तपतितपदाभ्यांसामानाधिकरण्येन ॥ येभ्यएवेत्येवकारेणमृतमातृमातामहादिपिपितृमातृभ्यपितृपितृभ्यःपितृमातामहेभ्यएवंदद्यात् ॥ नतुस्वीयमातृमातामहादिभ्यः ॥ पितामहप्रपितामहयोर्जीवनेविशेषउक्तः विष्णुस्मृतौ ॥ पितरिजीवतियः श्राद्धंकुर्यात्सयेषांपिताकुर्यात्तेषांकुर्यात्पितरि पितामहेचयेषांपितामहःपितरिपितामहेप्रपितामहेचनैवदद्यादिति ॥ तत्रमात्रादयोपितामहस्यैव ॥ मातरिजीवत्यांतत्पार्वणलोपः ॥ मातामहेजीवतितत्पार्वणलोपः ॥ जीवेच्चयदिवर्गाद्यस्तंवर्गंतुपरित्यजेदितिवचनात् ॥ अत्रेददेवतानिर्णयः ॥ अजीवत्पितृमातामहःपितास्वपित्राद्युद्देश्यकं





पार्वणत्रयंकुर्यात् ॥ मातर्यत्रजीवंत्यांतत्पार्वणलोपः ॥ मातामहेएवजीवतितत्पार्वणलोपः ॥ तदापार्वणद्वयेनैवनांदिश्राद्धस्यसिद्धिः ॥ मातृमातामहजीवने पितृपार्वणेनैवतत्सिद्धिः ॥ अजीवत्पितृपितामहोजीवत्पितामहः ॥ पितृप्रपितामहतत्तदुद्दिश्यपितृपार्वणंकुर्यात् ॥ पितुःपितुःपितामह प्रपितामहौचनांदिमुखाएवंप्रयोगः ॥ एवंप्रपितामहमातृजीवनेपि पितृपितामहतत्पितामहानुद्दिश्यतत्कुर्यात् ॥ पितृपितामहौपितुःप्रपितामहश्चनांदिमुखाइति ॥ पितामहप्रपितामहयोरेवजीवनेपितरंपितामहस्य पितामहप्रपितामहौचोद्दिश्यतत्कुर्यात् ॥ पितुःपितामहस्यपितामहप्रपितामहौचनांदिमुखाइति एवमजीवन्मातृप्रपितामहीपार्वणेप्रयोगः ॥ प्रपितामहीमातृजीवनेमातृपितामहौपितुःप्रपितामहीचनांदिमुखाइति ॥ इदंचपितामहीप्रपितामह्योसपत्न्यंमृतयोर्दिवनात्वसंभवेनताभ्यांसहैवपार्वणंकार्यं ॥ एवंमातामहपार्वणेमुख्यमातामह्यादिजीवतितत्सपत्नीभिःसपत्नीकत्वगुणोपपत्तिः ॥ नतुसपत्नमातृपार्वणनिर्वाहः ॥ परिशिष्टविरोधात् ॥ एवमजीवन्मातामहस्यमातुःपितामहजीवने ॥ मातामहतत्पितामहप्रपितामहौचनांदिमुखाइति ॥ ततस्तयोरुभयोर्जीवनेमातामहस्तत्पितामहवृद्धप्रपितामहौचनांदिमुखाइतिप्रयोगः ॥ एवंपितृव्यः ॥ २ ॥ मातुःप्रपितामहजीवनेमातामह मातुःपितामहस्यप्रपितामहश्चनांदिमुखाइति ॥ मातुलादिः ॥ कन्याविवाहंकुमारस्योपनयन मुपनीतस्यप्रथमविवाहंवाकुर्यात् तदासंस्कार्यस्याजीवत्पितृकत्वेतत्पित्रानुद्दिश्यपार्वणत्रयंकुर्यात् सोदरज्येष्ठभ्रातुः प्रयोगेन विशेषः ॥ तदपिपित्रादिना संस्कार्यपित्रादिभिरभेदात् ॥ सापत्न्यज्येष्ठस्तुमातृपार्वणे संस्कार्यस्यमातृपितामहीप्रपितामही इतिप्रयोगंकुर्यात् ॥ संस्कार्यस्यजीवत्पितृकत्वेसंस्कार्यपितुःपुत्रानुद्दिश्यपार्वणत्रयंकुर्यात् ॥ यदाचैककस्यशिशोर्जातकर्माद्यनेकसंस्काराएक काले क्रियंतेतदानांदिश्राद्धंतंत्रेणकार्यं ॥ तथाचकात्यायन गणशः ॥ क्रियमाणेषुमातृभ्यःपूजनंसकृत् ॥ सकृदेवभवेच्छ्राद्धमादौनपृथगादिति ॥ केचित्तु ॥ अनेक संस्कार्य विषयानेकसंस्काराणां सहानुष्ठानंयत्रननिषिद्धंतदंगनांदिश्राद्धीयदेवतानामभेदश्चात्रगणशः क्रियमाणानामेकंस्यान्मातृपूजनम् ॥ वृद्धिश्राद्धंतुतंत्रंस्याद्धोमस्तुस्यात्पृथक्पृथगितिस्मृत्यर्थसारवचनानुसारितंत्रानुष्ठानंबोद्धव्यमित्याहुः ॥ तच्चश्राद्धंद्विधा ॥ सपिंडकेनिरग्निकैर्नागरैरग्नौकरणन

कार्यम् ॥ तदुक्तंनागरखंडे । अनग्निरग्नौकरणंक्षयाहेपार्वणंतथा ॥ भस्मनाकृतमर्यादोनागरोयात्यधोगतिमितिवचनात्॥ एवंसपिंडकमभ्युदयिकंकुर्यात् ॥ अथवासंकल्पात्मकंनांदिमुखंकुर्यात् ॥ तत्रप्रयोगेवक्ष्यामः ॥ अथक्रमप्राप्तोमातृपूजन निर्णयः ॥ तत्रकात्यायनः ॥ सकलमंगलकर्मप्रारंभेषुसगणाधिपामातरःपूज्याः ॥ ताःकुत्रकथंपूज्याइत्यतआह ॥ सएव ॥ प्रतिमासुचशुभ्रासुलिखित्वावापटादिषु ॥ अपिवाक्षतपुंजेषुनैवेद्यैश्चपृथग्विधैरिति ॥ शुभ्रासुस्फटिकरजतादि मूर्त्तिषुवस्त्रकुडयादिषुलिखिता सुमूर्त्तिषुवायवपुंजेषुवाबहुप्रकारैर्गंध पुष्पधूपाक्षतादिभिःपूजनीयाःताःकाइत्याकांक्षायांस एवाह ॥ गौरींचकुमुदांचैवमाधवींरुद्रवल्लभां ॥ उमांचपार्वतीकालींसरस्वतींप्रपूजयेत् ॥ सावित्रींचसतींसंज्ञांमेधांतुष्टिं तथैवच ॥ पुष्टिंसंजिवीनीप्रोक्तामायुधामभयंकरीं॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराहीचतथैंद्राणीचामुंडा सप्तमातरः ॥ दुर्गागणपतिश्चैवक्षेत्रपोवास्तुपस्तथा ॥ वृद्धौपूज्याविशेषेणपिप्पलाद प्रकीर्त्तिताइति ॥ अत्रआदौ विनायकः पूज्योअंतेचकुलदेवताइतिवह्वृचपरिशिष्टादौ विनायकपूजनमुक्तं ॥ एतासांपूजनंतुनांदिश्राद्धात्पुर्वकाले कर्त्तव्यम् तदुक्तंकात्यायनेन ॥ अनिष्ट्वातुपितॄन्श्राद्धेवैदिकंनारभेत्स्मृतेः तत्रापिमातरःपूर्वंपूजनीयाप्रयत्नतइति ॥ एवं मातृपूजनोत्तरंवसोर्द्धारामायुष्यजपंचाहसएव ॥ कुडयलग्नांवसोर्द्धारांसप्तधारांघृतेनतु ॥ कारयेत्पंचधारांवानातिनी चांनचोच्छ्रितां ॥ आयुष्याणिचशांत्यर्थंजप्त्वातत्रसमाहितः ॥ षडभ्यःपितृभ्यस्तदनुभक्त्याश्राद्धमुपक्रमेदिति ॥ वसोर्द्धारा स्थलमप्युक्तमभियुक्तैः ॥ गृहनिर्गमयामेचवसोर्द्धाराचवेदिका ॥ कार्याविवाहेविद्वद्भिर्गृहेवैपूर्वदक्षिणे ॥ गृहेवैपश्चिम द्वारे तथाउत्तरएवच ॥ वेदिकाचवसोर्द्धारागृहनिर्गमदक्षिणइति ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागर द्विवेदिरविशंकरकृतेआभ्युदयिकनिर्णयरश्मिद्वितीयः ॥ २ ॥ अथप्रयोगः ॥ अथगृहीतकुशयवकुसुमपाणिर्यजमान ॐइहपृथिव्यामित्यादिदेशकालाद्युच्चार्यकरिष्यमाणकर्मांगत्वेनमातृपूजांकरिष्यइतिसंकल्पः ॥ ब्रह्मजज्ञानं०॥ अव्यंसश्चे तिजपः ॥ रक्तवस्त्रास्तृतेपीठेयवपुंजेषुवागौर्यादिमातरः दक्षिणोपक्रमाउदगपवर्गाः प्रत्यगुपक्रमाःप्रागपवर्गावासंस्थाप्य प्रतिष्ठाप्यपूजयेत् ॥ तद्यथा ॥ ॐकारस्यानुक्तगोत्रोब्रह्मापरमात्मादेवीगायत्रीभूर्वाबृहस्पत्योभरद्वाजोऽग्नीर्गायत्रीभुवः





कश्यपोमारीचोवायुरुष्णिक्स्वर्गौतमोराहूगणः सूर्योनुष्टुप्गणेशपूर्वकगौर्यादिस्थापनेविनियोगः ॥ ॐभूर्भुवःस्वर्जनदों गणपतिंस्थापयामि ॥ १ ॥ ॐभू० गौरींस्थापयामि ॥२ ॥ ॐभू०कुमुदांस्था० ॥ ३ ॥ ॐभू०माधवींस्था० ॥ ४ ॥ ॐभू०रुद्रवल्लभांस्था० ॥ ५ ॥ ॐभू०उमांआ० ॥६॥ ॐभू०पार्वतींआ० ॥ ७॥ ॐभू०कालींआ० ॥८॥ ॐभू० सरस्वतींआ० ॥९॥ ॐभू०सावित्रींआ० ॥१०॥ ॐभू०सतींआ० ॥११॥ ॐभू०संज्ञांआ० ॥१२॥ ॐभू०मेधांआ० ॥१३॥ ॐभू०तुष्टिंआ० ॥१४॥ ॐभू०पुष्टिंआ० ॥१५॥ ॐभू०संजीविनींआ०॥१६॥ ॐभू०आयुधामभयंकरींआ० ॥१७॥ ॐभू०कुलदेवींआ० ॥१८॥ ॐभू०ब्राह्मींआ० ॥१९॥ ॐभू०माहेश्वरींआ० ॥२०॥ ॐभू०कौमारींआ०॥२१॥ ॐभू०वैष्णवींआ० ॥२२॥ ॐभू०वाराहींआ० ॥२३॥ ॐभू०इंद्राणींआ० ॥ २४॥ ॐभू०चामुंडांआ० ॥२५॥ ॐभू०दुर्गांआ० ॥२६॥ ॐभू०क्षेत्रपालंआ० ॥२७॥ ॐभू०वास्तोष्पतिंआ० ॥२८ ॥ अत्रकेचित्तुगौरीन्मिमायेति स्थापनंकुर्वंतितन्निर्मूलं ॥ पूज्याश्चित्रेथवार्चायांवरदाभयपाणयः व्याहृत्यावाह्यस्ताः सर्वारितिभविष्य पुराणेस्पष्टमुक्तं ततःप्रतिष्ठा ॥ तदस्त्वित्यात्रेयत्प्रतिरथोविश्वेदेवास्त्रिष्टुप्प्रतिष्ठापनेविनियोगः ॥ ॐतदस्तुमित्रावरुणातदग्नेशंय्योरस्मभ्यं मिदमस्तुशस्तम् ॥ अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय ॥ १ ॥ इतिमंत्रेणगणेशःप्रतिष्ठितोभवतु ॥ गौरी सुप्रतिष्ठिताभवतु इतिपृथक्२प्रतिष्ठापयेत् ॥ अथवाप्रतिष्ठामंत्रंपठित्वा ॥ गौर्यादयःसुप्रतिष्ठिताभवंत्वितितंत्रणप्रतिष्ठापये दितिततःआवाहनादिभिः पूर्वोक्तैःषोडशोपचारैःपंचभिरुपचारैर्वाकांडानुसमयेन पदार्थानुसमयेनयथाविभवंपूजयेत् ॥ तद्यथा ॥ ॐगणपतयेनमः आसनंसमर्पयामि ॥ एवमासनादिनीराजनांतंसमाप्य ॥ गौरीपूजनंकुर्यात् ॥ एवमन्यासा मपि ॥ अयंकांडानुसमयः ॥ अथवागणपतयेरावाहनंकृत्वागौर्यादीनामावाहनं ॥ गणेशायआसनंदत्वागौर्यादीना मासनं ॥ अयंपदार्थानुसमयः ॥ इदंपक्षद्वयंसमीचीनमतोयथारुच्यनुष्ठेयम् ॥ द्वितीयपक्षेपिधूपदीपादिसर्वेउपचाराः पृथगर्पणीयाः ॥ पूजनेत्वयंप्रयोगः ॥ गणेशपूर्वकगौर्यादिमातृभ्योनमः आवाहनंसमर्पयामीत्यादि॥ अत्राप्युपचाराः पृथक्पृथक्सर्वत्रगुग्गुलधूपोघृतदीपश्च ॥ ततोविशेषार्घः ॥ आयुरारोग्यमैश्वर्यंददध्वंमातरोमम ॥ निर्विघ्नंसर्वकार्येषु

कुरुध्वंसगणाधिपाः ॥ इतिमंत्रमुच्चार्यनालिकेरादिफलंसमर्पयेत् ॥ ॐगौरिन्मिमायसलिलानितक्षत्येकंपदीद्विपदीसा चतुष्पदी ॥ अष्टापदीनवपदीवभूवुषीसहस्राक्षराभुवनस्यपंक्तिस्तस्या समुद्राअधिविक्षरंति ॥ १ ॥ ॐभूर्भुवःस्वर्जनदों गणेशपूर्वकगौर्यादिमातृभ्योनमः मंत्रपुष्पांजलिंसमर्पयामि ॥ ततःकृतांजलिःसन्गौरिन्मिमायेतिसूक्तंपठेत् ॥ तद्यथा॥ गौरिन्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदोबभूवुषीसहस्राक्षराभुवनस्यपंक्तिस्तस्याः समुद्राअधिविक्षरंति ॥ १ ॥ कृष्णन्नियानं हरयःसुपर्णाअपोवसानादिवमुत्पतन्ति ॥ तावव्वृत्रन्त्सदनादृतस्यादिद्घृतेनं पृथिवींव्यूऽदुः ॥ २ ॥ अपादेतिप्रथमापद्वतीनांकस्तद्वांमित्रावरुणाचिकेत ॥ तांगर्भोभारंभरत्याचिदस्याहृतंपिपर्त्यनृतं निपाति ॥ ३ ॥ विराडवाग्विराट्पृथिवीविराडंतरिक्षंविराट्प्रजापतिः ॥ विराण्मृत्युःसाध्यानामधिराजोवभूवतस्यंभूतं भव्यंवशेसमेभूतं भव्यंवशेकृणोतु ॥ ४ ॥ शकमयंधूममारादपश्यंविषूवतापरएनावरेण ॥ उक्षाणंपृश्निमपचतवीरा- स्तानिधर्माणिप्रथमान्यासन् ॥ ५ ॥ त्रयःकेशिनऋतुथाविचक्षतेसंवत्सरेवपतएकएषाम् ॥ विश्वमन्योअभिचष्टेशचीभि र्ध्राजिरेकस्यददृशेनरूपम् ॥ ६ ॥ चत्वारिवाक्परिमितापदानितानिविदुर्ब्राह्मणायेमनीषिणः ॥ गुहात्रीणिनिहितानें गयंतितुरीयंवाचोमनुष्याऽवदंति ॥ ७ ॥ इंद्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मान् ॥ एकंसद्विप्रावहुधावदंत्य ग्निंयमंमातरिश्वानमाहुः ॥ ८ ॥ इतिसूक्तंपठित्वाततः गणेशपूर्वकगौर्यादिमातृणांपूजन कर्मणोयन्न्यूनमतिरिक्तंवातत् सर्वंमातृणांप्रसादात्परिपूर्णमस्तु ॥ गृहेवृद्धिशतानिभवंतु ॥ उत्तरेकर्मण्यविघ्नमस्तु ॥ यस्माक्कोशेतिमंत्रेणकर्मेश्वरार्पण मस्तु ॥ ॥ इतीश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकरकृतेमातृपूजनप्रयोगरश्मिस्तृतीयः ॥ ३ ॥ ॥ अथवसोर्द्धाराप्रयोगः ॥ देशकालावुच्चार्यकरिष्यमाणामुक कर्मांगत्वेनवसोर्द्धारांकरिष्यइतिसंकल्पः ॥ ब्रह्मजज्ञान मितिमंत्रंपठेत् ॥ अव्यसश्चेति० ॥ पूर्वद्वारेचाभ्यंतरेगृहेसतिगृहनिर्गमतोवामेकुडचेपश्चिमद्वारे उत्तरद्वारेचगृहेनिर्गमतो





दक्षिणेकुडयेघृतेनवादुग्धेनसप्तधाराः पंचधारावाप्राक्संस्थावाउदक्संस्थाप्रादेशमात्राः॥ अस्मिन्वसुवसवोधारयंत्विंद्रः पूषवरुणोमित्रोअग्निः ॥ इममादित्याउतविश्वेचदेवाः उत्तरस्मिन्ज्योतिषिधारयंत्विति मंत्रेणकुर्यात् ॥ ततोवसोर्द्धारा मंत्रेणधाराणामूर्ध्वभागेएकीकरणं॥ ॐसहस्रधारंशतधारमुत्समक्षितंव्यच्यमानंसलिलस्यपृष्ठे॥ ॐऊर्जंदुहानमनपस्फुरंतमु पासतेपितरःस्वधाभिः ॥ अनेनताधाराऊर्ध्वभागेमिथःश्लिष्टाःकुर्यात् ॥ तदुपर्याचारात्कुंकुमेनविंदूनकृत्वा तत्रदेवता मावाहयेदक्षतैः ॥ तद्यथा ॥ श्रियैनमः श्रियम्आ० ॥१॥ लक्ष्म्यैनमः लक्ष्मीम्आ० ॥२॥ धृत्यैनमः धृतिम्आ० ॥३॥ स्वधायैनमः स्वधाम्आ० ॥४॥ स्वाहायैनमः स्वाहाम्आ० ॥५॥ प्रज्ञायैनमः प्रज्ञाम्आ० ॥६॥ सरस्वत्यैनमः सरस्वतीम्आ०॥७॥ पंचधारापक्षेप्रज्ञासरस्वत्योरभावः ॥ ततोतदस्त्विवतिप्रतिष्ठाप्यश्रियादिवसोर्द्धारा देवताभ्योनमः इतिमंत्रेणवा पृथक्पृथक्पूर्ववदुपचारैःपूजयेत् ॥ पूजनांतेकृतांजलिः सन्वसोर्द्धारामितिवसोर्द्धारासूक्तंपठेत् ॥तद्यथा॥ वसोर्याधारामधुनाप्रपीनाघृतेनमिश्राअमृतस्यनाभयः सर्वास्ताअवरुंधेस्वर्गःषष्ट्यांशरत्सुनिधिपाअभिछात् ॥१॥ निधिं निधिपाअभ्येनमिछादनीश्वराअभितःसंतुयेऽन्ये ॥ अस्माभिर्दत्तोनिहितःस्वर्गस्त्रिभिःकांडैस्त्रीन्स्वर्गानरुक्षत् ॥ २ ॥ अग्निरक्षस्तपतुयद्विदेवंक्रव्यात्पिशाचइहमाप्रपास्त ॥ नुदामएनमपरुध्मोअस्मदादित्याएनमंगिरसःसचंताम् ॥ ३ ॥ आदित्येभ्योअंगिरोभ्योमध्विदंघृतेनमिश्रंप्रति वेदयामि ॥ शुद्धहस्तोब्राह्मणस्यानिहत्यैनंस्वर्गंसुकृतावपीतम् ॥ ४ ॥ इदंप्रापमुत्तमंकांडमस्ययस्माल्लोकात्परमेष्ठीसमाप ॥ आसिंचसर्पिर्घृतवत्समंड्ध्येषभागोअंगिरसोनोअत्र ॥५॥ सत्याय चतपसेदेवताभ्योनिधिंशेवधिंपरिदद्मएतम् ॥ मानोद्यूतेवगान्मासमित्यामास्मान्यस्माउत्सृजतापुरामत्॥६॥ अहंपच। म्यहंददामिममेदुकर्मन्करुणेधिजाया॥ कौमारोलोकोअजनिष्टपुत्रोऽन्वारभेथांवयउत्तरावत्॥७॥ नकिल्विषमत्रनाधारो अस्तिनयन्मित्रैःसममममानएति ॥ अनूनंपात्रंनिहितनएतत्पक्तारंपक्वःपुनराविशति ॥ ८ ॥ प्रियंप्रियाणांकृणवामस्तेगं

तुयतमेद्विषंति ॥ धेनुरनड्वान्वयोवय आयदेवपौरुषेयमपमृत्युंनुदंतु ॥ ९ ॥ सम्प्रयोविदुरन्योअन्यो ओषधींस्सर्चतेयश्च
सिधुन् ॥ यावंतोदेवादिव्या३तपंतिहिरण्यंज्योतिःपचंतोबभूव ॥ १० ॥ इतिवसोर्द्धारासूक्तंपठित्वा ॥ ततःवसोर्द्धारा
देवतानांपूजनकर्मणोयन्न्यूनातिरिक्तंतत्सर्वंपरिपूर्णमस्तु ॥ गृहेवृद्धिशतानिभवंतु ॥ उत्तरकर्मण्यविघ्नमस्तु ॥ यस्मात्
कोशेति० ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पञ्चागरद्विवेदिधीरजरामौरसरत्वीशंकरकृतेवसोर्द्धाराप्रयोगरश्मि
श्चतुर्थः ॥ ॥ अथायुष्यजपप्रयोगरश्मिरारभ्यते ॥ देशकालाबुच्चार्यकरिष्यमाण.दः कर्मणोऽमंगलनाशनार्थं
ब्राह्मणद्वारा आयुष्यजपंकरिष्यइतिसंकल्पः ॥ ब्राह्मणहस्तेक्षतान्दत्वा ब्रह्मंजज्ञानं०॥ अन्यंसश्च० ॥ त्यमूष्वित्यथर्वा
पंक्तिःआयुष्यजपेविनियोगः ॥ ॐत्यमूषुवाजि०सूक्तं ॥ आरभस्वेत्यष्टाविंशत्दगात्मकाथर्वसूक्तस्यब्रह्मायुर्देवताष्टानुष्टुप्
चतस्रोबृहत्यः सप्तपंक्तयः षट्तिस्रोजगत्यःअस्यकर्मणोऽमंगलनाशनार्थंजपेविनियोगः ॥ ॐआरंभस्वेमामृतस्यश्नुष्टि
मच्छिद्यमानाजरदष्टिरस्तुते ॥ असुंतआयुःपुनराभरामिरजस्तमोमोपगामाप्रमेष्ठाः ॥ १ ॥ जीवतांज्योतिरभ्येह्यर्वाङात्वा
हरामिशतशारदाय ॥ अवमुंचन्मृत्युपाशानशस्तींद्राघीयआयुःप्रतरंतेदधामि ॥ २ ॥ वातातेप्राणमविदंसूर्याच्चक्षुरहंतव॥
यत्तेमनस्त्वयितद्धारयामि संविस्वांगैर्वदजिह्वयालपन ॥ ३ ॥ प्राणेनत्वाद्विपदांचतुष्पदामग्निमिवजातमभिसंधमामि ॥
नमस्तेमृत्योचक्षुषेनमः प्राणायतेकरं ॥ ४ ॥ अयंजीवतुमामृतेमसमीरयामसि ॥ कृणोम्यस्मैभेषजंमृत्योमापुरुषंवधिः
॥ ५॥ जीवलांनघारिषांजीवंतीमोषधीमहं ॥ त्रायमाणांसहमानां सहस्वतिमिहहुवेस्माअरिष्टतातये ॥ ६ ॥ अधिब्रूहि
शरभथाः सृजेमंतवैवसन्सर्वहायाइहास्तु ॥ भवाशर्वौमृडतंशर्मयच्छथमपसिध्यर्थंदुरितंधत्तमायुः ॥७॥ अस्मैमृत्योअधि
ब्रूहिमंदयस्वोदितो३यमेतु ॥ अरिष्टःसर्वांगःसुस्कुजरसांशतहायनआत्मनाभुजमश्नतां ॥ ८ ॥ देवानांहेतिःपरित्वा
वृणत्कुपारयामित्वारजसउत्वामृत्योरपीपरं ॥ आरादग्निंक्रव्यादंनिरूहंजीवातवेतेपरिधिंदधामि ॥९ ॥ यत्तेनियानंरज





संमृत्योअनवधर्ष्यं ॥ पथइमंतस्माद्रक्षंतोब्रह्मास्मैवर्मकृण्मसि ॥ १ ॥ कृणोमितेप्राणापानौजरामृत्युंदीर्घमायुःस्वस्ति
वैवस्वतेनप्रहितान्यमदूतांश्चरतोपसेधामिसर्वान ॥ ११ ॥ आरादरातिंनिर्ऋतिंपरोग्राहिंक्रव्यादःपिशाचान ॥ रक्षोय
त्सर्वंदुर्भूतंबत्तमइवापहन्मसि ॥१२॥ अग्नेष्टेप्राणममृता दायुष्मतोवन्वेजातवेदसः ॥ यथानरिष्याअमृतःसजूरसस्तत्ते
कृणोमितदुतेसमृध्यताम् ॥ १३ ॥ शिवेतेस्तांद्यावा पृथिवीअसंतापेअभिश्रियौ ॥ शंतेसूर्यआतपतुशंवातोवातुतेहृदे ॥
शिवाअभिरक्षंतुत्वापोदिव्याःपयस्वतीः ॥१४॥ शिवास्तेसंत्वोषधयःउत्वाहार्षमधरस्याउत्तरांपृथिवीमभि ॥ तत्रत्वादि
त्यौरक्षतांसूर्याचंद्रमसावुभा ॥ १५ ॥ यत्तेवासः परिधानंयानीविंकृणुषेत्वं ॥ शिवंतेतन्वे३तकृण्मः संस्पर्शेद्रूक्ष्णमस्तुते
॥१६॥ यत्क्षुरेणमर्चयंतासुतेजसावप्तावपसिकेशश्मश्रु ॥ शुभंमुखमानआयुःप्रमोषिः ॥ १७ ॥ शिवौतेस्तांव्रीहियवा
ववलासावदोमधौ ॥ एतौयक्ष्मंविबाधेतेएतौमुंचतोअंहसः ॥ १८ ॥ यदश्नासिपिबसिधान्यंकृष्याःपयः ॥ यदाद्यं१
यदनाद्यंसर्वंतेअन्नमविषंकृणोमि ॥ १९ ॥ अन्हेचत्वारात्रयेचोभाभ्यांपरिदद्मसि ॥ अरायेभ्योजिघत्सुभ्यइमंमेपरि
रक्षत ॥२०॥ शतंतेयुतंहायनान्द्वियुगेत्रिणिचत्वारिकृण्मः ॥ इंद्राग्नीविश्वेदेवास्तेनुमन्यंतामहृणीयमानाः ॥ २१ ॥ शरदे
त्वाहेमंतायवसंतायग्रीष्मायपरिदद्मसि ॥ वर्षाणितुभ्यंस्योनानियेषुवर्द्धंतओषधीः ॥ २२ ॥ मृत्युरीशेद्विपदांमृत्युरीशे
चतुष्पदम् ॥ तस्मात्वांमृत्योर्गोपतेरुद्भरामिसमाबिभेः ॥ २३ ॥ सोरिष्टनमरिष्यसिनमरिष्यसिमाबिभेः ॥ नवैतत्र
म्रियंतेनोयंत्यधमंतमः ॥२४॥ सर्वोवैतत्रजिवतिगौरश्वःपुरुषःपशुः ॥ यत्रेदंब्रह्मक्रियतेपरिधिर्जीवनायकम् ॥ २५ ॥
परित्वापातुसमानेभ्योभिचारात्सबंधुभ्यः ॥ अमम्रिर्भवामृतोतिजीवोमातेहासिपुरसंवःशरीरं ॥ २६ ॥ येमृत्यवएकंशतं
यनाष्ट्राअतितार्याः ॥ मुंचंतुतस्मात्वांदेवाअग्नेर्वैश्वानरादधिः ॥ २७ ॥ अग्नेःशरीरमसिपारयिष्णुरक्षोहासिसपत्नहा ॥

अथोअमीवचातनःपूतुदुर्नामभेषजं ॥ २८ ॥ अनेनसूक्तजपेनयजमानस्यकर्मण्यविघ्नमस्तु ॥ ॐशांतिः शांतिः शांतिः ॥ यस्मात्कोशेतिमंत्रेणकर्मसमापनम् ॥ ॥ इतीश्रीमदथर्वगृह्यसूत्रप्रयोगभानौपट्टपन्नागर द्विवेदिरविशंकरकृतेआयुष्य जपप्रयोगरश्मिःपंचम ॥ ५ ॥ ॥ अथनांदिश्राद्धम् ॥ तत्रपित्र्यमपिसर्वयज्ञोपवीतीप्राङ्मुखउदङ्मुखोवान्यकृत दक्षिणजानुप्रदक्षिणधर्मेणदेवतीर्थेनवैऋजुदर्भैश्चमातृपार्वणपूर्वकंपूर्वाह्णेकुर्यात् ॥ पूर्वाह्णःप्रहरःसार्धोमध्यान्हःप्रहरंतथा ॥ आतृतीयादपराह्णःसायान्हश्चततःपरिमितिगोभिलोक्तेः ॥ तच्चसपिंडकंकुर्यात् ॥ अथवासंकल्पश्राद्धंकुर्यात् ॥ अत्र चत्वारिपार्वणानित्रीणिवा ॥ तत्रप्रथमंमातृपार्वणंद्वितीयंपितृपार्वणं तृतीयंमातामहपार्वणं चतुर्थंमातामहीपार्वणम् ॥ पार्वणद्वयपक्षेसपत्नीकामातामहाः ॥ अथप्रयोगः ॥ कृतनित्यक्रियोयजमानः श्रीपर्ण्यादिदारुमयेउपविश्यजीवास्थे त्याचम्य ॥ ब्रह्मजज्ञानं० ॥ अव्यसश्च० ॥ सत्यवसुसंज्ञकाः विश्वेदेवाःनांदिमुखाः ॐभूर्भुवःस्वर्जनदेइदंवःपाद्यंवः स्वाहानमःइयंचवृद्धिः ॥ इतिसदूर्वाक्षितजलंपात्रेक्षिपेत् ॥ एवमग्रेपि ॥ प्रपितामहीपितामहीमातरःनांदिमुख्यः ॐभूर्भुवःस्वर्जनदेइदंवःपाद्यंस्वाहानमः इयंचवृद्धिः ॥ प्रपितामहपितामहपितरः ॐभूर्भुवःस्वर्जनदेइदंवःपाद्यंस्वाहा नमइयंचवृद्धिः ॥ मातुःप्रपितामहःपितामहमातामहाः नांदिमुखाःसपत्नीकाः ॐभूर्भुवःस्वर्जनदेइदंवःपाद्यंस्वाहानमइयं चवृद्धिः ॥ द्वि० ॥ देशकालौस्मृत्वा० अमुककर्मांगतयाविहितंसंकल्पविधिनानांदिश्राद्धंकरिष्ये ॥ सत्यवसुसंज्ञका विश्वेदेवानांदिमुखाः भूर्भुवःस्वर्जनदेइदंवःआसनगंधाद्युपचारकल्पनंस्वाहा नमइयंचवृद्धिः ॥ प्रपितामहीपितामही मातरःनांदिमुखाः भूर्भुवःस्वर्जनदेइदंवः आसनगंधाद्युपचारकल्पनंस्वाहा नमइयंचवृद्धिः ॥ प्रपितामहपितामहपितरः नांदिमुखा भूर्भुवःस्वर्जनदेइदंवः आसनगंधाद्युपचारकल्पनंस्वाहा नमइयंचवृद्धिः ॥ मातुःप्रपितामह मातुःपितामह मातामहाःपत्नीसहिताःनांदिमुखाः भूर्भुवःस्वर्जनदेइदंवःआसनगंधाद्युपचारकल्पनंस्वाहा नमइयंचवृद्धिः ॥ सत्यवसु संज्ञकाविश्वेदेवाः भूर्भुवःस्वर्जनदेइदंवःयुग्मब्राह्मणभोजनपर्याप्तमन्नंयथाशक्तिहिरण्यंवाअमृतरूपेणस्वाहासंपद्यतांवृद्धिः॥ गोत्राप्रपितामहीपितामहीमातृभ्यःनांदीमुखीभ्यः ॥ दास्यमानंब्राह्मणयुग्मभोजनपर्याप्तमन्नंयथाशक्तिहिरण्यंवाअमृत









रूपेणस्वाहा संपद्यतांवृद्धिः ॥ गोत्रेभ्यःप्रपितामहपितामहपितृभ्योनांदीमुखेभ्यः भू०दास्यमानंब्राह्मणयुग्मभोजनं पर्याप्तमन्नंयथाशक्तिहिरण्यंवाअमृतरूपेणस्वाहासंपद्यतांवृद्धिः ॥ गोत्रेभ्यःमातुःप्रपितामह मातुःपितामहमातामहेभ्यः पत्नीसहितेभ्यःनांदीमुखेभ्यः भू०दास्यमानंब्राह्मणयुग्मभोजनपर्याप्तमन्नं यथाशक्तिहिरण्यंवाअमृतरूपेणस्वाहासंपद्यतां वृद्धिः ॥ ॐस्वस्तिमात्रउतपित्रेनोअस्तु स्वस्तिगोभ्योजगतेपूरुषेभ्यः ॥ विश्वंसुभूतंसुविदत्रंनोअस्तु ज्योगेवदृशेमसूर्यं अनेननांदीश्राद्धांगब्राह्मणभोजनेन नांदीश्राद्धांगदेवताःप्रीयंतांवृद्धिः ॥ नांदीश्राद्धंसंपन्नंसुसंपन्नंसप्रोक्षितमस्तुशिवाः आपःसंतु ॥ नांदिमुखाःमातरः प्रीयंताम् ॥ नांदिमुखाःपितरःप्रीयंताम् ॥ नांदिमुखा मातामहाः प्रीयंताम् ॥ ततोप्रार्थयेत् ॥ अघोराःपितरःसंतु ॥ गोत्रंनोवर्द्धताम् ॥ दातारोनोभिवर्द्धताम् ॥ वेदाश्चनोभिवर्द्धताम् ॥ श्रद्धाच नोमाविगमत् ॥ बहुदेयंचनोस्तु ॥ अन्नंचनोबहुभवेत् ॥ अतिथीश्चलभेमहि ॥ याचिरश्चनःसंतु ॥ मायाचिष्म कंचन ॥ एताःसत्याआशिषःसंतु ॥ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिभूर्जजान ॥ यत्कामास्तेजुहुमस्तन्नो अस्तुवयंस्यामपतयोरयीणाम् ॥ इतिमंत्रेणनमस्कारः ॥ अस्यनांदीश्राद्धस्यप्रतिष्ठासिध्यर्थं सत्यवसुसंज्ञकेभ्योविश्वेभ्यो देवेभ्यः द्राक्षामलकमयींनिष्क्रयणीं दक्षिणांदातुमहमुत्सृजे ॥ एवंगोत्राभ्यः प्रपितामहीपितामही मातृभ्यः द्राक्षा मलकमयींनिष्क्रयणींदक्षिणादातुमहमुत्सृजे ॥ एवंप्रपितामहादीनांमातामहानांचदक्षिणांदत्वा ॥ इलामग्नइतिवाद्यं० ॥ देशकालौस्मृत्वा० अमुककर्मांगतयाविहितं संकल्पविधिनापार्वण त्रयात्मकनांदीमुख श्राद्धस्यविधेर्यन्युनंयदति रिक्तं तत्सर्वंपरिपूर्णमस्त्विति निवेदयेत् ॥ ततस्त्यमूषुवाजिनमितिदुर्वाग्रेण मंत्रपूर्वंविसृजेत् ॥ ततो पितॄन्मातामहांश्च ॥ ततोविश्वेदेवान् ॥ ततोजलधाराम् ॥ आमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमागंतांपितरामातरा चामासोमोमृतत्वेनगम्यादितिजलधारयाप्रदक्षिणीकृत्य ॥ यत्तेपितृभ्यइतिसूक्तंपठेत् ॥ तद्यथा ॥ यत्तेपितृभ्योददतो यज्ञेवानामजगृहुः ॥ संदेश्याऽत्सर्वस्मात्पापादिमामुंचंतुत्वौषधीः ॥ १ ॥ देवैनसात्पित्र्यान्नामग्राहात्संदेश्याऽदभि

निष्कृतात् ॥ मुंचंतुत्वावीरुधोवीर्येणब्रह्मणऋग्भिःपयसऋषीणाम् ॥ २ ॥ यथावातश्च्यावयंति भूम्यांरेणुमंतरिक्षा
च्चाभ्रम् ॥ एवामत्सर्वं दुर्भूतंब्रह्मनुत्तमपायति ॥ ३ ॥ अपक्रामनानदतीविनद्धागर्दभीव ॥ कर्तॄन्नक्षस्वेतोनुत्ताब्रह्मणा
वीर्यावता ॥ ४ ॥ अयंपंथाकृत्येतित्वानयामोभिप्रहितांप्रतित्वा प्रहिण्मः ॥ तेनाभियाहिभंजत्यनस्वतीववाहिनी
विश्वरूपाकुरूटिनी ॥ ५॥ पराक्तेज्योतिरपथंतेअर्वागन्यत्रास्मदयनाकृणुष्व ॥ परेणेहिनवतिंनाव्या३अतिदुर्गाःस्रोत्या
माक्षणिष्ठाःपरेहि ॥ ६ ॥ वातइववृक्षान्निमृणीहिपादयमागामश्वंपुरुषमुच्छिषएषाम् ॥ कर्तॄन्निवृत्त्येतःकृत्येप्रजास्त्वाय
बोधय ॥ ७ ॥ यांते बर्हिषियांश्मशानेक्षेत्रेकृत्यांवलगंवानिचख्नुः ॥ अग्नौवात्वागार्हपत्येभिचेरुःपाकंसंतंधीरतरा अ
नागसम् ॥ ८ ॥ उपाहृतमनुबुद्धंनिखातं वैरत्सार्यन्वविदामकर्त्रम् ॥ तदेतुयतआभृतंतत्राश्वइवविवर्त्ततांहंतुकृत्याकृतः
प्रजाम् ॥ ९ ॥ स्वायसाअसयःसतिनोगृहेविद्मातेकृत्येयतिधापरूंषि ॥ उत्तिष्ठैवपरे हितोज्ञातेकिमिहेच्छसि ॥ १० ॥
॥ इतिसूक्तंपठित्वा ॥ ततः आयुर्विद्यांधनंदत्तयशःशौर्यंचपुष्कलं ॥ पुत्रानदत्तसुखंदत्तसर्वान्कामांश्चदत्तमेइतिप्रार्थ्य ॥
ॐस्वस्तीत्युक्त्वा ॥ यस्मात्कोशेतिकृतंकर्मेश्वरार्पणंकुर्यात् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौरविशंकरकृते नांदि
श्राद्धप्रयोगरश्मिः षष्ठः ॥ ६ ॥

॥ अथारणीपूजनप्रयोगरश्मिः ॥ तच्चपरिशिष्टोक्तमेवनतुसूत्रोक्तं ॥ तदुक्तंपरिशिष्टे ॥ समिधोआनयेत्समगित्युप
क्रम्यधूपदीपैश्चनैवेद्यैःसमिधांपूजयेद्बुधइत्युक्तत्वात् ॥ अथप्रयोगः ॥ प्रातःस्नात्वाशुद्धेवाससीपरिधायग्रामादरण्यंगत्वा
स्वयंपूर्वाभिमुखो भूत्वा औषधीगणोक्तमंत्रेण औषधींप्रच्छिद्यमौंजी विवाहमंडपमध्ये आनीय नांदिश्राद्धानंतरं पुण्याह
वाचनात्प्राक् उत्तरतः २ पात्रेसंस्थाप्य वाद्यदेवताश्चपूजयेत् ॥ तद्यथा ॥ जीवास्थेत्यादिविधिवदाचम्यप्राणानायम्य॥
ब्रह्मजज्ञानं०॥ अव्ययसश्च० ॥ इतिमंत्रंजप्त्वा ॥ हस्तेजलमादायदेशकालावुच्चार्य० अमुककर्मांगत्वेनअरण्यादिदेवतानां





स्थापनपूजनेकरिष्ये इतिसंकल्पः ॥ सुगंधितैलहरिद्रादिभिःसंलेप्य ॥ उष्णोदकेनाभिषिच्य ॥ दध्यादूर्वादिभिःसंपूज्य ॥
शीतोदकेनउषतीःकव्यलेतिअभिषिच्यनूतने हरिद्रारंजितेवस्त्रेतंदुलपुंजोपरिवाउदक्संस्थाः पृथक्पृथक्संस्थाप्य देवता
आवाहयेत् ॥ ॐअग्निर्वनस्पतीनामधिपतिः समावतुअस्मिन्ब्रह्मण्यस्मिन्कर्मण्यस्यां पुरोधायामस्यांप्रतिष्ठायामस्यां
चित्यामस्यामाकूत्यामस्यामाशिषस्यां देवहूत्यांस्वाहा ॥ अरण्यैनमः अरणींआवाहयामि ॥१॥ ॐऊर्जंबिभ्रद्वसुवनिः
सुमेधाअघोरेणचक्षुषा ॥ मित्रियेणगृहानौमिसुमनावंदमानोरमध्वंमाबिभीतमत् ॥ ॐवन्यैनमः वनिंआवाहयामि ॥
॥२॥ यद्राजानंशकधूमंचक्षत्राप्येनकृण्वता ॥ भद्राहमस्मैततोराष्ट्रमजायत ॥ सोम्यैनमः सौमींआवाहयामि० ॥ ३ ॥
ओषधीनामहंवृणउर्वरीरिवसाधुया ॥ नयाम्यर्वतीरिवाहेनिरैतुतेविषं ॥ ओषध्यैनमः ओषधींआवाहयामि ॥ ४ ॥
यस्यभूमिप्रथमांतरिक्षमुतोदरं दिवं॥ यश्चक्रेमूर्द्धानंतस्मैज्येष्ठायब्रह्मणेनमः ॥ ॐभूमिवर्द्धन्यैनमः भूमिवर्द्धिनींआवाह-
यामि ॥ ५ ॥ ॐजीवास्थजीव्यासंसर्वमायुजआवाहयामि ॥ ६ ॥ यज्ञस्यसंततीरसियज्ञस्यत्वासंतत्यासंतनोमि ॥
यज्ञकर्त्र्यैनमः यज्ञकर्त्रींआवाहयामि ॥ ७ ॥ ॐगौरिन्मि०क्षराभुवनस्यपंक्तिःस्तस्यासमुद्राअधिविक्षरंति ॥ गौर्य्यैनमः
गौरींआवाहयामि ॥ ८ ॥ इत्यावाह्याक्षतैःस्थापयेत् ॥ ॐहिरण्यवर्णाःशुचयःपावकायासुजातःसवितायास्वग्निः ॥
याअग्निंगर्भंदधिरेसुवर्णास्तानआपः संस्योनाभवंतु ॥ यासांराजावरुणोयातिमध्येसत्यानृते अवपश्यंजनानाम् ॥
याअग्निंगर्भंदधिरेसुवर्णास्ता० ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेवहुधाभवंति ॥ याअग्निंगर्भंदधिरेसुवर्णास्ता०॥
शिवेनंमाचक्षुषापश्यतापः शिवयातन्वोपस्पृशतत्वचंमे ॥ घृतश्च्युतःशुचयोयाःपावकास्तान० ॥ गंधद्वारां० ॥ ॐदधि
क्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयुंषितारिषत् ॥ अद्यद्विष्टादेवजातावीरुच्छपथयो-
पनी ॥ आपोमलमिवप्राणैक्षीत्सर्वान्मच्छपथांअधि ॥ इतिअरण्याधष्टदेवताःस्थापयामि इतिस्थापयेत् ॥ अथवाएभि

मैत्रैः पृथक्पृथक्स्थापयेत् ॥ तदस्त्विति ब्रह्मा सोम स्त्रिष्टुप् अरण्यादिदेवताप्रतिष्ठापने विनियोगः ॥ ॐ तदस्तु ॥ अरण्याद्यावाहितदेवताः सुप्रतिष्ठिता भवंत्वित्यक्षतैः प्रतिष्ठाप्य ॥ ॐ भूर्भुवः स्वर्जनदां आसनं स० ॥ ॐ भू० पादयोः पाद्यं स० ॥ एवमर्घ्यमाचमनीयस्नानं दत्वा ॥ सुमंगलीरियं वधुरिमांसमेत पश्यत ॥ सौभाग्यमस्मै दत्वा दौर्भाग्यैर्विपरेतनाइति सुगंधतैलाभ्यंगस्नानं स० ॥ अथोष्णोदकेन स्नानं ॥ ॐ उषतीः कन्यला इमाः पितृलोकात्पतियतिः ॥ अवदीक्षामसृक्षतस्वाहा इत्युष्णोदकेन संस्नाप्य ॥ ॐ भूर्भुवः स्वर्जनदां स्नानांते आचमनीयं ॥ ॐ भू० वस्त्रमाचमनीयं चंदनपुष्पाक्षतसौभाग्यद्रव्यधूपदीपनैवेद्याद्युपचारैः संपूज्य विशेषार्घ्यः ॥ ॐ याः फलिनिर्या अफला अपुष्पायाश्च पुष्पिणिः ॥ बृहस्पतिप्रसूतास्तानो मुंचत्वंहसः ॥ ॐ भूर्भुवः० ॥ नालिकेरार्घः ॥ अग्निर्वनस्पतीनामिति मंत्रैः पुष्पांजलिः ॥ अरण्याद्यावाहितदेवताभ्यो नमः नमस्कारान्समर्पयामि ॥ ततः इमं बध्नामि ते इति सूक्तं पठेत् ॥ तद्यथा ॥ इमं बध्नामि ते मणिं दीर्घायुत्वाय तेजसे ॥ दर्भं सपत्नदंभनं द्विषतस्तपनं हृदः ॥ १ ॥ द्विषतस्तापयन् हृदः शत्रूणां तापयन्मनः ॥ दुर्हार्दः सर्वास्त्वं दर्भ घर्म इवाभीन्संतापयन् ॥ ॥२॥ घर्म इवाभितपं दर्भ द्विषतो नितपन्मणे ॥ हृदः सपत्नानां भिंधि इंद्र इव विरुजं वलं ॥३॥ भिंधि दर्भ सपत्नानां हृदयं द्विषतां मणे ॥ उद्यं त्वचमिव भूम्याः शिर एषां विपातय ॥ ४॥ भिंधि दर्भ सपत्नान्मे भिंधि मे पृतनायतः भिंधि मे सर्वान्दुर्हार्दो भिंधि मे द्विषतो मणे ॥ ५ ॥ छिंधि दर्भ सपत्नान्मे छिंधि मे पृतनायतः ॥ छिंधि मे सर्वान्दुर्हार्दो छिंधि मे द्विषतो मणे ॥ ६ ॥ वृश्च दर्भ सपत्नान्मे वृश्च मे पृतनायतः ॥ वृश्च मे सर्वान्दुर्हार्दो वृश्च मे द्विषतो मणे ॥ ७ ॥ कृंत दर्भ सपत्नान्मे कृंत मे पृतनायतः ॥ कृंत मे सर्वान्दुर्हार्दो कृंत मे द्विषतो मणे ॥८॥ पिंश दर्भ सपत्नान्मे पिंश मे पृतनायतः ॥ पिंश मे सर्वान्दुर्हार्दो पिंश मे द्विषतो मणे ॥९॥ विध्य दर्भ सपत्नान्मे विध्य मे पृतनायतः ॥ विध्य मे सर्वान्दुर्हार्दो विध्य मे द्विषतो मणे ॥ १० ॥ ॥ निक्ष दर्भ सपत्नान्मे निक्ष मे पृतनायतः ॥ निक्ष मे सर्वान्दुर्हार्दो निक्ष मे द्विषतो मणे ॥ १ ॥ तृंधि दर्भ सपत्नान्मे तृंधि मे पृतनायतः ॥ तृंधि मे सर्वान्दुर्हार्





दो तृंधि मे द्विषतो मणे ॥ २ ॥ रुंधि दर्भ सपत्नान्मे रुंधि मे पृतनायतः ॥ रुंधि मे सर्वान्दुर्हार्दो रुंधि मे द्विषतो मणे ॥ ३ ॥ मृण दर्भ सपत्नान्मे मृण मे पृतनायतः ॥ मृण मे सर्वान्दुर्हार्दो मृण मे द्विषतो मणे ॥ ४ ॥ मंथ दर्भ सपत्नान्मे मंथ मे पृतनायतः ॥ मंथ मे सर्वान्दुर्हार्दो मंथ मे द्विषतो मणे ॥ ५ ॥ पिंढि दर्भ सपत्नान्मे पिंढि मे पृतनायतः ॥ पिंढि मे सर्वान्दुर्हार्दः पिंढि मे द्विषतो मणे ॥६॥ ओष दर्भ सपत्नान्मे ओष मे पृतनायतः ॥ ओष मे सर्वान्दुर्हार्दः ओष मे द्विषतो मणे ॥ ७ ॥ दह दर्भ सपत्नान्मे दह मे पृतनायतः ॥ दह मे सर्वान्दुर्हार्दो दह मे द्विषतो मणे ॥ ८ ॥ जहि दर्भ सपत्नान्मे जहि मे पृतनायतः ॥ जहि मे सर्वान्दुर्हार्दो जहि मे द्विषतो मणे ॥ ९ ॥ ॥ यत्ते दर्भ जरामृत्युः शतं वर्म सु वर्म ते ॥ तेनेमं वर्मिणं कृत्वा सपत्नां जहि वीर्यैः ॥ १ ॥ शतं ते दर्भ वर्माणि सहस्रं वीर्याणि ते ॥ तमस्मै विश्वे त्वां देवा जरसे भर्तवा अदुः ॥ २ ॥ त्वामाहुर्देववर्म त्वां दर्भ ब्रह्मणस्पतिम् ॥ त्वामिंद्रस्याहुर्वर्म त्वं राष्ट्राणि रक्षसि ॥ ३ ॥ सपत्नक्षयणं दर्भ द्विषतस्तपनं हृदः ॥ मणिं क्षत्रस्य वर्धनं तनूपानं कृणोमि ते ॥४॥ यत्समुद्रो अभ्यक्रंदत्पर्जन्यो विद्युता सह ॥ ततो हिरण्ययो बिंदुस्ततो दर्भो अजायत ॥ ५ ॥ ॥ औदुंबरेण मणिना पुष्टिकामाय वेधसा ॥ पशूनां सर्वेषां स्फातिं गोष्ठे मे सविताकरत् ॥ १ ॥ यो नो अग्निर्गार्हपत्यः पशूनामधिपा असत् ॥ औदुंबरो वृषा मणिः समा सृजतु पुष्ट्या ॥२॥ करीषिणीं फलवतीं स्वधामिरां च नो गृहे ॥ औदुंबरस्य तेजसा धाता पुष्टिं दधातु मे ॥३॥ यद् द्विपाच्च चतुष्पाच्च यान्यन्नानि ये रसाः ॥ गृह्णे३हं त्वेषां भूमानं बिभ्रदौदुंबरं मणिं ॥ ४ ॥ पुष्टिं पशूनां परिजग्रभाहं चतुष्पदां द्विपदां यच्च धान्यम् ॥ पयः पशूनां रसमोषधीनां बृहस्पतिः सविता मे नि यच्छात् ॥ ५ ॥ अहं पशूनामधिपा असानि मयि पुष्टं पुष्टपतिर्दधातु ॥ मह्यमौदुंबरो मणिर्द्रविणानि नि यच्छतु ॥ ६ ॥ उप मौदुंबरो मणिः प्रजया च धनेन च ॥ इंद्रेण जिन्वितो मणिरा मागात्सह वर्चसा ॥७॥ देवो मणिः सपत्नहा धनसा धनसातये ॥ पशोरन्नस्य भूमानं गवां स्फातिं नि यच्छतु ॥८॥ यथाग्रे

त्वंवनस्पतेपुष्ट्यासहजंज्ञिषे ॥ एवाधनंस्यमेस्फातिमादधातुसरस्वती ॥ ९ ॥ आमेधनंसरस्वतीपयस्फातीचधान्यं ॥ सिनीवाल्युपावहादयंचौदुंबरोमणिः ॥ १० ॥ त्वंमणीनामधिपावृषासित्वयि पुष्टंपुष्टपतिर्जजानत्वयीमेवाजाद्रविणानि सर्वौदुंबरःसत्वमस्मत्सहस्वारादरातिमंमृतंक्षुधंच ॥ ११ ॥ ग्रामणीरसिग्रामणीरुत्थायाभिषिक्तोभिमापिंचवर्चसा ॥ तेजोसितेजोमयिधारयाधिरयिरसिरयिमेधेहि ॥ १२ ॥ पुष्टिरसिपुष्ट्यामासमंङ्धिगृहमेधिगृहपतिमाकृणु ॥ औदुंबरः सत्वमस्मासुधेहिरयिंचनः सर्ववीरंनियंछरायस्पोषायप्रतिमुंचे अहंत्वां ॥ १३ ॥ अयमोदुंबरोमणिवीरोवीरायबध्यते॥ सनःसनिंमधुमतिंकृणोतुरयिंचनः सर्ववीरंनियछात् ॥ १४ ॥ शतकांडोदुश्च्यवनःसहस्रपर्णउत्तिरः॥ दर्भोयउग्रऔषधीं स्तंते बध्नाम्यायुषे ॥ १ ॥ नास्यकेशान्प्रवपंतिनोरसिताडमाघ्नते ॥ यस्माअछिन्नपर्णेनदर्भेणशर्मयछति ॥२॥ दिवितेतूलंमोषधेपृथिव्यामसिनिष्ठितः ॥ त्वयासहस्रकाण्डेनायुष्प्रवर्द्धयामहे ॥ ३ ॥ तिस्रोदिवोअत्यतृणंत्तिस्रइमाः पृथिवीरुत ॥ त्वयाहदुर्हार्दोजिह्वानितृणद्मिवचांसि ॥ ४ ॥ त्वमसिसहमानोहमस्मिसहस्वान् ॥ उभौ सहस्वंतौभूत्वासपत्नान्सहिषीमहि ॥ ५ ॥ सहस्वनोअभिमातिंसहस्वपृतनायतः ॥ सहस्वसर्वादुर्हार्दःसुहार्दोमेबहुकृधि ॥ ६ ॥ दर्भेणदेवजातेनदिविष्टंभेनशश्वदित् ॥ तेनाहंछश्वतोजनांअसनंसनवानिच ॥ ७ ॥ प्रियंमादर्भकृणुब्रह्मराजन्याभ्यांशूद्रायचार्यायच ॥ यस्मैचकामयामहेसर्वस्मैचविपश्यते ॥ ८ ॥ योजायमानःपृथिवीमदृंहद्योअस्तभ्नादंतरिक्षंदिवंच ॥ यंबिभ्रतंननुपाप्मावित्वेदसनोयंदर्भोवरुणोदिवाकः ॥ ९ ॥ सपत्नहाशतकाण्डःसहस्वनौषधीनांप्रथमःसंबभूव ॥ सनोयंदर्भःपरिपातुविश्वतःस्तेनसाक्षीयपृतनाःपृतन्यतः ॥ १० ॥ ॥ सहस्रार्घःशतकाण्डःपयस्वानपामग्निर्वीरुधांराजसूयम् ॥ सनोयंदर्भःपरिपातुविश्वतोदेवोमणिरायुषासंसृजातिनः ॥ १ ॥ घृतादुल्लुप्तोमधुमान्पयस्वान्भूमिदृंहोच्युतश्च्यावयिष्णुः॥





नुदंत्सपत्नानधरांश्चकृण्वन्दर्भारोहमहतामिंद्रियेण ॥ २ ॥ त्वंभूमिमत्येष्योजसात्वंवेद्यांसीदसिचारुरध्वरे ॥ त्वांपवित्रमृषयोभरंतस्त्वंपुनीहिदुरितान्यस्मत् ॥ ३ ॥ तीक्ष्णोराजाविषासहिरक्षोहाविश्वचर्षणीः ॥ ओजोदेवानांबलमुग्रमेतत्तंते बध्नामिजरसेस्वस्तये ॥ ४ ॥ दर्भेणत्वंकृणवद्वीर्याणिदर्भंबिभ्रदात्मनामाव्यथिष्ठाः ॥ अतिष्ठायावर्चसाधान्यांसूर्यइवाभाहिप्रदिशश्चतस्रः ॥ ५ ॥ ॥ इतिसूक्तंपठित्वा अद्यपूर्वोच्चरित० अनयापूजयाअरण्याद्यावाहितदेवताःप्रीयतांनमम ॥ यस्मात्कोशेतिकृतंकर्मेश्वरार्पणंकुर्यात् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पत्नागरद्विवेदिग्विशंकरकृते परिशिष्टोक्तअरण्यादिपूजनप्रयोगरश्मिः सप्तमः ॥ ७ ॥

॥ अथ सूत्रोक्तशांतिकलशकरणप्रयोगः ॥ तत्रकृतनित्यक्रियोयजमानो संस्कारात्पुर्वेद्युःअल्पेषुकर्मसुतद्दिनेवा शांतिकलशोदकंकार्यंसर्वकर्मप्रयोगित्वात् ॥ तद्यथा ॥ ब्रह्मजज्ञानंअस्यसश्चेतिमंत्रौपठित्वा ॥ शांतिगणास्यब्रह्मासोमोष्णिक्संस्कृतिः सर्वाणिछंदांसिशांतिगणेनशांतिकलशानुमंत्रणेविनियोगः ॥ ॐशन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनइतिमंत्रेणकलशेतीर्थोदकादिशुद्धजलमापूर्य ॥ ततःशांतिगणपाठंकुर्यात् ॥ तद्यथा ॥ ॐशन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ १ ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्य धीमहि ॥ धियोयोनःप्रचोदयात् ॥ २ ॥ ॐअंबयोयंत्यध्वभिर्जामयोअध्वरीयतां ॥ पृंचतीर्मधुनापयः ॥ ३ ॥ शांताद्यौःशांतापृथिवीशांतमिदमुर्व ३तिरिक्षं ॥ शांताउदन्वतीरापः शांतानःसंत्वोषधीः ॥ ४ ॥ शांतानिपूर्वरूपाणिशांतन्नोअस्तुकृताकृतम् ॥ शांतंभूतंचभव्यंचसर्वमेवशमस्तुनः ॥ ५ ॥ इयंयापरमेष्ठिनीवाग्देविब्रह्मसंशिता ॥ ययैवससृजेघोरंतयैवशांतिरस्तुनः। ६॥ इदंयत्परमेष्ठिनंमनोवांब्रह्मसंशितम् ॥ येनैवससृजेघोरंतेनैवशांतिरस्तुनः ॥ ७ ॥ इमानियानिपंचेंद्रियाणिमनःषष्ठानिमेहृदिब्रह्मणासंशितानि ॥ यैरेवससृजेघोरंतैरेवशांतिरस्तुनः ॥ ८ ॥ शन्नोमित्रःशंवरुणोशंविष्णुः शंप्रजापतिः ॥

शन्नइंद्रोबृहस्पतिः शन्नोभवत्वर्यमा ॥ ९ ॥ शन्नो मित्रःशंवरुणःशंविवस्वान्छमंतकः ॥ उत्पाताःपार्थिवांतरिक्षाःशन्नो दिविचराःग्रहाः ॥१ ॥ शन्नोभूमिर्वेप्यमाणाःशमुल्कानिर्हतंचयत् ॥ शंगावोलोहितःक्षीराःशंभूमिरवतीर्यतीः ॥११॥ नक्षत्रमुल्काभिहतंशमस्तुनःशन्नोभिचाराः शमुसंतुकृत्याः ॥ शन्नोनिखातावल्गाःशमुल्कादेशोपसर्गाःसमुनोभवंतु ॥ ॥१२॥ शन्नोग्रहाश्चांद्रमसाःशमादित्यःश्चराहुणा ॥ शन्नोमृत्युर्धूमकेतुःशंरुद्रास्तिग्मतेजसाः ॥१३॥ शंरुद्राशंवसवः शमादित्याःशमग्नयः ॥ शन्नोमहर्षयोदेवाः शंदेवाःशंबृहस्पतिः ॥१४॥ ब्रह्मप्रजापतिर्धातालोकावेदाःसप्तऋषयोग्नयः॥ तैर्मेकृतंस्वस्त्ययनमिंद्रोमेशर्मयछतु ब्रह्मामेशर्मयछतु ॥ १५ ॥ विश्वेमेदेवाःशर्मयछंतु सर्वेमेदेवाःशर्मयछंतु ॥ १६ ॥ यानिकानिचिछांतानिलोकेसप्तऋषयोविदुः ॥ शर्वाणिशंभवंतुमेशंमेअस्त्वभयंमेअस्तु ॥ १७ ॥ पृथिवींशांतिरंतरिक्षं शांतिर्द्यौःशांतिरापः शांतिरोषधय शांतिर्वनस्पतयः शांतिर्विश्वेमेदेवाः शांतिःसर्वेमेदेवाः शांतिःशांतिः शांतिभिःताभिः शांतिभिसर्वशांतिभिशमयामोहंयदिथघोरंयदिहक्रूरं यदिहपापंतछांतंतछिवंसर्वमेवशमस्तुनः ॥१८॥ शन्नइंद्राग्नीभवता भवोभिःशन्नइंद्रावरुणारातहव्या ॥ शमिंद्रासोमासुविनायशंयोः शन्नइंद्रापूषणावाजसातौ ॥ १ ॥ शन्नोभगःशमुनः शंशोअस्तुनःपुरंध्रिःशमुशंतुरायः ॥ शंनःसत्यस्यसुयमस्यशंसः शंन्नोअर्यमापुरुजातोअस्तु ॥ २ ॥ शंनोधाताशमु धर्त्तानोअस्तुशंनउरूचीभवतुस्वधाभिः ॥ शंरोदसीबृहतीशंनोअद्रिःशंन्नोदेवानांसुहवानिसंतु ॥३॥ शन्नोअग्निर्ज्योति रनीकोअस्तुशन्नोमित्रावरुणावश्विनाशं ॥ शंनःसुकृतांसुकृतानिसंतुशंन इषिरोअभिवातुवातः ॥४॥ शन्नोद्यावापृथिवी पूर्वहूतौशमंतरिक्षंदृशयेनोअस्तु ॥ शंनओषधीर्वनिनोभवंतुशंनोरजसस्पतिरस्तुजिष्णुः ॥५॥ शन्नइंद्रोवसुभिर्देवोअस्तु शमादित्येभिर्वरुण सुशंसः ॥ शन्नोरुद्रोरुद्रेभिर्जलाषः शन्नस्त्वष्टाग्नाभिरिहश्रृणोतु ॥ ६ ॥ शन्नःसोमोभवतुब्रह्मशन्नः





शन्नोग्रावाणःशमुसंतुयज्ञाः ॥ शंनःस्वरूणांमितयोभवंतुशंनः प्रस्वऽशम्वस्तुवेदिः ॥ ७ ॥ शंनःसूर्यउरुचक्षाउदेतुशंनो भवंतुप्रदिशश्चतस्रः ॥ शंनःपर्वताध्रुवयोभवंतुशंनः सिंधवःशमुसंत्वापः ॥ ८ ॥ शंन्नोअदितिर्भवतुव्रतेभिःशन्नोभवंतु मरुतःस्वर्काः ॥ शन्नोविष्णुःशमुपूषानोअस्तु शन्नोभवित्रंशम्वस्तुवायुः ॥ ९ ॥ शन्नोदेवःसविताद्रायमाणः शन्नो भवंतुषसोविभातीः ॥ शन्नःपर्जन्योभवतुप्रजाभ्यःशन्नःक्षेत्रस्यपतिरस्तुशंभुः ॥ १० ॥ ॥ शन्नःसत्यस्यपतयोभवंतु शन्नोअर्वंतःशमुसंतुगावः ॥ शंन्नऋभवः सुकृतःसुहस्ताः शन्नोभवंतुपितरोहवेषु ॥ १ ॥ शन्नोदेवाविश्वदेवाभवंतु शंसरस्वतीसहधीभिरस्तु ॥ शमभिपाचःशमुरातिशापाचः शन्नोदिव्याःपार्थिवाःशन्नोअप्याः ॥ २ ॥ शन्नोअजएकपा देवोअस्तुशंमहिर्बुध्न्यःऽशंसमुद्रः ॥ शन्नोअपांनमत्पेरुरस्तु शंनःपृश्निर्भवतुदेवगोपाः ॥ ३ ॥ आदित्यारुद्रावसवो जुषंतामिदंब्रह्मक्रियमाणंनवीयः ॥ श्रृण्वंतुनोदिव्याःपार्थिवासोगोजातांउतयेयज्ञियासः ॥४॥ येदेवानामृत्विजोयज्ञि यासोमनोयजत्राअमृताऋतज्ञाः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥५॥ तदस्तुमित्रावरुणातदग्नेशंयो रस्मभ्यमिदमस्तुशस्तम् ॥ अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय ॥ ६ ॥ ॥ उषाअपःस्वसुस्तमःसंवर्त्तयति वर्त्तनीसुयातता ॥ अयावाजंदेवहितंसनेमप्रदेमशतहिमाःसुवीराः ॥ १ ॥ इंद्रस्यबाहूस्थविरौवृषाणौचित्राइमावृषभौ पारयिष्णु ॥ तौयोक्षेप्रथमोयोगआगतेयाभ्यांजितमसुराणंस्व१र्यत् ॥ २ ॥ आशुःशिशानोवृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ॥ संक्रंदनोनिमिषएकवीरः शतंसेनाअजयत्साकमिंद्रः ॥ ३ ॥ संक्रंदनेनानिमिषेणजिष्णुनायोध्येन दुश्च्यवनेनधृष्णुना ॥ तदिंद्रेणजयततत्सहध्वंयुधोनरइषुहस्तेनधृष्णुना ॥ ४ ॥ सइषुहस्तैःसनिषंगिभिर्वशीसंस्रष्टासयुध इंद्रोगणेन ॥ संसृष्टजित्सोमपाबाहुशर्ध्यु१ग्रधन्वाप्रतिहिताभिरस्ता ॥ ५ ॥ बलविज्ञायःस्थविरःप्रवीरःसहस्वान्वाजी

सहमानउग्रः ॥ अभिवीरोअभिषत्वासहोजिज्जैत्रमिंद्ररथमातिष्ठगोविदन् ॥ ६ ॥ इमंवीरमित्येका ॥ ७॥ अभिगोत्राणि सहसांगाहमानोदायउग्रःशतमंन्युरिंद्रः ॥ दुश्च्यवनः पृतनाषाडयोध्योऽस्माकंसेनाअवतुप्रयुत्सु ॥ ८ ॥ बृहस्पतेपरि दीयारथेनरक्षोहामित्रंअपबाधमानः ॥ प्रभंजेन्छत्रून्प्रमृणंनमित्रानस्माकमेध्यवितातनूनाम् ॥ ९ ॥ इंद्रएषांनेताबृहस्पति र्दक्षिणायज्ञः पुरएतुसोमः ॥ देवसेनानामभिभंजतीनांजयंतीनांमरुतोयंतुमध्ये ॥ १० ॥ इंद्रस्यवृष्णोवरुणस्यराज्ञआ दित्यानांमरुतांशर्धउग्रं ॥ महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥ ११ ॥ अस्माकमिंद्रः समृतेषुध्वजे ष्वस्माकंयाइषवस्ताजयंतु ॥ अस्माकंवीराउत्तरेभवंत्वस्मांउदेवासोवताहवेषु ॥ १२ ॥ ॥ इदमुच्छ्रेयोवसानमागांशि वेमेद्यावापृथिवीअभूताम् ॥ असपत्नाः प्रदिशोमेभवंतुनवैत्वाद्विष्मोअभयंनोअस्तु ॥ १ ॥ यतइंद्रभयामहेततोनोअभयं कृधि ॥ मघवंछग्धितवत्वनऊतिभिर्विद्विषोविमृधोजहि ॥ २ ॥ इंद्रंवयमनूराधंहवामहेनुराध्यास्मद्विपदाचतुष्पदा ॥ मानःसेनाअररुषीरुपगुर्विषूचीरिंद्रद्रुहोविनाशय ॥ ३ ॥ इंद्रस्त्रातोतवृत्रहापरस्फानोवरेण्यः ॥ सरक्षिताचरमातः समध्यतः सपश्चात्सपुरस्तान्नोअस्तु ॥ ४ ॥ उरुंनोलोकमनुनेषिविद्वान्स्वर्यज्ज्योतिरभयंस्वस्ति ॥ उग्रातइंद्रःस्थविरस्य बाहूउपक्षयेमशरणाबृहंता ॥ ५ ॥ अभयंनः करत्यंतरिक्षमभयंद्यावापृथिवीउभेइमे ॥ अभयंपश्चादभयंपुरस्तादुत्तरा दधरादभयन्नोअस्तु ॥ ६ ॥ अभयंमित्रादभयममित्रादभयंज्ञातादभयंपुरोयः ॥ अभयंनक्तमभयंदिवानः सर्वाआशाममभि त्रंभवंतुम् ॥ ७ ॥ ॥ शिवानः शंतमाभवसुमृडीकासरस्वति ॥ मातेयुयोमसंदृशः ॥ १ ॥ शन्नोवातोवातुशंनस्तपतु सूर्यः ॥ अहानिशंभवंतुनः शंरात्रीप्रतिधीयतांशमुषानोव्युच्छतु ॥ २ ॥ यत्किंचासौमनसायच्चवाचायज्ञैर्जुहोतिह विषायजुषा ॥ तन्मृत्युनानिर्ऋतिः संविदानापुरासत्यदाहुतिंहंत्वस्य ॥ ३ ॥ यातुधानानिर्ऋतिरादुरक्षस्तेअस्पघ्नंत्वनृतेन









सत्यम् ॥ इंद्रेषितादेवाआज्यमस्यमथ्नंतुमानसंपादियदसौजुहोति ॥ ४ ॥ अजिराधिराजौश्येनौसंपातिनाविव ॥ आज्यंपृतन्यतोहतान्योनः कश्चाभ्यगायंति ॥ ५ ॥ आपांचोतउभौबाहूअपिनह्याम्यास्यम् ॥ अग्नेर्देवस्यमन्युनातेनंते वधिषंहविः ॥ ६ ॥ अपिनह्यामितेबाहूअपिनह्याम्यास्यं ॥ अग्नेर्घोरस्यमन्युनातेनतेवधिषंहविः ॥ ७ ॥ परित्वाग्नेपुरं वयंविप्रंसहस्यधीमहि ॥ धृषद्वर्णंदिवेदिवेहंतारंभंगुरावतः ॥८॥ उत्तिष्ठातावपश्येतेंद्रस्यभागमृत्वियं ॥ यदिश्रातंजुहोतन यद्यश्रांतंममत्तन ॥ ९ ॥ श्रातंहविरोष्विंद्रप्रयाहिजगामसूरेअध्वनो ॥ विमध्यं ॥ परित्वासतेनिधिभिः सखायः कुलपानराजपतिंचरंतं ॥ १० ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ ११ ॥ शन्नोदेवी रभिष्टयआपोभवंतुपीतये ॥ शंय्योरभिस्रवंतुनः ॥ १२ ॥ पृथिव्यैश्रोत्रायेतित्रिः ॥ १५ ॥ इतिशांतिगणाभिमंत्रितै रक्षतैरभिमंत्र्यतत्रवरुणमावाह्यप्रतिष्ठाप्य ॐभूर्भुवःस्वर्जनदां इतिव्याहृतिमुच्चार्य शांतिकलशायनम इत्यावाहनादिषोड शोपचारैः संपूज्यअनयापूजयाशांति कुंभदेवताःप्रीयंतांनमम इतिनत्वा ॥ ततःसपत्नीकोयजमानउत्थायतद्दंशपात्रं गृहीत्वा पत्न्यपिशांतिकुंभंगृहीत्वा ॐत्वयापूर्वमितिसूक्तंपठित्वादेव गृहंप्रविश्यकलशंसंस्थाप्य तदस्त्वितिप्रष्ठाप्य तत्रदीपंप्रज्वाल्यनमस्कृत्यमंडपप्रतिष्ठांकुर्यात् पूर्ववत्संपूज्य ॥ ॥ इतीश्रीमदथर्वगृह्यसूत्रप्रयोग भानौषट्पन्नागरद्वि वेदीरविशंकरकृते शांतिकलशकरणप्रयोगःअष्टमः ॥

॥ अथमंडपप्रतिष्ठापूजनप्रयोगारंभः ॥ ॥ तत्रकृतनित्यक्रियोयजमानः महत्सुकर्मसुपूर्वेद्युरल्पेषुकर्मसुतद्दिने वासंभारानसंपाद्यउक्तदिशिमंडपप्रतिष्ठांकुर्यात् ॥ सचमंडपोविवाहेचूडाकरणेउपनयनेकेशांतेसीमंतोन्नयनेचभवति ॥ तदुक्तं ॥ विवाहादिषुयाज्ञोग्निर्मंडपेचसइष्यतेति ॥ तत्रमंडपकर्त्तव्यतांस्वगृह्ययज्ञप्रयोगेवक्ष्ये ॥ अथमंडपस्तंभरोपणार्थं स्थानदेशउक्तो विश्वकर्मणा ॥ वेश्मांग्निपादे हिद्वादशत्रिकेमिनाल्पुरालये ॥ ईशानतोव्यस्तगत्याप्रवृष्टिस्तस्यशुभावहेति ॥ अस्यार्थः ॥

वृषमिथुनकर्कटराशिस्थेसूर्येआग्नेयांखात :॥ सिंहकन्यातुलाराशिस्थेभास्करेईशान्यांखात : कार्य :॥ वृश्चिकधन मकरराशिस्थेऽर्केवायव्यांखात : कार्य :॥ कुंभमीनमेषराशिस्थेर्केनैर्ऋत्यांखात : कार्य :॥ यतोवृषादावैशान्यांराहोर्मुखं भवति ॥ वायव्यांमध्यभाग :॥ नैर्ऋत्यांपुच्छं ॥ आग्नेय्यांरिक्तत्वात्तत्रखननंशुभं ॥ एवंराहो । व्यक्तगत्यसिंहादि त्रिकेवायव्यांमुखं ॥ नैर्ऋत्यांमध्यभाग :॥ आग्नेय्यांपुच्छं ॥ ऐशानीरिक्ताअत : सिंहादावैशान्यांखननंशुभं ॥ एवमन्य त्रापिज्ञेयं ॥ अथकर्तामांगलिकः सपत्निकः पूर्वाह्णेप्राङ्मुखोपविश्य शांतयेब्रह्मजज्ञानं पठित्वा देशकालावुच्चार्यकरिष्य माणामुककर्मांगत्वेनमंडपप्रतिष्ठांकरिष्यइतिसंकल्पं विधायउक्तदिशि भूमेमातरितिभूमिरनुष्टुपभूमिप्रार्थनेविनियोगः ॥ ॐभूमेमातर्निधेहिमाभद्रयासुप्रतिष्ठितम् ॥ संविदानादिवाकवेश्रियांमाधेहिभूत्यांइतिभूमिंप्रार्थयेत् ॥ इदंखनेत्यथर्वा त्रिष्टुपूअवटखननेविनियोगः ॥ ॐइदंखनामिभेषजंमांपश्यमभिरोरुदं ॥ परायतोनिवर्त्तनमायतः प्रतिनंदनंइत्यवट खननं ॥ आपूर्णाअस्येत्यथर्वालिंगोक्तादेवताअवटे जलसेचनेविनियोगः॥ ॐआपूर्णोअस्यकलशः स्वाहासेक्तेबकोशं सिसिचेपिबध्यै ॥ समुंप्रियाअववृत्रन्मदायप्रदक्षिणीदभिसोमासइंद्रम् ॥ इत्यवटेजलसेचनं॥ यस्यामन्नमथर्वानुष्टुपू व्रीहिमत्तमित्यथर्वा त्रिष्टुपूअवटेयवप्रक्षेपनेविनियोगः ॥ ॐयस्यामन्नंव्रीहियवौयस्यांइमाः पंचकृष्टयः भूम्यैपर्जन्य पत्न्यैनमोस्तुवर्षमेदसे ॥ व्रीहीमंनंयवमत्तमथोमाषमथोतिलम् ॥ एषवांभागोरत्नधेययदंतौमाहिंसिष्टंपितरंमातरंच इतियवान्प्रक्षिपेत् ॥ ततोदधिदुर्वाचंदनादिअवटेनिक्षिप्य ॥ ध्रुवेयमितिमंत्रस्याथर्वाविशट्स्तंभारोपणेविनियोगः ॥ ॐध्रुवेयंविराण्नमोअस्तस्यैशिवापुत्रेभ्यउतमह्यमस्तु ॥ सानोदेव्यदितेविश्ववारइर्यरवगोपाअभिरक्षपक्कं ॥ इतिमंत्रेण शम्यादिवृक्षस्तंभंतस्मिन्नवटेआरोपयेत् ॥ समाचारात्तत्रमदनफलांलोहकंकणंचबध्वा क्षतैस्तत्रदेवतामावाह्य ॥ तद्यथा ॥ नंदिन्यैनमःनंदिनींआवाहयामि०॥ नलिनीं०॥ मैत्रीं०॥उमां ॥ पशुवर्द्धिनींआवाह्यतदस्त्विति मंडपदेवतासुप्रतिष्ठिताभव





ेत्युक्त्वातैःप्रतिष्ठापयेत् ॥ ततोमंडपदेवताभ्योनमइतिनाममंत्रेणावाहनादिउपचारैर्यथाविभवंपूजयेत् ॥ अत्रपूर्वोत्तरितेति उत्तरसंकल्पंविधाय । यस्मात्त्वोशेतिकृतंकर्मेश्वरार्पणंकुर्यात् ॥ इयंमंडपदेवताप्रतिष्ठागणपतिपूजनोत्तरंनांदिश्राद्धोत्तरंवा कार्यामंडपलक्षणंनिर्णयसिंधौ ॥ मंगलेषुचसर्वेषुमंडपोग्रहमानतः ॥ कार्यःशोडषहस्तोवान्यूनहस्तोदशावधि०॥ स्तंभैश्च तुर्भिरेवात्रवेदीमध्येप्रतिष्ठितेति ॥ हस्तोत्रसंस्कार्यस्य॥ द्वादशाष्टाकरोवितिग्रंथांतरे ॥ वेदीचतुरस्राचतुर्हस्तास्वमाना द्वहिर्भागेपश्चिमेसोपानयुक्ता ॥ गृहस्यवामध्यभागेकार्या । ॥ इतिश्रीमदथर्ववेदगृह्यसूत्रप्रयोगभानौद्विजातिपटूप नागर(साठोदनागर)रविशंकरकृतेमंडपदेवताप्रतिष्ठाप्रयोगरश्मिर्नवमः ॥

अथनांदिश्राद्धोत्तरंमंडपोद्वासनात्प्राक्कानिचिद्वर्ज्यान्याह ॥ निर्णयदीपेगार्ग्यः ॥ नांदिश्राद्धेकृतेपश्चाद्या वन्मातृविसर्जनं ॥ दर्शश्राद्धंक्षयाश्राद्धंस्नानंशीतोदकेनच ॥ अपसव्यंस्वधाकारंनित्यश्राद्धंतथैवचब्रह्मयज्ञंस्वाध्ययनं नदीसीमाविलंघनं ॥ उपवासंव्रतंचैवश्राद्धभोजनमेवच ॥ नैवकुर्युःसपिंडाश्चमंडपोद्वासनावधिः ॥ तथाच ॥ अभ्यंगेसू तकेचैवविवाहेपुत्रजन्मनिमांगल्येषुचसर्वेषुनकार्यंगोपिचंदनमिति ॥ अत्रनित्यश्राद्धनिशेषेधेनतत्कार्यविहितपितृयज्ञ निषेधसिद्धेस्वधाकारग्रहणंतत्सहचरितवैश्वदेवनिषेधार्थं ॥ आचारसंवादलाभाच्चेतिवदद्वइतिसंस्कारकौस्तुभे ॥ अथमं डपोद्वासनम् ॥ तत्रमंडपोद्वासनकालः ॥ समेचदिवसेकुर्याद्देवकोस्थापनंबुधः॥ षष्ठंचविषमंनेष्टंमुक्त्वापंचमसप्तमौ ॥ शमेषुपष्ठनिशिद्धं ॥ विषमेषुपंचमसप्तमेविनान्यानिनिषिद्धानि ॥ विषमेषुपंचमसप्तमौदिवसौशुभावित्यर्थः ॥ अथ प्रयोगः ॥ उक्तकालेसपत्निकोयजमानोपविश्यदेशकालावुच्चार्यअमुककर्मांगत्वेनस्थापितानांमंडपदेवतानामुत्थापनं करिष्यइतिसंकल्प ॥ स्थापितदेवतानांयथाविभवंपूजांकृत्वापुष्पाक्षतान्गृहीत्वा ॥ उत्तिष्ठतेतिअथर्वालिंगोक्तगायत्री रुत्थापनेविनियोगः ॥ वाविसर्जनवि० ॥ ॐउत्तिष्ठतसंन्नह्यध्वंमित्रादेवजनायूयं ॥ संदृष्टागुप्तावःसंतुयानोमित्राण्य र्बुदे ॥ यांतुदेवगणाःसर्वेपूजामादायपार्थिवीं ॥ इष्टकामसमृध्यर्थंपुनरागमनायच ॥ इतिपठित्वादेवोपरिप्रक्षिपेत् ॥

कृतांजलिः ॥ अथपूर्वोच्चरितेत्युत्तरसंकल्पंकृत्वायस्मात्तोशेतिकृतंकर्मेश्वरार्पणंकुर्यादिति ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोग भानोपदपन्नागरद्विजातिरविशंकरकृतेमंडपोद्वासनप्रयोगरश्मिर्दशमः ॥

अथस्वस्तिवाचनं ॥ स्वस्तिवाचनमत्रेष्टंगृह्यकर्मसुकेषुचित् ॥ अदृष्टमपिशास्त्रेऽस्मिन्मंगलार्थमुदीरितमिति ॥ वाक्यादत्रसर्वशाखासाधारणत्वात्सूदानखंडोक्तपुण्याहवाचनप्रयोगेवाद्रियते ॥ तत्रादौव्यासः ॥ संपूज्यगंधमाल्याद्यै ब्राह्मणान्स्वस्तिवाचयेत् ॥ धर्मकर्मणिमांगल्येसंग्रामाद्भुतदर्शनेतिनिर्णयसिंधौमंडनः ॥ गर्भाधानादिसंस्कारेष्विष्टापूर्तेक्रतुष्वपि ॥ नांदिश्राद्धंपुराकार्यंकर्मादौस्वस्तिवाचनं ॥ तच्चगणेशांबिकयो ॥ पूजनोत्तरंनांदिश्राद्धोत्तरंवाकार्यम् ॥ तत्र कलशलक्षणम् ॥ हैमंवाराजतंवापिताम्रंमृन्मयजंतुवा ॥ अकालमव्रणंचैवसर्वलक्षणसंयुतम् ॥ पंचाशांगुलवैपुल्यंउत्सेधे षोडशांगुलं ॥ द्वादशांगुलकंमूलेमुखमष्टांगुलंस्मृतमिति ॥ पंचाशांगुलवैपुल्यामितिमध्ये तिर्यङ्मानेनसमंताद्वापंचदशांगुलमित्यर्थः ॥ अथपंचमृदः ॥अश्वस्थानाद्गजस्थानाद्वल्मिकात्संगमाद्ध्रदात् ॥ सप्तमृत्पक्षे॥ राजद्वाराच्चगोष्ठाच्चमृदमानीयनिक्षिपेत्इति ॥ अथसर्वौषधयः ॥ शंखपुष्पीवचाकुष्टंवालकोनागकेसरमिति ॥ अन्या । प्युक्ताग्रंथांतरे ॥ अथपंच पल्लवाः ॥ न्यग्रोधोदुंबराश्वत्थचूतजंबूस्तथैवचेति ॥ अथपंचरत्नानि ॥ कनककुलिशनीलंपद्मरागंचमौक्तिकं ॥ अलाभे सर्वरत्नानांहैमंसर्वत्रयोजयेत् ॥ अथप्रयोगः ॥ सपत्निकोयजमानःप्राङ्मुखोपविश्यतद्दक्षिणतःप्राङ्मुखंसंस्कार्यंचोपवेश्यप्रतद्दक्षिणतउदङ्मुखान्युग्मान्विप्रानुपवेशयेत् ॥ अथवास्वयपत्नीसंस्कार्यसहितमुदङ्मुखोपविश्यस्ववामभागेप्राङ्मुखान्विप्रानुपवेशयेत् ॥ ततःसुमुखश्चे०त्यादिषठित्वादेशकालावुच्चार्यअमुककर्मांगत्वेनस्वस्तिवाचनंकरिष्यइतिसंकल्पकलशस्थापनंकुर्यात् ॥ तदुक्तंशौनकेन ॥ विभ्रत्कुंभमपांपूर्णंपिहिताननचर्चितमित्येकएवकुंभस्थाप्यः ॥ कुंभद्वयस्थापनपक्षस्त्वाश्वालायनविषयः ॥ अतएवकर्मदोत्तरभागेशिष्टैराद्रतत्वाच्छौनकोक्तत्वाच्चैकःकुंभःस्थापनीयः ॥ ॐकारस्यानुक्तगोत्रोब्रह्मापरमात्मादेवीगायत्रीछंदःप्रतिकर्मादौजपेविनियोगः ॥ भूमेमातरितिब्रह्माभूमिरनुष्टुप्भूमिप्रार्थने विनियोगः ॥ ॐभूमेमातर्निधेहिमाभद्रयासुप्रतिष्ठितं ॥ संविदानादिवाकवेश्रियांमाधेहिभूत्याम् ॥ यस्यामन्नमित्यथर्वा









लिंगोक्तस्त्रिष्टुप्धान्यविकरणेविनियोगः ॥ ॐयस्यामन्नं०मेदसे ॥ व्रीहिमत्तंयव०मातरं चेति ॥ तंदुलान् ॥ सोमेन पूर्णमितिब्रह्माजगतीकलशस्थापनेविनियोगः ॥ ॐसोमेनपूर्णंकलशंबिभर्षि । त्वष्टारूपाणांजनितापशुनां ॥ शिवास्ते संतुप्रजन्वइहयाइमान्यंऽस्मभ्यंस्वधितेयछयाअमूः॥ हिमवतइतिजलेनापूर्य ॥ हिमवतेतिशंतातिरापोनुष्टुप्जलपूरणे विनियोगः ॥ ॐहिमवतःप्रस्रवंतिसिंधौसमहसंगमः ॥ आपोहमह्यंतद्देवीर्ददंहृद्योतभेषजं ॥ यस्तेगंधइत्यथर्वाविराडति जगतीगंधप्रक्षेपणेविनियोगः ॥ ॐयस्तेगंधःपृथिवीसंबभूवयंविभ्रत्योषधयोयमापः ॥ यंगंधर्वाअप्सरसश्चभेजिरेतेनं मासुरभिंकृणुमानोद्विक्षतकश्चन ॥ इतिगंधं ॥ याओषधयइतिसर्वौषधयः ॥ याओषधयइतिभृग्वंगिरावनस्पतीरनुष्टुप् सर्वौषधीप्रक्षेपेविनियोगः ॥ ॐयाओषधयःसोमराज्ञीर्बह्वीःशतविचक्षणाः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः ॥ अघद्विष्ठेत्यथर्वावनस्पतोदुर्वाभूरिगनुष्टुप्कलशेदुर्वानिक्षेपणेविनियोगः ॥ ॐअघद्विष्टादेवजातावीरुछपथयोपनी ॥ आपोमलमिवप्राणैक्षीत्सर्वामछपथांअधि ॥ पुमान्पुंसइत्यथर्वावनस्पतीऽनुष्टुप्पंचपल्लवप्रक्षेपेविनियोगः॥ ॐपुमान्पुंसः परिजातोश्वत्थःखदिरादधि ॥ सहंतुशत्रून्मामकान्यानहंद्वेष्मियेचमां ॥ यस्तेगंधःपुरुषेत्यथर्वानुष्टुप्मृन्निक्षेपणेविनि-योगः ॥ यस्तेगंधःपुरुषेषुस्त्रिषुपुंसुभगोरुचिः योअश्वेषुवीरेषुयोमृगेषुतुहस्तिषु ॥ कन्यायांवर्चोयद्भूमेतेनास्मांअपिसंसृजमानोद्विश्वतःकश्चन ॥ पुष्पवतीत्यथर्वौषधीरनुष्टुप्फलप्रक्षेपणेविनियोगः ॥ ॐपुष्पवतीःप्रसूमतिफलिनीरफलाउत ॥ संमातरइवदुह्राअस्माअरिष्टतातये ॥ अभित्यमित्यथर्वासवितानुष्टुप्पंचरत्नप्रक्षेपेविनियोगः ॥ ॐअभित्यंदेवंसवितारं मोण्योःकविक्रतुमर्चामिसत्यसवंरत्नधामभिप्रियंमतिम् ॥ हिरण्यगर्भकस्त्रिष्टुप्हिरण्यनिक्षेपणेविनियोगः ॥ ॐहिरण्यगर्भःसमवर्तताग्रे भूतस्यजातःपतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मै देवायहविषाविधेम ॥ परिधत्तेत्यथर्वाश्चंद्र

त्रिष्टुप्सूत्रवेष्टनेविनियोगः ॥ ॐपरिधत्तधत्तनोवर्चसेमंजरामृत्युंकृणुतदीर्घमायुः ॥ बृहस्पतिःप्रायच्छद्वासएतत्सो
मायराज्ञेपरिधातवाउ ॥ पूर्णादर्वीत्यथर्वामंत्रोक्तजगतीपूर्णपात्रपिधानेविनियोगः ॥ ॐपूर्णादर्विपरापतसुपूर्णापुनरा
पत ॥ सर्वान्नूयज्ञासंभुंजतीषमूर्जंनआभरइतिपूर्णपात्रपिधानं ॥ पुष्पवतीप्रसुमतिरितितदुपरिस्त्रसन्मुखंश्रीफलंनिदध्यात् ॥
अप्सुतेतिशुनःशेपोवरुणानुष्टुप् ॥ वरुणावाहनेविनियोगः ॥ ॐअप्सुतेराजन्वरुणगृहोहिरण्ययोमिथः ॥ ततोधृत
व्रतोराजासर्वाधामानिमुंचतु ॥ ॐभूर्भुवःस्वर्जनदेवंवरुणायनमः वरुणमावाहयामीत्यावाह्यसंस्थाप्यशोडपोपचारैःसंपूज्य
प्रार्थयेत् ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्रस्थितोब्रह्मामध्येमातृगणास्मृताः ॥ कुक्षौतुसागराःसप्त
सप्तद्वीपावसुंधरा ॥ ऋग्वेदोयजुर्वेदःसामवेदोह्यथर्वणः ॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ॥ अत्रगायत्रीसावित्री
शांतिपुष्टिकरीतथा ॥ आयांतुममशांत्यर्थंदुरितक्षयकारकाः ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुममशांत्य
र्थंदुरितक्षयकारकाइतिपठित्वा ॥ केचित्तुकलशेविष्णुमावाह्यपूजयंतितदपियुक्तंततोप्रार्थयंतिचातयथा ॥ देवदानवसंवा
देमथ्यमानेमहोदधौ ॥ उत्पन्नोसितदाकुंभविधृतोविष्णुनास्वयं ॥ त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः ॥ त्व
यितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः ॥ शिवस्त्वयस्त्वमेवासिविष्णुस्त्वंचप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाः
सपैतृकाः ॥ त्वयितिष्ठंतिसर्वेपयतःकामफलप्रदाः ॥ त्वत्प्रसादादिमंयज्ञंकर्त्तुमीहेजलोद्भव ॥ सान्निध्यंकुरुमेदेवप्रसन्नो
भवसर्वदाइति ॥ ततोविप्रानगंधादिभिःसंपूज्यस्वस्तिवाचनार्थंयुष्मान्वृणेइतिमंत्रेणसर्वान्युष्मान्विप्रान्वृणुयादथवाप्रत्ये
कंगोत्राद्युच्चार्यवृणुयात् ॥ अथवात्रवरणमाकुर्यात् ॥ ततःगंधाःपांतुइत्यत्रगंधादिताम्बूलदक्षिणादिभिरर्चयेत् ॥ इति ॥
ततः ॥ अत्रकृतजानुमंडलःकमलमुकुलवदंजलिं शिरस्याधायदक्षिणेनपाणिनास्वर्णपूर्णकलशंधारयित्वा ॥ आशिषः
प्रार्थयेत् ॥ दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिच ॥ तेनआयुःप्रमाणेनपुण्याहंदीर्घमायुरस्तु ॥ अस्त्वितिविप्राः
ब्रूयुः शिवाआपःसंतु ॥ सौमनस्यमस्तु ॥ अक्षतंचारिष्टं चास्तु ॥ दत्तदुत्त्वातद्द्रव्यंब्राह्मणहस्तेपुस्थाप्य ॥ गंधाःपांत्वित्यादि





मंत्रैर्गंधपुष्पाक्षतताम्बूलदक्षिणानांदानं ॥ सुमांगल्यंचास्त्वित्यादिविप्राःप्रतिब्रूयुः ॥ गंधाःपांतुसुमंगल्यंचास्तु ॥ पुष्पाणि
पांतुसौश्रियमस्तु ॥ अक्षताःपांतुआयुष्यमस्तु ॥ तांबुलानिपांतुऐश्वर्यमस्तु ॥ दक्षिणाःपांतुबहुदेयंचास्तु ॥ इतिहेमाद्रौ
आरोग्यमस्त्विति ॥ दीर्घमायुःशांतिःपुष्टिःतुष्टिःश्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंबहुधनंचायुष्यंचास्तु ॥ यंकृत्वासर्ववेददे
वयज्ञक्रियाकर्मकर्मारंभाःशुभाःशोभनाप्रवर्त्ततेप्रवर्त्ततां ॥ तमहमोंकारमादिंकृत्वाऋग्यजुःसामाथर्वाशीर्वचनंबहुऋषि
मतंसमनुज्ञातंभवद्भिरनुज्ञातःपुण्यंपुण्याहंवाचयिष्यइतियजमानः ॥ वाच्यतामितिविप्राः ॥ द्रविणोदाइत्यांगिरसः
कुत्सोद्रविणोदास्त्रिष्टुप् ॥ सवितापश्चादितिलुशोधानाकःसवितात्रिष्टुप् ॥ नवोनवइतिसावित्रीसूर्याचंद्रमात्रिष्टुप् ॥ उच्चा
दिवित्यांगिरसोदिव्योदक्षिणादावाप्राजापत्यदक्षिणातद्दातारोवात्रिष्टुप् ॥ ॐद्रविणोदाद्र०मायुः ॥ ॐसवितापश्चात्०
मायूः ॥ ॐनवोनवोभवतिजायमानो०मायुः ॥ ॐउच्चादिविदक्षिणावंतो०आयुइत्यग्वेदिनः पठेयूः ॥ ॐद्रविणोदाः
पिपी० ॥ ॐसवितात्वास ॥ ॐनतद्रक्षासि० ॥ ॐउच्चातेजातः० ॥ ॐउपास्मैगायतानर० ॥ इतियजुर्वेदः ॥ ॐ
देवो३द्रविणोदाः ॥ ॐअद्यनोदेवसवितःऔहोवा० ॥ ॐचंद्रमाउवा० ॥ ॐउच्चाता३ताइजातमंधसा० ॥ ॐउपास्मैगाय
तान० ॥ इतिसामगाः ॥ ॐधातारातिःसवितेदंजुषंताप्रजापतिर्निधिपतिर्नोअग्निः ॥ त्वष्टाविष्णुःप्रजयासंरराणायज
मानायद्रविणोदधातु ॥ १ ॥ ॐयेनदेवंसवितारंपरिदेवाअधारयन् ॥ तेनेदंब्रह्मणस्यतेपरिराष्ट्रायधत्तन ॥ २ ॥
ॐअहोरात्राभ्यां नक्षत्रेभ्यः सूर्याचंद्रमसाभ्यां ॥ भद्राहमस्मभ्यंराजन्छकंधूमंकृधि ॥ ३ ॥ ॐ उच्चापतंतं
मरुणंसुपर्णंमध्येदिविस्तरणिंभ्राजमानम् ॥ पश्यामत्वासवितारंयमाहुरजस्रंज्योतिर्यदविंददत्त्रिः ॥ इत्यथर्ववेदिनः ॥
यजमानः ॥ ॐव्रतनियमतपस्वाध्यायक्रतुदमदानविशिष्टानांसर्वेषांब्राह्मणानांमनःसमाधीयतां ॥ विप्राः ॥ समाहित
मनसःस्मःयजमानः ॥ प्रसीदंतुभवंतः ॥ विप्राः ॥ प्रसन्नाःस्मःयजमानः ॥ शांतिरस्तु ॥ १ ॥ तुष्टिरस्तु ॥ २ ॥ पुष्टि
रस्तु ॥ ३ ॥ वृद्धिरस्तु ॥ ४ ॥ अविघ्नमस्तु ॥ ५ ॥ आयुष्यमस्तु ॥ ६ ॥ आरोग्यमस्तु ॥ ७ ॥ शिवंकर्मास्तु ॥ ८ ॥

कर्मसमृद्धिरस्तु ॥ ९ ॥ पुत्रसमृद्धिरस्तु ॥ १० ॥ वेदसमृद्धिरस्तु ॥ ११ ॥ शास्त्रसमृद्धि ॥ १२ ॥ धनधान्यसमृद्धिरस्तु ॥ १३ ॥ इष्टसंपदस्तु ॥ १४ ॥ अनिष्टनिरसनमस्तु ॥ १५ ॥ यत्पापंतत्प्रतिहतमस्तु ॥ १६ ॥ यच्छ्रेयस्तदस्तु ॥ १७ ॥उत्तरेकर्मण्यविघ्नमस्तु ॥ १८ ॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ १९॥ उत्तरोत्तराःक्रियाःशुभाःशोभनाः संपद्यंता ॥ २० ॥ तिथिकर्णमुहूर्त्तनक्षत्रग्रहलग्नसंपदस्तु ॥ २१ ॥ तिथिकर्णमुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताःपीयंतां ॥ २२ ॥ तिथिकर्णेसमूहूर्त्तेसनक्षत्रेसग्रहेसलग्नेसदैवतेप्रीयेतां ॥ २३ ॥ दुर्गापांचाल्यौप्रीयेतां ॥ २४ ॥ अग्निपुरोगाविश्वेदेवाः प्रियंताम् ॥ २५ ॥ इंद्रपुरोगामरुद्गणाप्रियंतां ॥ २६ ॥ वशिष्ठपुरोगाऋषिगणाः प्रीयंताम् ॥ २७ ॥ माहेश्वरी पुरोगाउमामातरः प्रीयंताम् ॥ २८ ॥ अरुंधतिपुरोगाएकपत्न्यःप्रीयंताम् ॥ २९ ॥ विष्णुपुरोगासर्वेदेवाःप्रियंताम् ॥ ३० ॥ ब्रह्मपुरोगासर्वेवेदाःप्रीयंताम् ॥ ३१ ॥ ब्रह्मचब्राह्मणाःप्रीयंताम् ॥ ३२ ॥ श्रीसरस्वत्यौप्रीयेतां ॥ ३३ ॥ श्रद्धामेधेप्रीयेताम् ॥ ३४ ॥ भगवतिकात्यायनीप्रीयताम् ॥ ३५ ॥ भगवतिमाहेश्वरीप्रीयताम् ॥ ३६ ॥ भगवति ऋद्धिकरीप्रीयताम् ॥ ३७ ॥ भगवतिवृद्धिकरीप्र यताम् ॥ ३८ ॥ भगवतिपुष्टिकरीप्रीयताम् ॥ ३९ ॥ भगवतितुष्टिकरीप्रीयंताम् ॥ ४० ॥ भगवंतौविघ्नविनायकौप्रीयेताम् ॥ ४१ ॥ सर्वाःकुलदेवताःप्रीयंताम् ॥ ४२ ॥ सर्वाःग्रामदेवताःप्रीयंताम् ॥ ४३ ॥ सर्वाइष्टदेवताःप्रीयंताम् ॥ ४४ ॥ हताश्चब्रह्मद्विषः ॥ ४५ ॥ हताश्चपरिपंथिनः ॥ ४६ ॥ हताश्चविघ्नकर्तारः ॥ ४७ ॥ शत्रवःपराभवंयांतु ॥ ४८ ॥ शाम्यंतुघोराणि ॥४९ ॥ शाम्यंतुपापानि ॥५०॥ शाम्यंत्वितयः ॥ ५१ ॥ शुभानिवर्द्धंतां ॥ ५२ ॥ शिवाआपःसंतु ॥ ५३ ॥ शिवाऋतवःसंतु ॥ ५४ ॥ शिवाअग्नयःसंतु ॥ ५५ ॥ शिवाआहुतयःसंतु ॥ ५६ ॥ शिवाओषधयःसंतु ॥ ५७ ॥ शिवावनस्पतयःसंतु ॥ ५८ ॥ शिवाअतिथयः संतु ॥५९॥ अहोरात्रेशिवेस्याताम् ॥ ६० ॥ शंवइतिमैत्रावरुणिःत्रिशिष्टोविश्वेदेवाजगती ॥ ॐशंवःकनिक्रदद्देव०ष्पद इत्यृग्वेदिनःपठेयुः ॥ निकामेनिकामेइतियजुर्वेदिनः ॥ त्वष्टानादैव्यं०इतिसामगाः ॥ गणांत्वोपगायंतुमारुता पर्जन्य घोषिणःपृथक् ॥ सर्गावर्षस्यवर्षतोवर्षंतुपृथिवीमनुइत्यथर्ववेदिनः ॥ यजमानः॥ शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतु





सोमसहिताआदित्यपुरोगाःसर्वेग्रहाःप्रीयंतां ॥ भगवान्नारायणःप्रीयतां ॥ भगवान्पर्जन्यःप्रीयतां ॥ भगवान्स्वामिमहासेनःप्रीयताम् ॥ पुरोनुवाक्यायायत्पुण्यंतदस्तु ॥ याज्ययापुण्यंतदस्तु॥ एतत्कल्याण्यंयैपुण्यंपुण्याहंवाचयिष्यइति यजमानः ॥ वाच्यतामितिविप्राः ॥ यजमानः ॥ ब्राह्मंपुण्यंमहर्यच्चसृष्टयुत्पादनकारकं ॥ वेदवृक्षोभवेन्नित्यंतत्पुण्याहंब्रुवतुनः॥ भोब्राह्मणाममसहकुटुंबस्यसपरिवारस्यगृहेकर्मणःपुण्याहंभवंतोब्रुवंत्वितिक्रमेणमंद्रमध्योच्चस्वरेणत्रिःब्रुयात् ॥ पुण्याहमितितथैवत्रिर्विप्राः ॥ उद्गातेवेतिद्विगोत्रोगृत्समदःशकुंतकोतिशक्वर्यष्टिर्वा ॥ उद्गातेवशकुने०वेदेत्यृग्वेदिनः पठेयुः ॥ पुनंतुमादेवजनाइतियजुर्वेदिनः ॥ पुनानसोमा३धारा२३४याइतिसामगाः ॥ पुनंतुमादेवजनाःपुनंतुमनवो धिया ॥पुनंतुविश्वाभूतानिपवमानःपुनातुमां ॥ पत्यथर्ववेदिनः ॥ यजमानः ॥ पृथिव्यामुद्धृतायांतुयत्कल्याणंपुराकृतं ॥ ऋषिभिःसिद्धगंधर्वैस्तत्कल्याणंब्रुवंतुनः भोब्राह्मणाममसकुंबस्य सपरिवारस्यग्रहेकर्मणःकल्याणंब्रुवंत्वितिकमेणमंद्रम० कल्याणमितितथैवत्रिर्विप्राः॥ अपाइतिगाथिनोविश्वामित्रःइंद्रस्त्रिष्टुप्॥ ॐअपाःसोममस्तमि०इत्यृग्वेदिनः॥ ॐयथेमांवाचं कल्याणीमितियजुर्वेदिनः ॥ कयानश्चा३इत्रा३आभुवात्दितिसामगाः ॥ विश्वंजित्कल्याण्यैमापरिधेहि ॥ कल्याणिद्विपाच्चसर्वंन्नोरक्षचतुष्पाद्यचनःस्वमित्यथर्ववेदिनः ॥ सागरस्यतुयाऋद्धिर्महालक्ष्म्यादिभिःकृता ॥ संपूर्णसुप्रभावाचाता मृद्धिंप्रब्रुवंतुनःममसहकुंटुंबस्य०कर्मणःऋद्धिंभवोतोब्रुवंत्वितिक्रमेणमं०यात् ॥ ऋध्यतामितित्रिर्विप्राः ॥ ऋध्यामेतिभूतांशःकाश्यपोश्विनौत्रिष्टुप् ॥ ॐऋध्यामस्तोमसनु०ममाइत्यृग्वेदिनःपठेयुः ॥ सत्रस्यऋद्धिरस्येतियजुर्वेदिनः ॥ औहोवाऔहोवाअगन्मज्यो०इतिसामगाः॥ ॐऋधङ्मंत्रोयोनिंयआबभूवामृतासुवर्द्धमानःसुजन्मा ॥ अदब्धासुभ्राजमानोहेवत्रितोधर्तादाधारत्रीणिइत्यथर्ववेदिनः॥ स्वस्तिर्यायाविनासाक्षात्पुण्यकल्याणवृद्धिदाः॥ विनायकप्रियानित्यंतां स्वस्तिंब्रुवंतुनः ॥ स्वस्तिऋद्धीतिगयःप्रातःपथ्यास्वस्तिस्त्रिष्टुप् ॥ ॐस्वस्तिऋद्धिं० ॥ गोपाइत्यृग्वेदिनःपठेयुः ॥ स्वस्तिनइंद्रइतियजुर्वेदिन० ॥ त्रातारमितिसामगाः ॥ स्वस्तिमात्रउतपित्रेणोअस्तुस्वस्तिगोभ्योजगतेपुरुषेभ्यः ॥ विश्वं

सुभूतंसुविदत्रंनो अस्तुज्योगेवदृशेमसूर्यमित्यथर्ववेदिनःपठेयुः ॥ मृकंडसूनोरायूष्यंध्रुवलोमशयोस्तथा ॥ आयुषातेन संयुक्तंजीवेमशरदःशतमितियजमानः ॥ जीवंतुभवंतुइतिब्राह्मणाः ॥ शतंजीवेतिप्राजापत्योयक्ष्मनाशनइंद्रस्त्रिष्टुप् ॥ ॐशतंजीवशरदो० । दुरित्यृग्वेदिनः ॥ शतमिन्नुशरदो०इतियजुर्वेदिनः ॥ आयुर्विश्वायुर्विश्वमायुरितिसामगाः ॥ आयुरस्मैधेहिजातवेदःप्रजांत्वष्टारधिनिधेह्यस्मैरायस्पोषंसवितरासुवास्मिशतंजीवातिशरदस्तवायं ॥ इत्यथर्ववेदिनः ॥ शिवगौरिविवाहेयायास्मिन्रामेनृपात्मजे ॥ धनदस्यगृहेयास्मिरस्माकंसास्तुसंपदमितियजमानः ॥ अस्तुश्रीरितिविप्राः श्रीयइतिकण्वोघोरःपवमानसोमस्त्रिष्टुप् ॥ ॐश्रियेजातश्रियो०द्रावित्यृग्वेदिनः ॥ मनसःकामामाकूतिमितियजुर्वेदिनः ॥ श्रायंतइवसूरायामितिसामगाः ॥ एहयांतुवरुणःसोमोअग्निर्बृहस्पतिर्वसुभिरेहयांतु० ॥ प्रजापतिर्लोकपालोधाताब्रह्माचदेवराट् । भगवान्छाश्वतोनित्यंनोरक्षंतुचसर्वतः ॥ भगवान्प्रजापतिप्रीयताम् ॥ प्रजापत्येइतिहिरण्यगर्भःप्रजापत्यःकस्त्रिष्टुप् ॥ ॐप्रजापतेनत्वदेतामित्यृग्वेदिनः ॥ प्रजापतेनत्वदितियजुर्वेदिनः ॥ हाउहाउहाउइमाः३प्रजा३इतिसामगाः ॥ प्रजापतेरावृंतोब्रह्मणांवर्मणाहंकस्यपस्यज्योतिषावर्चसाचजरदष्टिःकृतवीर्योविहायाःसहस्रायुःसुकृतश्चरेयुमित्यथर्ववेदिनः ॥ आयुष्मतेस्वस्तिमतेयजमानायदाशुषेश्रियेरत्नाषिषसंतुऋत्विग्भिर्वेदपारगैः ॥ आयुष्मतेस्वस्तिस्वस्तयइतिगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप् ॥ स्वस्तयेवाजिभिश्चइत्यृग्वेदिनः ॥ अपिपंथामपग्रहीतियजुर्वेदिनः ॥ ॐत्वमूषुवाजिनां२३४५मितिसामगाः ॥ वेदःस्वस्तिर्दुघणस्वस्तिःपरशुर्वेदिपरशुनःस्वस्ति ॥ हविष्कृतोयज्ञियायज्ञकामास्तेदेवासोयज्ञमिमंजुषंतामित्यथर्ववेदिनः ॥ स्वस्तिवाचनकर्मसमृद्धिरस्तुइतियजमानः ॥ अस्त्विर्तिविप्राः ॥ ततोयजमानस्यवामभागेपत्नीउपवेशयेत् ॥ अभिशेकंवक्ष्यमाणरीत्याकुर्यादितिस्वस्तिवाचनम् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदीरविशंकरकृतेदानखंडोक्तस्वस्तिवाचनप्रयोगरश्मिरेकादशः ११





अथस्वशाखोक्तस्वस्तिवाचनप्रयोगः ॥ पूर्ववत्कलशंसंस्थाप्यविष्णुंवरुणंचावाह्यप्रतिष्ठापूजनांतंकृत्वाब्राह्मणान्वृत्वास्वस्तिवाचनंकुर्यात् ॥ तद्यथा ॥ ॐअवनिकृतजानुमंडलःकमलमुकुलसदृशमंजलिंशिरस्याधायदक्षिणेनपाणिनास्वर्णपूर्णकलशंधारयित्वाआषिशःप्रार्थयंतेप्रार्थनामाह ॥ एताःसत्याःआषिषःसंतु ॥ दीर्घानागानद्योगिरयस्त्रिणिविष्णुपदानिचतेनआयुःप्रमाणेनपुण्याहंदीर्घमायुरस्तुइतित्रिःकर्त्ता ॥ शिवाआपःसंत्वितिब्राह्मणाःसंतुशिवापः ॥ सौमनस्यमस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ गंधाःपांतुमांगल्यंचास्त्वितिभवंतोब्रुवंतुगंधापांतुमांगल्यंचास्तु ॥ अक्षताःपांत्वायूष्यमस्त्वितिभवंतोब्रुवंतु ॥ अक्षताःपांतुआयुष्यमस्तु ॥ पुष्पाणिपांतुसौश्रियमस्त्वितिभवंतोब्रुवंतुपुष्पाणिपांतुसौश्रियमस्तु ॥ तांबुलानिपांतुऐश्वर्यमस्त्वितिभवंतोब्रुवंतुतांबुलानिपांतुऐश्वर्यमस्तु ॥ दक्षिणापांतुबहुदेयंचास्त्वितिभवंतोब्रुवंतुदक्षिणापांतुबहुदेयंचास्तु दीर्घमायुःश्रेयःशांतिपुष्टिस्तुष्टिश्चास्त्वितिभवंतोब्रुवंतु ॥ दीर्घमायुःश्रेयःशांतिपुष्टिस्तुष्टिश्चास्तु ॥ श्रीर्यशोविद्याविनयोवित्तंवहुपुत्रंबहुधनंचायुष्यंचास्तु ॥ सर्वत्रब्राह्मणैरस्त्वितिप्रत्युत्तरंदेयम् ॥ यंकृत्वासर्ववेददेवयज्ञक्रियाकर्णकर्मारंभाःशुभाःशोभनाःप्रवर्त्तंते । तमहमोंकारमाद्यंकृत्वाऋग्यजुःसामाथर्वाशिर्वचनंवहुऋषिमतंसंविज्ञातंभवद्भिरनुज्ञातःपुण्यंपुण्याहंवाचयिष्येविप्राः ॥ वाच्यतामितिवदेयुः ॥ एवमुत्तरत्रापियथायोग्यंप्रत्युत्तरंदेयं ॥ ततोयजमानः ॥ ॐभद्रंकर्णेभिश्शृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनुभिर्व्यशेमदेवहितंयदायुः ॥ १ ॥ ॐसविताप्श्चातासविता पुरस्तात्सवितोत्तरातात्सविताधरातांत्सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ॥ २ । ॐनवोनवोभवतिजायमानोन्हांकेतुरुषसामेत्यग्रंभागंदेवेभ्योविदधात्यायनप्रचंद्रमास्तिरतेदीर्घमायुः ॥ ३ ॥ ॐइममग्नआयुषेवर्चसेनयप्रियंरेतोवरुणमित्रराजन् ॥ मातेवास्मा अदितेशर्मयच्छविश्वेदेवाजरदष्टिर्यथासत् ॥ ४ ॥ ॐपार्थिवस्यरसेदेवाभगस्यतन्वो३बले ॥ आयुष्यमस्मा अग्निःसूर्योवर्च आधाद्बृहस्पतिः ॥ ५ ॥ ॐआयुरस्मैधेहिजातवेदप्रजांत्वष्टरधिनिधेह्यस्मै ॥ रायस्पोषंसवितरासुवास्मैशतंजीवातिशरदस्तवायं ॥ ६ ॥ ॐअभयंनःकरत्यंतरिक्षमभयंद्यावापृथिवीउभेइमे ॥ अभ

यंपश्चादभयंपुरस्तादुत्तरादधरादभयंनोअस्तु ॥ ॐअभयंमित्रादभयममित्रादभयंज्ञातादभयंपुरोयः ॥ अभयंनक्तमभयंदिवानःसर्वाआशाममंमित्रंभवंतु॥ॐदेवाःशरणकृतशरणामेभवंतु॥प्राच्यादिशोग्निनाराज्ञाध्यक्षेणएषाभूयासंयशसंमाकृणोतु चरमंत्रादंपराद्विपंतंश्रृणीतः ॥ ॐआयुरिंद्रोदधातुमेआयुर्देवोबृहस्पतिः॥ आयुर्मेविश्वेदेवाअहोरात्रेशतक्रतुः॥ ॐआयुरायुष्पाप्रत्रतांप्राणंप्राणोदधातुमे॥ देवायंचक्षुर्देवेभ्यःस्वर्यंतोयथायति॥ व्रतनियमतपस्वाध्यायक्रतुदमदानविशिष्ठानांब्राह्मणानांमनःसमाधीयतां ॥ विप्राःसमाहितमनसःस्म ॥ यजमानःप्रसीदंतुभवंतः ॥ विप्राःप्रसन्नास्मः ॥ यजमानः ॥ ॐ शांतिरस्तु ॥ १ ॥ पुष्टिरस्तु ॥ २ ॥ तुष्टिरस्तु ॥ ३ ॥ वृद्धिरस्तु ॥ ४ ॥ अविघ्नमस्तु ॥ ५ ॥ आयुष्यमस्तु ॥ ६ ॥ आरोग्यमस्तु ॥ ७ ॥ शिवंकर्मास्तु ॥ ८ ॥ कर्मसमृद्धिरस्तु ॥ ९ ॥ धर्मसमृद्धिरस्तु ॥ १० ॥ वेदसमृद्धिरस्तु ॥ ११ ॥ शास्त्रसमृद्धिरस्तु ॥ १२ ॥ पुत्रसमृद्धिरस्तु ॥ १३ ॥ धनधान्यसमृद्धिरस्तु ॥ १४ ॥ इष्टसंपदस्तु ॥ १५ ॥ बहिर्देशे अरिष्टनिरसनमस्तु ॥ १६ ॥ यत्पापंतत्प्रतिहतमस्तु ॥ १७ ॥ सत्रेयछ्रेयस्तदस्तु ॥ १८ ॥ उत्तरेकर्मण्यविघ्नमस्तु ॥ १९ ॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ २० ॥ उत्तरोत्तराःक्रियाशुभाःशोभनाःसंपद्यंताम् ॥ २१ ॥ तिथिकर्णमूहूर्त्तनक्षत्रसंपदस्तु ॥ २२ ॥ तिथिकर्णमूहूर्त्तनक्षत्रग्रहलग्नाधिदेवताःप्रीयंताम् ॥ २३ ॥ तिथिकर्णमूहूर्त्तनक्षत्रेसलग्नेसदेवतेप्रीयेतां ॥ २४ ॥ दुर्गापांचाल्यौप्रीयेतां ॥ २५ ॥ अग्निपुरोगाविश्वेदेवाःप्रीयंतां ॥ २६ ॥ इंद्रपुरोगामरुद्गणाःप्रीयंतां ॥ २७ ॥ ब्रह्मपुरोगासर्वेवेदाःप्रीयंतां ॥ २८ ॥ विष्णुपुरोगासर्वेदेवाःप्रीयंतां ॥ २९ ॥ माहेश्वरीपुरोगाउमामातरःप्रीयंतां ॥ ३० ॥ वशिष्ठपुरोगाऋषिगणाःप्रीयंतां ॥ ३१ ॥ अरुंधतिपुरोगाएकपत्न्यःप्रीयंतां ॥ ३२ ॥ ऋषयछंदांस्याचार्यावेदादेवायज्ञाश्चप्रीयंतां ॥ ३३ ॥ ब्रह्मचब्राह्मणाश्चप्रीयंतां ॥ ३४ ॥ श्रीसरस्वत्यौप्रीयेताम् ॥ ३५ ॥ श्रद्धामेधेप्रीयेतां ॥ ३६ ॥ भगवतीकात्यायनीप्रीयतां ॥ ३७ ॥ भगवतिमाहेश्वरीप्रीयतां ॥ ३८ ॥ भगवतिपुष्टिकरीप्रीयतां ॥ ३९ ॥ भगवतितुष्टिकरीप्रीयतां ॥ ४० ॥ भगवतिऋद्धिकरीप्रीयतां ॥ ४१ ॥ भगवतिवृद्धिकरीप्रीयतां ॥ ४२ ॥ भगवंतौविघ्नविनायकौप्रीयेतां ॥ ४३ ॥ भगवान्स्वामिमहासेनःप्रीयतां ॥ ४४ ॥ भगवान्स्वामिमहासेनःसगणःससैन्यः





सवाहनःसानुचरःसुवर्णवर्णरुपयश्चमातृगणैर्नित्यंसदापरिवृतोपुमांसंदेवंप्रपद्येवरदंप्रपद्येचकुमाररूपोभगवान्सर्वस्थानंगतः प्रीयतां ॥ ४४ ॥ हरिहरहिरण्यगर्भाःप्रीयंतां ॥ ४५ ॥ सर्वाःग्रामदेवताःप्रीयंतां ॥ ४६ ॥ सर्वाकुलदेवताःप्रीयंतां ॥ ४७ ॥ बहिरपहताःब्रह्मद्विषः ॥ हताःपरिपंथिनः ॥ हता अस्यकर्मणोविघ्नकर्त्तारः ॥ शत्रवःपराभवंयांतु ॥ शाम्यंतु घोराणि॥शाम्यंतुपापानीशाम्यंत्वितयः॥ शुभानिवर्द्धंतां॥ शिवाआपःसंतु॥ शिवाऋतवःसंतु ॥शिवावनस्पतयःसंतु॥शिवा अग्नयःसंतु ॥ शिवाअतिथयःसंतु ॥ अहोरात्रेशिवेस्यातां ॥ निकामेनिकामेनःपर्जन्योवर्षतुफलवत्योन ओषधयःपृच्यंतांयोगक्षेमोनःकल्पंतां॥ योगक्षेमोशुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगासर्वेग्रहाःप्रीयंतां॥ भगवान् नारायणःप्रीयतां ॥ भगवान्पर्जन्यःप्रीयतां ॥ भगवान्स्वामीमहासेनःप्रीयतां॥ अथपुण्याहकालान्वाचयिष्येवाच्यतांइति विप्राः ॥ ॐशकंधूमंनक्षात्राणियद्राजानमकुर्वत ॥ भद्राहमस्मैप्रायंछन्निदंराष्ट्रमसादिति ॥ १ ॥ भद्राहंनोमध्यंदिने भद्राहंसायमस्तुनः ॥ भद्राहंनोअन्हांप्रातारात्रीभद्राहमस्तुनः ॥ अहोरात्राभ्यांनक्षत्रेभ्यःसूर्याचंद्रमसाभ्यां ॥ भद्राहमस्मभ्यंराजंछकंधूमत्वंकृधि ॥ योनोभद्राहमकरःसायंनक्तमथोदिवा ॥ तस्मैतेनक्षत्रराजन्छकंधूमसदानमः ॥ योवा अहोरात्रयोःपुण्याहंवेदपुण्याहीभवतिपुण्याहंएवकुरुतेब्राह्मणोवैअहोरात्रयोः पुण्याहंतंपृछेत्केनाजिनेतिसचेत्ब्रूयात्कर्त्तव्यमितितथाकुर्यात्पुण्याहिभवतिपुण्याहमस्मैभवतिपुण्याहएवकुरुते ॥ मद्यसहकुटुंबिनेमहाजनानांनमस्कुर्वाणायआशीर्वचनमपेक्षमाणायअस्यअमुककर्मणःपुण्याहंभवंतोब्रुवंतु ॥ इतित्रिर्वदेत् ॥ ॐपुण्याहमितिविप्राः ॥ ॐत्यमुषुवाजिनंदेवजूतंसहोवानंतरुतारंरथानाम् ॥ अरिष्टनेमिंपृतनाजिमाशुंस्वस्तयेतार्क्ष्यमिहाहुवेम ॥ १ ॥ त्रातारमिंद्रमवितारमिंद्रंहुवेहुवे सुहवंशूरमिंद्र ॥ हुवेनुशक्रंपुरुहूतमिंद्रस्वस्तिनइंद्रोमघवान्कृणोतु ॥ २ ॥ आमंद्रैरिंद्रहरि भिर्याहिमयूररोमभिःमात्वा केचिद्वियमन्विनपाशिनोतिधन्वेवतांइहि ॥ ३ ॥ स्वस्तितन्मेसुप्रातःसुसायंसुदिनंसुमृगंसकुनंमेअस्तु ॥ सुहवमग्निस्व

स्त्यामर्त्यंगत्वापुनरायामिनंदन् ॥ ४ ॥ स्वस्तिनो अस्त्वभयंवो अस्तुनमोहोरात्राभ्यांअस्तु ॥ स्वस्तिमात्रउतपित्रेनो अस्तु
स्वस्तिगोभ्योजगतेपुरुषेभ्यः ॥५॥ विश्वंसुभूतंसुविदत्रंनो अस्तुज्योगेवदृशेमसूर्यम् ॥ ६ ॥ यूयंपातस्वस्तिभिःसदानः ॥
स्वस्तिमतिरूपसमृधावेतद्वैयज्ञस्य समृद्धांयद्रूपसमृध्दं यत्कर्मक्रियमाणःमृग्वजवाभिवंदति स्वस्तिनस्ययज्ञस्यपारमश्नुतेय
एवंवेद ॥ मह्यंसकुटुंविनेमहाजनानांनमस्कुर्वाणाय आशीर्वचनमपेक्षमाणायकरिष्यमाण अमुककर्मणःस्वस्तिभवंतोब्रुवंतु ॥
इतित्रिर्वदेत् ॥ आयुष्मतेस्वस्तिइतिप्रतिवचनंत्रिः ॥ ॐऋधङ्मंत्रोयोनिंयआवभूवामृतासुर्वर्द्धमानःसुजन्मा ॥ अदब्धासु
भ्राजमानोहेवत्रितोधर्तादाधारत्रीणि ॥ १ ॥ नदिदासभुवनेषुज्येष्ठंयतोजज्ञउग्रस्त्वेषनृम्णः ॥ सद्योजज्ञानोनिरिणा
तिशत्रूननुयदेनंमदंतिविश्वऊमाः ॥ २ ॥ सवितादेवेभ्यःप्रासुवतेनान्मधुर्वत्साविनृप्रसूताएवस्तुवंत्यृध्यंतेहवांअस्यस्ता
मायज्ञऋध्यतेयजमानऋध्यतेप्रजायाऋध्यतेपशुभ्यऋध्यतेब्रह्मणेयस्यैवंविद्वान्ब्रह्माभवंति ॥ मह्यंसकुटुंबिनेमहाजानां
नमस्कुर्वाणायआशीर्वचनमपेक्षमाणायकरिष्यमाणः अमुककर्मणःऋद्धिभवंतोब्रुवंतुइतित्रिः ॥ कर्मऋध्यतां ॥ शाम्यंत्व
स्यततोरोगाग्रहा विघ्ननाशकाविघ्नविनायकाः स्वस्त्ययततुनृपतय स्वस्तिगोभ्योब्राह्मणायचश्रीयंधातुर्मेधेहिश्रियामाअधि
पतिकृणु॰शामीशानोभगवांरिद्रोमायशसंकृणु श्रीर्वाअति ादस्तमकर्चशं॰तं कस्तावैश्रीस्तांवैविरेभंशंसंतिवरेभैःश्रियंपुरु
षेतीतितामर्द्धर्चशःशंसंतिप्रतिष्ठित्याएव ॥ मह्यंसहकुटुंबिनेमहाजनांनमस्कुर्वाणायआशीर्वचनमपेक्षमाणायकरिष्यमाण
अमुककर्मणःश्रीरस्त्वितिभवंतोब्रुवंतु ॥ अस्तुश्रीःइतिब्राह्मणाः ॥ मंगलानिभवंतुवर्षशतंपूर्णमस्तु ॥ गोत्राभिवृद्धिरस्तु
प्रजापतिप्रीयतां ॥ ॐप्रजापतेनत्वदेतान्यन्योविश्वारूपा णप रिताबभूव जान ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्याम
पतयोरयीणां ॥ ततः कलशोदकंमेमंत्रैः कस्मिन्पात्रेकृत्वा सकुटुंबंयजमानं विप्रारभिषिंचेयुरेरे हेतदेभिरमृतेवसाना
हिरण्यवर्णाअवद्यरूपाआपः समुद्रोवरुणश्च राजासंपातभागान् हविषोजुषंतांइंद्र प्रशिष्टावरुणप्रसूता आपः समुद्रादिव





मुद्रहंतुइंद्रप्रशिष्टावरुणप्रसूतादिवस्पृथिव्याःश्रियमावहंतु ॥ ततःकर्त्तुर्वामतःपत्नीमुपवेशयीत्वाग्रपातितजलेनाप्लाव्यदुर्वा
दिभिरुदङ्मुखविप्राअभिषिंचेयुस्तिष्ठंनततःमंत्राःतेनैवस्नापयेत्येवमादिभिः ॥ ॐपवित्रंशतधारंसृषिभिःपावमानंकृतं
तेनत्वामभिषिंचामि पावमानिःपुनंतुमात्वा ॥ १ ॥ येनदेवाःपवित्रेणात्मानं पुनतेसदातेनत्वामभिषिंचाभिपावमानिपुनं
तुत्वा ॥ २ ॥ यातेलक्ष्मीर्यःप्राप्माहृदयेयाश्रमादरे ॥ ऊर्वोरुपस्थेपायौचनाभितोनाशयाम्यहं ॥ ४ ॥ प्राचींदिशम
वेधारंयेंद्रंदैवतमैंद्रींपरिषदंयाः कन्यायेसिध्राः इंद्रेणदत्ताओषधयआपोवरुणसंमिताः ॥ ताभिष्ट्वामभिशिंचामिपावमानीः
पुनंतुत्वा ॥ ५ ॥ दक्षिणांदिशमवंपाययमंदेवतंयमीपरषदंयाः कन्यायसिध्राः यमेनदत्ताओषधयः आपोवरुणसंमिताः
ताभिष्ट्वामभिषिंचामिपावमानीः पुनातुत्वां ॥ ६ ॥ प्रतीचींदिशमवधायवरुणंदैवतवारुणींपरिषदंयाः कन्यायेषिध्राः
वरुणेनदत्ताओषधयः आपोवरुणसंमितातामिष्ट्वामभिषिंचामिपावमानीः पुनातुत्वा ॥ ७ ॥ उदीचींदिशमवधायसोमं
देवतंसौमींपरिषदंयाः कन्यायेषिध्राः सोमेनदत्ताः ओषधयआपोवरुणसंमितातामिष्ट्वामभिषिंचामिपावमानिः पुनंतुत्वा ॥
॥ ८ ॥ ध्रुवावोदिशमवधाय विष्णुंदैवतंवैष्णवीं परिषदंयाःकन्यायेसिध्राः विष्णुनादत्ताओषधयआपोवरुणसंमिताता
भिष्ट्वामभिषिंचामिपावमानीःपुनंतुत्वा ॥ ९ ॥ व्याध्र्वायांदिशमवधाय वायुदैवतंवायवीपरिषदंयाः कन्यायेसिध्राः
वायुनादत्ताओषधयः आपोवरुणसंमितातामिष्ट्वामभिषिंचामिपावमानीः पुनातुत्वा ॥ १० ॥ उर्ध्वायांदिशमवधाय
बृहस्पतिदैवतंबार्हस्पत्यांपरिषदंयाः कन्यायेसिध्राः बृहस्पतिनादत्ताओषधय आपोवरुणसंमितातामिष्ट्वामभिषिंचामिपा
वमानीः पुनातुत्वा ॥ ११ ॥ सर्वादिश्यसर्वानंतर्देशानवधायब्रह्माणंदैवतंब्राह्मींपरिषदंयाः कन्यायेसिध्राः ब्रह्मणा
दत्ताओषधयआपोवरुणसंमितातामिष्ट्वामभिषिंचामिपावमानीःपुनंतुत्वा ॥ १२ ॥ प्रपतेतःपापीलक्ष्मीनश्येतः प्रामुतः
पतअयस्मयेनांकेनंद्विषतेत्वासजाम ॥ १३ ॥ पामालक्ष्मीः पतायालरजुष्टा ॥ मितचस्कंदवंदनेवव्रक्षं ॥ ॥ अन्यत्रा
स्मत्संवितस्ताभितोधाहिरण्यहस्तोवसुनोरराणः ॥ १४ ॥ एकशतंलक्ष्म्योऽष्टमलास्यसाकंतन्वाजनुषोधिजातास्तासां

पापिष्ठानीरितः प्रहिण्मः ॥ शिवाअस्मभ्यंजातवेदोनियच्छ ॥ १५ ॥ एताएनाव्यकरंखिलेगाविष्ठिताइवरमंतांपुण्यां लक्ष्मीर्यापापीस्त्वाअंनिशनम् ॥ १६ ॥ हिरण्यवर्णाइतिशंतातिश्चंद्रमाआपस्त्रिष्टुप्अभिशेकेविनियोगः ॥ हिरण्यवर्णाः शुचयः पावकायासुजातः सविितायास्वग्निः ॥ याअग्निगर्भं दधिरेसुवर्णास्तानआपः शंस्योनाभवंतु ॥ १ ॥ यासांराजा वरुणोयातिमध्येसत्यान्यूते । अवपश्यंजनानाम् ॥ याअग्निगर्भं दधिरेसुवर्णास्तानआपः शंस्योनाभवंतु ॥ २ ॥ यासां देवादिविकृण्वंतिभक्ष्यंयाअंतरिक्षेबहुधाभवंति ॥ याअग्निगर्भं दधिरेसुवर्णास्तानआपः संस्योनाभवंतु ॥ ३ ॥ भुतोभू तेषुपयआदधातिसभूतानामधिपतिर्बभूवतस्यमृत्युश्चरतिराजसूयंसराजाराज्यमनुमन्यतामिदं ॥ १ ॥ अभिप्रेहिमापवेनु उग्रश्चेत्तासपत्नहा ॥ आतिष्ठमितवर्द्धनतुभ्यंदेवाअधिब्रुवन ॥ २ ॥ अतिष्ठंतं परिविस्वे अभूषंश्रियंवसानश्चरतिस्व रोचिः महतद्वेष्यो असुरस्यनामाविश्वरूपोअमृतानितस्थौ ॥ ३ ॥ व्याघ्रोअधिवैव्याघ्रे विक्रमस्वदिशोमहिः विशस्त्वा सर्वावांछंत्वापोदिव्याः पयस्वति ॥ ४ ॥ याआपोदिव्याः पयसामदत्यंतरिक्षउतवां पृथिव्याम् । तासांत्वासर्वासाम पामभिषिचामिवर्चसाअभित्वासर्व्यसासिर्न्वन्नापोदिव्याःपयस्वतिः ॥ यथासोमित्रवर्धनस्तथात्वासविताकरत् ॥ ६ ॥ एनाव्याघ्रंपरिष्यसाजानाः सिंहांहित्वंतिमहतेसौभगासमुद्रंनसुभवस्तस्थिवांसमर्मृज्यंतेद्वीपीनमप्स्व१तः ॥ ७ ॥ उत देवाअवहितंदेवाउन्नयथापुनः ॥ उतागश्चक्रुषंदेवादेवाजीवयथापुनः ॥ १ ॥ द्वाविमौव्यातौवातआसिंधोरापरावतः दक्षंते अन्यआवातुव्य ॥ १ ॥ मन्योवातुयद्रपः ॥ २ ॥ आवातवाहिभेषजंविवातवहियद्रपः त्वंहिविश्वभेषजदेवानांदूत ईयते ॥ ३ ॥ त्रायंतामिमंदेवास्त्रायंतांमरुतांगणाःस्त्रायंतामविश्वाभूतानियथायमस्थाअसत् ॥ ४ ॥ आत्वागमंशं तातिभिरथोअरिष्टतातिभिः दक्षंताउग्रमाभारिषांपरायक्ष्मंसुवामिते ॥ ५ ॥ अयंमेहस्तोभगवानयंमेभगवत्तरः ॥ अयं





मेविश्वभेषजोयंशिवाभिमर्षनः ॥६॥ हस्ताभ्यांदशशाखाभ्यांजिह्वावाचः पुरोगविअनामयित्नुभ्यांहस्ताभ्यांत्वाभ्यांत्वाभिः मृशामसि ॥ ७ ॥ सुरास्त्वामभिषिंचंतुब्रह्माविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्न श्चानिरुधश्चभवंतुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ २ ॥ वरुणोपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताः सर्वेदेव्यायेपांतुसर्वदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुः शांतिः कांतिस्तुष्टिश्चमातरः ॥ ४ ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यः समागताः ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिंचंतुराहुकेतुश्चतर्पिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयोमुनयोगावोदेवमातर एवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥७॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्ना निकालस्यावयवाश्चये ॥ ॐशांतिः शांतिः शांतिः ॥ ततआचाराद्ब्रह्मवस्त्रादिदानंतत्परिधानंच ॥ पुण्याहवाचनकमृद्धि रस्त्वितिभवंतोब्रुवंतु ॥ पुण्याहवाचनकालमृधिरस्त्वितिभवंतोब्रुवंतु ॥ पुण्याहवाचनकालसमृधिरस्तु ॥ ॥ इतिश्री मदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विजातिरविशंकरकृते अथर्वशाखोक्तस्वस्तिवाचनप्रयोगरश्मिर्द्वादशः ॥ १२ ॥

अथपुण्याहवाचनदेवतानिर्णयरश्मिः ॥ तत्रकौशिकसूत्रम् ॥ स्वस्त्ययनेषुशकंधूमकिमद्याहमितिप्रच्छति२भद्रंसु मंगलमितिप्रतिपाद्यंतेत्युपक्रम्यांतेथातः पुण्याहदेवताव्याख्यास्यामइति ॥ विवाहस्याग्निःशूर्याप्रजापतयः ॥ स्थाली पाकस्याग्नि ॥ गर्भाधानस्यब्रह्मा ॥ पुंसवनस्यप्रजापतिः ॥ सीमंतस्याधता ॥ विष्णुबलेः सूर्यः ॥ जातकर्मणोमृत्यु ॥ नामकर्मणःसविता ॥ चौलस्यकेशिनः॥ उपनयनस्येंद्रः ॥ श्रद्धामेवेअंतेविसर्गेसुश्रुवाः पुनरुपनयनस्याग्निरथयदिब्रह्म चर्यव्रतमाचरेत्तस्मिन्नपायहोमसमावर्त्तनस्यश्रीरिंद्रोवा ॥ शुलगवस्येशानः ॥ प्रत्यवरोहणस्यसवितोपकर्मणीव्रतेषुच सविता ॥ वास्तुहोमस्यवास्तोष्पतिरंतेप्रजापतिराहूतहोमस्येंद्रोऽन्तेप्रजापतिः ॥ आयुष्यहोमस्याग्निः आयुष्मान्नक्षत्रहोम स्यनक्षत्रसूक्तमष्टमपिदोषस्येशानः आग्रयणस्याग्रयणदेवता ॥ सर्पबलेः सर्पः । एकोद्दिष्टस्यांतेप्रजापतिः ॥ तडागानां वरुणो॥यक्षबलेर्यक्षः ॥ ग्रहशांतिहोमस्यादित्यादिनवग्रहाः ॥ नागारिहोमेब्रह्मादयः॥ कूपतडागांतेप्रधानोदकांतेप्रजा

पतिः ॥ कूष्मांडहोमस्याग्न्यादयः श्चांद्रायणस्याग्न्यादयो अग्निष्टोमस्येंद्रएवमन्येषुकर्मसुप्रजापतिरिति ॥ तेषुतेषुकर्म सुअनेनपुण्याह अमुकदेवताः प्रीयंतामित्यूहः सर्वत्र ॥ ॥ इतिश्रीमदथर्ववेदगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकर कृतेपुण्याहवाचनदेवतानिर्णयरश्मिस्त्रयोदशः ॥ १३ ॥

अथकारिकाकारोक्तरक्षाकर्मप्रयोगः ॥ चूडाकर्मादिसंस्कारेषुकर्मदिनात्पूर्वेद्युरात्रौचतस्रसुवासिन्यः संस्कार्य स्यशरीरेसतैलहरिद्राचूर्णलेपनेनरक्षांकुर्युः ॥ तत्रकेचिद्रक्षाबंधनमपिकुर्वंति ॥ तद्यथा ॥ व्रीहितंदुलपूर्णंसतांबूलंसभूतिकं नववस्त्रयुतंकांस्यपात्रंसंस्थाप्य ॥ पुजासामग्रींसंपाद्यप्राङ्मुखोपविश्यस्वदक्षिणतः संस्कार्यंचोपविश्याअककर्मांगत्वेन रक्षाकर्माहंकरिष्यइतिसंकल्पंविधाय ॥ तत्कर्मनिर्विघ्नतासिध्यर्थंगणेशांबिकयोः पूजनंकृत्वावेदविद्भिः पुण्याहंवाचयित्वा पंचगुणीकृतंकुंकुमादिनारक्तंसूत्रंसकुशजलेनप्रोक्षयेत्मंत्रैः ॥ तद्यथा ॥ तत्सवितुरितिगाथिनोविश्वामित्रः सविता गायत्री सूत्रप्रोक्षणेविनियोगः ॥ ॐतत्सवितुरिति० ॥ अग्निमीळेनवमधुच्छंदाअग्निर्गायत्रीसूत्रप्र० ॥ ॐअग्निमीळेतिऋक् ॥ इषेत्वोर्जेत्वा० ॥ १ ॥ अग्नआयाहिइतिऋक् ॥ ॐशन्नोदेवीत्यथर्वानुष्टुप्सू० ॥ ॐशन्नोदेवीतिऋक् ॥ १ ॥ विश्वे देवावसवोरक्षतेमममुतादित्याजागृतयूयमस्मिन् ॥ मेमंसनाभिरुतवान्यनाभिर्मेमंप्रापत्पौरुषेयोवधोयः ॥ येवोदेवापित रोयेचपुत्राः सचेतसोमेशृणुतेदमुक्तं ॥ सर्वेभ्योवः परिददाम्येतंस्वस्त्येनंजरसेवहाथ ॥ येदेवादिविष्ठयेपृथिव्यांयेंत रिक्षओषधीषुपशुष्वप्स्वंऽतः ॥ तेकृणुतजरसमायुरस्मैशतमन्यान्परिवृणक्तुमृत्यून् ॥ येषांप्रयाजाउतवानुयाजाहुतभागा अहुतादश्चदेवाः ॥ येषांवःपंचप्रदिशोविभक्तास्तान्वोअस्मैसत्रसदः कृणोमीतितिरभिमंत्र्य ॥ ततस्त्र्यंबकमंत्रेणतत्सूत्रंभस्म नाविरुन्मृज्यकुंकुमेनानुलिप्ययदाबध्नमितिमंत्रेणपुंसोदक्षिणहस्तेबध्नीयात् ॥ यदाबध्नमितिलिंगोक्ताथर्वानुष्टुप्सूत्रबंधने विनियोगः ॥ ॐयदाबध्नंदाक्षायणाहिरण्यंशतानिकायसुमनस्यमानाः ॥ तंतेबध्नाम्यायुषेवर्चसेबलायदीर्घायुत्वायशत





शारदायेतिबध्नीयात् ॥ कन्यायाश्चवामकरेएषातेराजन्निितिमंत्रेणबध्नीयात् ॥ एषातेत्यथर्वालिंगोक्तानुष्टुप् ॥ सूत्र बंधनेविनियोगः ॥ ॐएषातेराजन्कन्यावधूर्निधूयतांयमा ॥ सामातुर्बध्यतांगृहेथोभ्रातुरथोपितुरितिबध्नीयात् ॥ ततः सौभाग्यवत्यः संस्कार्यस्यशरीरेसतैलहरिद्रादिभिसर्वौषधिचूर्णलेपनंकुर्युः ॥ संस्कार्येपिताभ्यगुडपूगहरिद्रादिकंदद्यात् ॥ एवमाचारप्राप्तंसर्वंकृत्वाआशिषोवाचयेत् ॥ आचार्यायदक्षिणांदत्त्वाअन्येभ्योभूयसींदत्वाकृतंकर्मेश्वरार्पणंकुर्यात्यस्मा केशेति ॥ ॥ इतिश्रीमदथर्ववेदगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकरकृतेरक्षाकर्मप्रयोगरश्मिश्चतुर्दशः ॥ १४ ॥

अथांकुरार्पणमन्नप्राशनादिविवाहांतेषुसंस्कारेषुभवति ॥ अन्येष्वपिनवा गारप्रवेशनादिशुभकर्मसुभवति ॥ कर्मदिनात्प्राङ्नवमेसप्तमेपंचमेतृतीयेवाजातपननक्षत्रयुक्ते गीतवादित्रादिसहित ऐशान्यांगत्वाशुद्धांमृदमानीयरात्रौकु र्यात् ॥ अगतौसद्यःकुर्यात् ॥ अथप्रयोगः ॥ रात्रौकर्ताप्राङ्मुखउपविश्यदेशकालावुच्चार्यअमुककर्मसाफल्यनिरंतर शुभत्वसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंअकुरार्पणंकरिष्यइतिसंकल्प ॥ गोमयोपलिप्तायांभुविदुर्वांकुरैः सन्नद्धानिशुक्लसूत्रे णवेष्टितानिपंचनूतनशरावाणिसुधयाधवलितानिकुंकुमादिनाकृतबिंदूनिचतुर्दिक्षुमध्येचसंस्थाप्यब्रह्मणानभ्यर्च्यपुण्याहवा चयित्वास्थापितेषुशरावेषुआनीतांमृदंनिक्षिप्यतत्रजलंनिषिंचेत् ॥ ततस्तिलमाषादिवर्जयवादि धान्यमादायव्रीहिमते तिसूक्तेनाभिमंत्रयेत् ॥ यस्यामन्नमित्यथर्वानुष्टुप् ॥ व्रीहिमत्तमित्यथर्वाब्रह्मणस्पतीत्रिष्टुप् ॥ ओषध्यभिमंत्रणेविनि योगः ॥ यस्यामन्नंव्रीहियवौयस्यांइमाः पंचकृष्टयः ॥ भूम्यैपर्जन्यपत्न्यैनमोस्तुवर्षमेदसे ॥ व्रीहिमत्तंयवमत्तमथो माषमथोतिलम् ॥ एषवांभागोनिहितोरत्नधेयायदंतौमाहिंसिष्टंपितरंमातरंच ॥ याओषधयइतिभृग्वंगिरावनस्पतीर नुष्टुप् ॥ ओषध्यभिमंत्रणेविनियोगः ॥ याओषधयः सोमराज्ञीर्बह्वीः शतविचक्षणाः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वं हसइत्यभिमंत्रितंधान्यंमध्यपात्रेपूर्वादिदिक्पात्रेषुचक्रमेणतत्तन्मंत्रैर्वापयेत् ॥ ब्रह्मजज्ञानंवेनोबृहस्पतिब्रह्मात्रिष्टुप्धान्य वापनेविनियोगः ॥ ॐब्रह्मजज्ञानं०विवइतिमध्यपात्रे ॥ आमंद्रैरिंद्रेत्यथर्वेंद्रःत्रिष्टुप् ॥ धान्यवा० ॥ आमंद्रैरिंद्रह

रिंमिर्याहिमयूरंरोमभिः मात्वाकेचिद्वियमन्विनपाशिनोतिधन्वेवतांइहि ॥ इतिपूर्वे ॥ कुमारोयमायमोनुष्टुप्धान्य० ॥ ॐयमायसोमः पवतेयमायंक्रियतेहविः ॥ यमंहयज्ञोगछत्यग्निदूतोअरं कृतरितिदक्षिणे ॥ येपश्चाज्जुह्वतेति अथर्वावरुणो जगतीधान्य० ॥ येपश्चाज्जुह्वतिजातवेदः प्रतीच्यादिशोअभिदासंत्यस्मान् ॥ वरुणमृतत्वातिपरांचोव्यथंतांप्रत्यगेंनान्प्र तिसरेणंहन्मिइतिपश्चात् ॥सोमंराजेत्यथर्वालिंगोक्तानुष्टुप्धान्य०॥ॐसोमंराजानमवसेग्निंगीर्भिर्हवामहे॥आदित्यंविष्णुं सूर्यंब्रह्माणंचबृहस्पतिंइत्युत्तरे ॥ततःतदस्त्विवतिप्रतिष्ठा॥ब्रह्मेंद्रयमवरुणसोमान्प्रत्येकमंत्रमुच्चार्यसर्वेषांप्रतिष्ठापनंकुर्यात् ॥ वाब्रह्मादीन् ॥ ततः पदार्थानुसमयेनवाकांडानुसमयेनषोडशोपचारैः पूजनं ॥ ततोपस्थानम् ॥ दिशांप्रतीन्नमस्यामि सर्वकामफलप्रदान् ॥ कुर्वंतुसफलंकर्मकुर्वंतुसततंशुभं ॥ ततः पुष्पांजलिः सन्इंद्रोमामरुत्वान्प्राच्यादिशइतिसूक्तंपठेत् ॥ तद्यथा ॥ इंद्रोमामरुत्वान्प्राच्यादिशः पातुबाहुच्युतांपृथिवीद्यामिवोपरि ॥ लोककृतः पथिकृतोयजामहेयेदेवानांहु तभागाइहस्थ ॥ १ ॥ धातामानिर्ऋत्यादक्षिणायादिशः पांतुबाहुच्युतापृथिवीद्यामिवोपरि ॥ लोककृतः पथिकृतो यजामहेयेदेवानांहुतभागाइहस्थ ॥ २ ॥ अदितिर्मादित्यैः प्रतीच्यांदिशः पांतुबाहुच्युतापृथिवीद्यामिवोपरि ॥ लोककृतः पथिकृतोयजामहेयेदेवानांहुतभागाइहस्थ ॥ ३ ॥ सोमोमाविश्वैर्देवैरुदीच्यादिशः पांतुबाहुच्युतांपृथिवी द्यामिवोपरि ॥ लोककृतः पथिकृतोयजामहेयेदेवानांहुतभागाइहस्थ ॥ ४ ॥ धर्त्ताहित्वाधरुणोधारयाताऊर्ध्वंभानुं सविताद्यामिवोपरि ॥ लोककृतः पथिकृतोयजामहेयेदेवानांहुतभागाइहस्थ ॥ ५ ॥ प्राच्यांत्वादिशिपुरासंवृतः स्वधा यामादधामिबाहुच्युतांपृथिवीद्यामिवोपरि ॥ लोककृतः पथिकृतोयजामहेयेदेवानांहुतभागाइहस्थ ॥ ६ ॥ इतिसूक्तं पठित्वाअथेत्युत्तरसंकल्पंकृत्वातानिशरावाणिगुप्तदेशेसंस्थाप्यप्रत्यहंसेचनपूजनेकुर्यात् ॥ प्रधानकर्मकरणसमयेस्वप्रति









दिशंक्रमेणस्थापयेदिति ॥ ॥ इतीश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकरकृतेअंकुरार्पणप्रयोगरश्मिः पंचदशः ॥ १५ ॥

अथसर्वसंस्कारेषुविप्रभोजननिर्णयः ॥ तत्रशंखस्मृतिः ॥ आद्यंत्तौभोजयेद्विप्रान्शतंवादशमेवच ॥ ब्राह्मणान् मधुरान्नेनशतंपुंसवनेतथा ॥ सीमंतेजननेनाम्नीप्रतिकर्मशतंशतम् ॥ दशनिष्क्रमणेचान्नप्राशनेचौलकर्मणि ॥ व्रतबंधेच विप्राणांद्विशतेशतंचवा ॥ दशवाभोजयेदष्टौगोदानेस्नानकर्मणि ॥ विवाहेषुयथाशक्तिपाकयज्ञेषुपंचसु ॥ एवमेवद्विजान् श्रेष्टानभोजयेद्दक्षिणान्वितान् ॥ विप्राणांद्विशतेभोज्येअग्न्याधानेद्विजातयः ॥ उपवर्षादिभिः प्रोक्रमाधानेशतभोजनं ॥ पंचवादशवात्रिंशत्केचिदिछंतिसूरयः ॥ सहस्रंभोजयेत्सोमेब्राह्मणास्तुशतंपशौ ॥ चातुर्मास्यासुसर्वासुशतंपर्वणिपर्वणि ॥ इतीश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकरकृतेब्राह्मणभोजनसंख्यानिर्णयरश्मिः षोडशः ॥

अग्रेकरिष्यमाणकर्मसुहोमविधावग्निनामान्युच्यंते ॥ प्रयोगपारिजाते ॥ पावकोलौकिकोह्यग्निः प्रथमः परि कीर्तितः ॥ अग्निस्तुमारुतोनामगर्भाधानेविधीयते ॥ ततः पुंसवनेज्ञेयः पवमानस्तथैवच ॥ पुंसवनेचंद्रमसः शुंगाकर्मणि शोभनः ॥ चतुर्थ्यांतुशिखीनामधृतिहोमेग्निनामकइतिवा ॥ सीमंतेमंगलोनामप्रगल्भोजातकर्मणि ॥ नाम्निवैपार्थिवोह्यग्निः प्राशनेतुशुचिस्मृतः ॥ सभ्योनामातुचौलेतुव्रतादेशेसमुद्भवः ॥ गोदानेसूर्यनामातुकेशांतेह्यग्निरुच्यते ॥ वैश्वानरोविसर्गेतु विवाहेयोजकोत्तमः ॥ आवसथ्येद्विजोज्ञेयोवैश्वदेवेतुपावकः ॥ प्रायश्चित्तेविधीश्चैवपाकयज्ञेषुपंचकः ॥ देवानांहव्य वाहश्चपितृणांकव्यवाहनः ॥ शांतिकेवरदः प्रोक्तः पौष्टिकेबलवर्द्धनः ॥ पूर्णाहुत्यामिलोनामक्रोधोग्निश्चाभिचारके ॥ वश्यर्थेकामदोनामवनदाहेचदुःखकः ॥कुक्षौतुजाटरोज्ञेयः क्रव्यादोमृतदाहने ॥ बन्हिनामालक्षहोमेकोटिहोमेहुताशनः ॥ समुद्रेवाडवोह्यग्निः क्षयेसंवर्त्तकस्तथा ॥ ब्रह्मावैगार्हपत्यश्चइश्वरोदक्षिणस्तथा ॥ विष्णुराहवनीयस्यादग्निहोत्रेत्रयोग्नयः ॥ ज्ञात्वैवमग्निनामानिहोमकर्मसमारभेत् ॥ ॥ इतीश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकरकृतेअग्निनाम निर्णयरश्मिः सप्तदश ॥ १७ ॥

अथस्थालीपाकः ॥ तत्रादौ आचम्यप्राणानायम्य जीवास्थेति ॥ ब्रह्मजज्ञानमितिपठित्वा ॥ अत्राद्य० अमुकमासे ऽमुकपक्षेः मुकतिथावमुकवासरे तिथौममात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यये वायजमानानुज्ञयासग्रहमखउपनयनादि अमुककर्मांगत्वेनस्थालिपाकाख्यंकर्माहंकरिष्ये ॥ अथसंकल्पानंतरं ॥ त्यमूषु० ॥ त्रातारं० ॥ आमंद्रै० ॥ स्वस्त्ययनं जपित्वा ॥ अव्यसश्चव्यचसंश्चबिलंविष्यामिमायया ॥ ताभ्यांमुधृत्यवेदमथकर्माणिकृण्महेइतिमंत्रंजपित्वां ॥ ॐप्रयंच्छ पर्शुंत्वरयाहरौष्महिंसतओषधिर्दांतुपर्वन् ॥ यासांसोमः परिराज्यंबिभूवामन्युनानोवीरुधी भवंतु ॥ इतिदात्रंगृह्णाति ॥ औषधीर्दातुपर्वनीति उपरिपूर्वमूलंलुनातिछेदयतीत्यर्थः ग्रीष्मस्तेभूमइति व्रीहिशमीमिश्रोदकेनवेदिस्थानेनमस्कारः ॥ बिमिमिष्वपयस्वतीमिमिधंगृहीत्वाषट्शमीप्रागायतांचतुः शमीश्रोण्णींत्रीन्मध्ये अर्द्धचतुर्थानग्रइतिवेदींकरोति॥ तत्रतूष्टमीं वालुकयारेखाकुर्यात्सर्वत्र ॥ बृहस्पतेपरिग्रहाणवेदींसुगावोदेवासदनानिसंतु ॥ यस्यांबर्हिप्रथतांसाध्यंतरहिब्राण पृथिवीदेवीदेव्यतिप्रतिगृह्णाति ॥ ततोयत्तेभूयइतिवेदीमध्येविखनतियतः ऊनमितिसंवपतिखनतिसमंकरोतीत्यर्थः ॥ ततः त्वमस्यावपनीजनानामितिपांशुंपूरयतीवार३तूष्णीं४तत्रत्रयाणापुरस्तादुत्तरवेदींविदध्यात् ॥ द्विः शमीप्राङ यता गृत्नीसध्यर्थशमींश्रोण्यांत्रीन्मध्येअर्द्धंत्चतुर्थानग्रतः अयमर्थः ॥ पूर्वोक्तकृतवेदीमध्ये आदितः समित्कंचनत्यत्क्वाश्रोष्यो समिदर्द्धमर्द्धपरित्यज्यपूर्वकृतवेदिमध्येतिर्यक्समीत्रयअग्रतः सार्द्धत्रितयंसमिधश्च यथाभवतिथातत्रस्थंदिलंआलिख्य ॥ पूर्वोक्तबृहस्पतेपरिगृहाणेतिवेदिमध्येस्थंडिलमध्येदर्भसलाकयासंमार्जनं ॥ तन्मध्येसमिधमुक्त्वा ॥ उप्यमानांपरिगृह्णाति ॐउप्यवार३तूष्टमी४ ॥ असंबाधंमध्यतोमानवानामितिमृत्तिकांप्रथयति ॥ यस्याश्चतस्रः प्रदिशः पृथिव्याइतिचतुरस्रां करोति ॥ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददेइतिसमिधंगृहीत्वा ॥ इंद्रः सीताग्निगृह्णातुतांपूषा भिरंक्षतु ॥ सानः पयस्वतिदुहामुत्तरामुत्तरासमांइतिदक्षिणतरारभ्योत्तरतआलिखतिप्राचीमावृत्यदक्षिणतः प्राचीमपरा स्तिस्रोमध्येतस्यांत्रीहियवौवोप्यवर्षेणभूमिःपृथिवीवृतावृतासानोदधातुभद्रया ॥ प्रियेधामंनिधानीत्यद्भिः संप्रोक्ष्य ॥





यस्यामन्नं व्रिहियवमितिनमस्कृत्य ॥ ततराचारात्सुवासिन्यानीतं लौकिकाग्निं स्मार्त्ताग्नि वातैजसेनपिहितंत्वा मग्ने भृगवोन यंतामांगिरसः सदनंश्रेयएहि ॥ विश्वकर्मा पूरणेतुप्रजानन् धिष्णंपंथामनुतेनि शामश्रेयः पंथामनुतेति शामः ॥ स्वस्त्यंपंथामनु० भद्रंपंथामनु० भद्रोभवश्रेयो भवस्वस्त्योभव ॥ विश्वंभरावसुधानि प्रतिष्ठाहिरण्यवक्षा जगतो निवेशनी ॥ वैश्वानरं बिभ्रतीभूमिरग्नि मिंद्रऋषभा द्रविणंनोदधातु ॥ इत्यग्निस्छडिलेप्रतिष्ठाप्य ॥ ममाग्ने वर्चोविहवेष्वस्तुवयंत्वेधानास्तन्वंपूषेम ॥ मह्यंनमतांप्रदिशश्चतस्रस्त्वयाध्यक्षेणप्रतनाजयेम ॥ इतिसमित्रयहोमः ॥ अमुककर्मप्रारंभ निमित्तंव्रतग्रहणं करिष्ये ॥ स्वाहाकार वर्जइधनार्थत्वादित्यर्थः ॥ कर्मणेवां प्रक्षालयामिवेखायवां प्रक्षालयामि सुकृतायवांप्रक्षालयामि ॥ इतिहस्तौ प्रक्षाल्यत्रिः अपरेणाग्ने दर्भानास्तीर्य ॥ तदुत्तरमानडुहंरोहितं चर्मप्राग्ग्रीवमुत्तर लोमप्रास्तीर्य पवित्रेकुरुते ॥ दर्भावप्रछिन्न प्रांतौत्रिः प्रक्षाल्यअनुलोम मनुमार्ष्टीत त्रिर्विष्णोर्मनसा पूतेस्थइतिपवित्रीकरणं ॥ छेदनमित्यर्थः ॥ त्वंभूमिमत्येष्योजसात्वंवेद्यांसीदसिचारुरध्वरे ॥ त्वांपवित्रमृषयोभरं तत्वंपुनिहिदुरितान्यस्मत् इतिपवित्रेअभिमंत्र्यांतर्धायचरुस्याल्यांहविर्निर्वपति देवस्यत्वास० भ्यामितिअमुक देवताभ्यो जुष्टंनिर्वपामीतित्रिः चतुर्थंतूष्णीं अनेनैवमंत्रेणजुष्टंप्रोक्षामीतित्रिः ॥ ततः स्रुग्मध्येअरातयोरितिदर्भेणसंमार्जनम् ॥ ततउलूखलंमुशलंशूर्प्पंचप्रक्षाल्ययथा दैवतंचर्मोपरिस्थापनं ॥ प्रधानदैवतमंत्रेणाभि मंत्र्यव्रीहीन्नुलूखलेउप्यावघ्नंस्त्रिः हविष्कृदाइवेहिति ॥ ततोवाचंविसृजेत् ॥ अनेनस्रुग्मध्येतंदुलनिर्वपणं ॥ अनेनत्रिः कंडनंअपहत्यत्रिः सुफलीकृतान् कृत्वात्रिः प्रक्षाल्ययज्ञियत्वाध्यरुक्षदित्यग्नौचरुमधिदधाति ॥ शुद्धाः पूतास्थेतिउदकमासिंचति ॥ ॐशुद्धाः पूतायोषि तोयज्ञियाइमाआपश्चरुमवसर्पंतुशुभ्राः ॥ अदुः प्रजांबहुलान्पशून्नः पक्तौदनस्यसुकृतामेतुलोकम् ॥ १ ॥ ब्राह्मणाः शुद्धाइतितंदुलान् ॥ ॐब्रह्मणाशुद्धाउतपूताघृतेनसोमस्यांशवः स्तंदुलायज्ञियाइमे ॥ अपः प्रविशतपति गृह्णातुवश्चरुरि

मंपत्त्वासुकृतामेतल्लोकम् ॥२॥ ॐपरि त्वाग्नेपुरं वयंविप्रंसहस्यधीमहि ॥ धृषद्वर्णंदिवेदि वेहंतारं भंगुरावतइतित्रिः पर्य्य ग्निकरोति ॥ मेक्षणेनत्रिः प्रदक्षिणमुदायौतिः अतऊर्ध्वंयथाकामंउत्तरतोग्नेरुपसादयतीध्ममुत्तरंवर्हिः ॥ अग्नयेत्वाजुष्ट प्रोक्षामीतिध्मंवार ॥ ३ च० ४ ॥ पृथिव्यैत्वाजुष्टंप्रोक्षामितित्रिः ॥ ३ तू० ४ ॥ बर्हिप्रोक्षणं ॥ बर्हिमध्यात्अर्द्ध दर्भमुष्टिमभ्युक्ष्यपश्चादग्ने प्रागग्रंनिदधातिपवित्रेवा ॥ ऊर्णम्रदंप्रथस्वस्वासस्थंदेवेभ्य इतिदर्भाणामर्द्ध मादायतानवाम हस्तेगृहीत्वा तन्मध्यादेक शाखांगृहीत्वा ऋषीणांप्रस्तरोसी तिदक्षिणतोग्नेर्ब्रह्मासनंनिदधाति ॥ यजमानस्यामुक कर्मार्थेहंयक्षे ॥ ॐयजतत्रत्वंभूयत इतिब्रह्मवरणं ॥ द्यावापृथिव्यौ समीक्षतेतिब्रह्मासनं ॥ इदमत्रब्रह्मणेन मइहिपूजाप्रतिष्ठा ॥ ब्रह्मासनांशिवंसौम्यं स्थापयेद्दक्षिणेपरं ॥ आत्मासनं सदाब्रह्मा इदंदक्षतुसर्वतः ॥ ततस्तरणं ॥ अर्द्धस्तणंगृहीत्वा ॥ ॐस्तृणामिवर्हिःपरिस्तृहि० ॥ ॐस्तुणीहि० ॥ ॐदेवस्यत्वासवितु० हस्ताभ्यांप्रसूतः प्रशिषापरिस्तृणामि अनेनमंत्रेणस्तरणं ॥ ॐपरिस्तृणीहि परि धेहिवेदिमाजामिमेमांषिरसुयांशयानां ॥ होतृषद नंहरि तंहिरण्ययंनिष्काएतेयजमानस्यलोके ॥ १ ॥ एवंदर्भमुष्टीत्यादिसर्वंउत्तरतः एवंस्तरणसंख्या१०एवमुत्तरतःकुर्वन अन्यत्रसमागच्छतिएवंदक्षिणोत्तरंकरोतीत्यर्थः ॥ समाप्तिश्चपश्चिमायांस्तीर्णंप्रोक्षतीहविषांत्वाजुष्टंप्रोक्षामीतित्रिः चतूं० नानभ्युक्षितंसंस्तीर्णउपयोगंलभतेनैधोभ्याधानंनानुत्पूतंहविर्नाप्रोक्षितंयज्ञांगंतस्मिन्प्रक्षालितोपवातानिनिदधाति ॥ स्त्रव माज्यधानींचयतःवीलिनपूतमाज्यंगृहीत्वाअधिश्रोत्यपर्यग्निकृत्यपरित्वाग्नेतिमंत्रेणपूर्ववत्॥ उदगुद्वास्यपश्चादग्नेरुपसाद्य ॥ उदगग्राभ्यांपवित्राभ्यां उत्पवनं त्रिर्विष्णोर्मनसापूतमसिदेवस्त्वासवितोत्पुनात्वछिद्रेणत्वा पवित्रेणशतधारेणसहस्रधारेण सुपोत्पुनामोतितूष्णींचतुर्थं ॥ श्रृतंहविरभिघारयती ॥ ॐमध्वासमंजन् घृतवचकाराथइत्यभिघार्यउदंचउद्वासयतीत्यर्थः ॥ उद्वासिताग्नेःश्रुतमकर्महव्यमासोदपृछम मृतस्यधामइतिअग्नेः पश्चिमायांदिशिचरुतस्थालीस्थापनीयापश्चादाज्यस्थालि निधायालंकृत्यसमानेनोत्पुनातु पूर्ववदुत्पवनंअदारस्र





इतिसूक्तेनउत्तिष्ठेतकिमिछंतिदमगाअहंत्वेडेअभिभूः स्वादृगृहात् ॥ शुन्यैषिनिहतेयाजगंधोतिष्ठारातेप्रमतमेह रंस्थाः इतिऐंद्रंअवेक्षते ॥ नहविरितिशिष्टाचारः अग्निर्भूम्यामोषंधिष्वग्निमापोबिभ्रत्यग्निरश्मिषु ॥ अग्निरंतः पुरुषेषु गोष्वश्वेष्वग्नयः स्वाहा ॥ १ ॥ अग्निर्दिवआतपत्यग्नौदेवस्योर्वे१तरिक्षंअग्निमर्त्तासइंधतेहव्यवाहंघृतप्रियंस्वाहा ॥ २ ॥ अग्निवंसाः प्रथिव्यंसितनूस्त्विषिमंतंशंसितंमाकृणोतु ॥ भूम्यांदेवेभ्योददतियज्ञंहव्यमरंकृतंस्वाहा ॥ ३ ॥

युनज्मित्वाब्रह्मणादैव्येनहव्यायास्मैवोढवेजातवेदः इंधानास्त्वासुप्रजसः सुवीराज्योग्जीवेमबलीहृतोवयंत स्वाहा ॥ ५ ॥ एभिर्मंत्रैरिध्मवंचकहोमः ॥ दक्षिणतोदपात्रमुपसद्याभिमंत्रयते ॥ यथाग्नेः ब्रह्मणस्पतिसत्यधर्मा अदीधर ॥ देवस्यसवितुः सुवइत्यभिमंत्र्य ॥ अथोदकमासिंचति ॥ इहेतदेवीरमृतंवसानाहिरण्यवर्णाः अनवद्यरुपाः ॥ आपः सुमुद्रोवरुणश्चराजासंपातभागान्हविषाजुषंतां ॥ इंद्रः प्रसीष्टावरुणप्रसूताः आपःसमुद्राःदिवमुद्वहंतु॥ इंद्रःप्रसींष्टाः वरुणप्रसूताः दिवस्पृथिव्याश्रियमावहंतु ॥ इत्युदकपूरणं ॥ इतिकौशिकोक्तेः ॥ ऋत्यंत्वासत्येनापरिभिचिंचामिजात वेदइतिसहहविर्भिः सर्वसंप्रोक्ष्य ॥ जीवास्थजीव्यासंसर्वमायुर्जीव्यासं१उपजीवास्थोपजीव्यासंसर्व०२संजीवास्थसं जीव्यसंसर्व०इतित्रिराचम्य ॥ अमुककर्मणिअमुकनामानमग्निं प्रतिष्ठापयामीतिप्रतिष्ठाप्यसंपूज्य ॥ अथाग्नेरुपस्थानं ॥ ॐप्रपद्येः ॐभूः ॐप्रपद्येॐभुवः प्रपद्येॐस्वः प्रपद्येॐजनः प्रपद्येइतिप्रपद्य ॥ पश्चात्तीर्णस्यदर्भानास्तीर्य ॥ उदैधिषव्यो दत्ततिष्ठान्यस्यसदनेसीदयोस्मात्पाकतरेत्यात्मासनांनिरस्तःपराग्वसुः सहपाप्मानिरस्तः ॥ सास्तुयोस्मानद्वेष्टियंचव यंद्विष्मः ॥ इतिपार्श्वयोस्तरणंतदन्वालभ्य ॥ इदमहमर्वाक्वसोः सदनेसीदाम्यमृतस्यसननेसीदामि ॥ सत्यस्यसदने सीदामिइष्टस्यसदनेसीदामि॥ पूर्त्तस्यसदनेसीदामि ॥ मामृषदेवबर्हिस्वसंस्थंत्वध्यासदेयमूर्णम्रदमनभिशोकंततोविमृग्व रींपृथिवीमावदामिक्षमांभूमिंब्रह्मणावावृधानां ॥ ऊर्जंपिष्टंबिभ्रतीमन्नभागंघृतंत्वाभिनिंषिदेमभूमइत्युपविशति ॥ इंद्रजीव सूर्यजीवदेव्यजीवार्ज.वासमहम् ॥ बृहस्पतिर्ब्रह्माब्रह्मसदनमैं आशिष्पतेबृहस्पतेयज्ञंगोपायत्तुदुद्धत्तउन्नमतः शकेय

मितिहृदालभ्यजपेत् ॥ त्रिभिर्दर्भैः स्रुवंनिमृज्यनिष्टप्तमितिस्रुवंप्रतप्यपुनः संमार्ज्यस्थापयेत् ॥ एवंस्रुङ्मेक्षणयोः ॥ विष्णोहस्तोसीतिस्रुवग्रहणं ॥ विष्णोर्हस्तोसिदक्षिणापूर्णादत्तोबृहस्पतेः ॥ तंत्वाहंस्रुचमाददेदेवानांहव्यवाहनं ॥ अयंस्रुबोविदधातिहोमान्शताक्षरः छंदसाजगतेन ॥ सर्वयज्ञस्यसमनक्तिविष्टावार्हस्पत्येष्टिः शर्मणादैव्येनति ॥ तेन स्रुवेणचतुर्गृहणंस्रुचि ॥ भूः संभूत्यैत्वागृह्णेभूतये ॥ भुवः शंपुष्टयैत्वागृह्णयेपुष्णे ॥ २ ॥ ॐस्वः शंत्वागृहेसहस्रपोषाय ॥ ३ ॥ ॐजनस्थंत्वागृह्णेपरिमितपोषाय ॥ ४ ॥ इतिआज्यस्थालीव्यतिरिक्तहवनपात्रेगृहप्यं ॥ आभिचारिकेष्वमुष्यंत्वा प्राणायगृह्णेपानायव्यानायसमानायोदानायेति पंचममितिगृहणं ॥ ॐअग्नावग्निहृदापूतंपुरस्ताद्युक्तोयज्ञस्यचक्षुरिति जुहोतिः ॐअग्नावग्निहृदापूतंपुरस्ताद्युक्तोयज्ञस्यचक्षु

क्षतिपुरस्ताद्धोमः ॥ उदपात्रेसंपातः ॥ आज्यभागः ॥ संस्थितहोमः ॥ समृद्धिशांतानामित्येतावाज्यभागौ ॥ ॐवृष्णेबृहतेस्वर्विदेग्नेये शुक्रंहरामीत्त्विषीमते ॥ सनः स्थिदान्वलवतः कृणोतुज्योक्चनोजीवातवेदधातिअग्नयेस्वा हेत्युत्तरपूर्वार्द्धेआज्यभागंजुहुयात् ॥ तथैवदक्षिपूर्वार्द्धे ॥ ॐसोमायत्वांसोमदिव्योनृचक्षाः सुगांअस्मभ्यंपथोअनुरुयः ॥ अभिनोगोत्रंविदुषः इवनेषोत्थ नोवाचमुषतींजिगासमसीसोमायस्वाहा ॥ अत्रयेयेकर्मांगदेवारुतेषांस्थापनं ॥ तत पौर्णमासांतंतंत्रंकृत्वाप्रधानहोमः शुक्लप्रतिपदारभ्यपौर्णमासीयावत्पौर्णमासहोमः पूर्वोत्तरतंत्रयोः कृष्णप्रतिपदारभ्य अमांतंयावत्अमाहोमः कार्यः ॥ तद्यथा ॥ ॐपूर्णापश्चादुतपूर्णापुरस्तादुन्मध्यतः पौर्णमासीजिगाय ॥ तस्यांदेवैः संवसंतोमहित्वानाकस्यपृष्ठेसमिषामदेमस्वाहा ॥ इदंपौर्णमासायेतिसर्वत्रसंपातः ॥ वृषभंवाजिनंवयंपौर्णमासंयजामहे ॥ सनोददात्विक्षितांरयिमनुपदस्वतींस्वाहा ॥ २ ॥ प्रजापतेनत्वदेतांन्यन्योविश्वारूपाणिपरिभूर्जजान ॥ यत्का० ॥ ३ ॥ पौर्णमासीप्रथमायज्ञियासीदन्हांरात्रिणामतिशर्वरेषु ॥ येत्वांयज्ञैर्यज्ञयेअर्द्धयंत्यमितेनकेसुकृतः प्रविष्टाः स्वाहा ॥ इतिपौर्णमासहोमः ॥ अस्यसंस्थितीहोमइतिसंज्ञा ॥ अथामाहोमः ॥ यत्तेदेवाअकृण्वन्भागधेयममावास्येसंवसंतोमहि





त्वा ॥ तेनोनोयज्ञंपिपृहिविश्ववारेरयिंनोधेहिसुभगेसुवीरं स्वाहाअमायैइदंनमम ॥ अंतरिक्षधेनुस्तस्यांवायुत्वसः सामे वायुनांवत्सेनेषमूर्जंकामंदुहां ॥ आयुः प्रथमंप्रजांपोषंरयिंस्वाहा ॥ २ ॥ दिव्यादित्यायसमनमंत्सआर्ध्नोत् ॥ यथा दिव्यादित्यायसमनंमंन्नेवामह्यंसंनमः सन्नमतुआयु० ॥ ३ ॥ द्यौर्धेनुस्तस्यांआदित्योवत्सः सामंआदित्येनवत्सेनेष मूर्जंकामंदुहाम् ॥ आयु० ॥ ४ ॥ दिक्षुचंद्रायसमंनमंसआर्ध्नोत् ॥ यथांदिक्षिचंद्रायसमनमन्नेवामह्यंसन्नमः सन्नंमंतु आयु० ॥ ५॥ दिशोधेनबस्तासांचंद्रोवत्सः तामे चंद्रेणवत्सेनेषमूर्जंकामंदुहांआयुःप्रथमंप्रजांपोषंरयिंस्वाहा ॥ इत्यमासं स्थितिहोमः एताघृतेनैवहोतव्याः पाकतंत्रेअभ्यात्तानहोमोभवतिअद्भुतादिषुनभवंति ॥ अथाभ्यात्तानहोमः ॥ अयंहोम संस्थितिहोमात्प्रथमः कार्यः ॥ तद्यथा ॥ सविताप्रसबानामिति० ॥ सप्तदशार्थर्वाब्रह्मादिजगत्यशेषाशक्यअभ्यात्तान होमेविनियोगः ॥ सवितांप्रसवानामधिपतिः समावतु ॥ अस्मिन्ब्रह्मण्यस्मिन्कर्मण्यस्यांपुरोधायामस्यांप्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्या माशिष्यस्यांदेवहूत्यांस्वाहा ॥ सवित्रेप्रसवानामधिपतय इदंनममसर्वत्रउदपात्रेसंपातः ॥ अग्निर्वनस्पतिनामधिपतिः समावतु ॥ अस्मिन्० ॥ अग्नयेवनस्पतीनांमधिपतये० ॥ २ ॥ ॐद्यावापृथिवीदातृणा मधित्नीतेमावतां ॥ अस्मिन्० ॥ द्यावापृथ्विभ्यांदातृणामधिपत्नीभ्यां ॥ ३ ॥ वरुणोपामधिपतिः समावतु ॥ अस्मिन्० ॥ वरुणोपामधि० ॥ ४ ॥ मित्रावरुणौवृष्टयाधिपतीतौमावतां ॥ अस्मि० ॥ मित्रवरुणाभ्णां० ॥ ५ ॥ मरुतः पर्वतानामधिपतयस्तेमावंतु ॥ अस्मिन्० ॥ मरुद्भ्यः पर्व० ॥ ६ ॥ सोमोवीरुधामधिपतिःसमावतु ॥ अस्मिन् ॥ सोमायवीरुधा० ॥ ७ ॥ वायुरंतरिक्षाधिपतिः समावतु ॥ अस्मिन्० ॥ ८ ॥ सूर्यश्चक्षुषामधिपतिः समावतु ॥ अस्मिन्० ॥ ९ ॥ चंद्रमानक्षत्राणामधिपतिः समावतु ॥ अस्मिन्० ॥ १० ॥ इंद्रोदिवोधिपतिः समा

वतु ॥ अस्मिन्० ॥ ११ ॥ मरुतांपिताप॒शुनामधिपतिः समावतु ॥ अस्मिन्० ॥ १२ ॥ मरुतांपित्रेपशूनामधिपतिः समावतु ।' मृत्युः प्रजानामधिपतिः समावतु ॥ अस्मिन्० ।, मृत्यवेप्रजानामधि० ॥ १३ ॥ यमः पितृणामधिपतिः समावतु ॥ अस्मिन्० ॥ १४ ॥ पितरः परेतेमावंतु ॥ अस्मिन्० ॥ पितृभ्यःपरेतेभ्यः ॥ १५ ॥ तताअवरेतेमावंतु अस्मिन० ॥ ततोभ्योवरेभ्यः ॥ १६ ॥ ततस्ततामहास्तेमावंतु ॥ अ० ॥ ततायततामहेभ्यः इदंनममेसर्वत्रउदपात्रे संपातः ॥ अत्रप्रधानहोमः ॥ ततोउत्तरतंत्रः ॥ अकूत्यैत्वास्वाहा ॥ ॐकामायत्वास्वाहा ॥ समृद्धयेत्वास्वाहा ॥ आकूत्यैत्वाकामायत्वासमृद्धेत्वास्वाहा ॥ ॐस्तुवास्तोमंसमर्द्धयगायत्रेणरथंतरं ॥ बृहत्कायप्रवर्त्तनीस्वाहा ॥ उदपात्रे संपातः ॐपृथिव्यामग्नयेसमनमंत्सआंध्रोंत् ॥ यथापृथिव्यामग्नये समनमंन्नेवामह्यंसंन्नंमंतुस्वाहा ॥ १ ॥ पृथिवीधेनु स्तस्यांअग्निर्वत्सः सामेग्निनावत्सेनेषमूर्जंकामंदुहां ॥ आयुः प्रथमांप्रजांपोषंरयिंस्वाहा ॥ २ ॥ अंतरिक्षेवायवेसमंन मंन्सआंध्रोंत् ॥ यथांतरिक्षेवायवेसमनमंनेवामह्यंसंन्नमः संन्नंमंतुआयु० ॥ ३ ॥ अतरिक्षंधेनु० ॥ ४ ॥ दिव्यादित्या समन्नमं० ॥ ५ ॥ द्यौर्धेनुस्तस्यां० ॥ ६ ॥ दिक्षुचंद्राय० ॥ ७ ॥ दिशोधेनवस्तासांचंद्रो० ॥ ८ ॥ इतिसन्नतिहोमः ॐप्रजापतेतिआज्यमुपस्तीर्यप्रजापतिहोमः ॥ ॐप्रजापतेनत्वदेतां० परिभूर्जजान यत्का०प्रजापतयेस्वाहा ॥ इदंप्रजा पतयेनमम ॥ ततोप्रधानहोमवच्चरुशेषेणचतुर्गृहीतंकृत्वा एकमवदानंईशानदेशेॐआदेवानामपिपंथामगमयछन्कवामत दंनुप्रवोढुं ॥ अग्निर्विद्वांत्सयजासइद्धोतासोध्वरान्सऋंतूनकल्पयातिअग्नयेस्विष्टकृतेस्वाहा ॥ इतिप्रथमस्रुच ॥ १ ॥ मध्येऽवदानं१अंतेस्रुवएवंचतुर्गृहीतंकौशिकोक्तं ॥ सकृत्२दवदायद्विरभिधारयतीतिअंगुष्ठपर्वमात्रंअवदानेमितिकात्या यनःइतिस्विष्टकृतंहुत्वा ॥ उदकंसंस्पर्श्य ॥ सर्वप्रायश्चित्तीयुान्जुहोति ॥ ॐस्वाहेष्टाभ्यःस्वाहा ॥ १ ॥ ॐवषण्निष्टेभ्यः स्वाहा ॥ २ ॥ भेषजंनिष्टयैस्वाहा ॥ ३ ॥ निष्कृत्यैदुरिष्टयैस्वाहा ॥ ४ ॥ दैवीभ्यस्तनूभ्यस्वाहा ॥ ५ ॥ ॐअया





श्चाग्नेस्यनभिषस्तिश्चसत्यमित्वमयाअसिअयासामनसाकृतोयासंहव्यमुहिषे ॥ आनोधेहिभेषजंस्वाहा ॐस्वाहाइद मग्नय० ॥ ॐभूःस्वाहा ॥ ॐभुवःस्वाहा ॥ ॐस्वःस्वाहा ॐभूर्भुवःस्वःस्वाहा ॥ ॐयन्मेस्कंन्नंमनसोजातवेदोयद्वास्कंद द्धविषोयत्रयत्र ॥ उत्प्रुषोविप्रुषः संजुहोमिसत्यासंतुयजमानस्यकामाःस्वाहा ॥ इतिचतुर्गृहीतेन ॥ ॐपुनर्मैत्विंद्रियंपु नरात्माद्रविणंब्राह्मणंच॥ पुनरग्नयोधिष्ण्यायथास्थामकल्पयंतामिहैवस्वाहा ॥ (ॐयन्नोस्कन्नं) यदस्मृतिचक्रमकिंचि दग्नउपारिमचरणेजातवेदः ततः पाहितानः प्रचेतः शुभेसखिभ्योअमृतत्वमस्तुनः स्वाहा ॥ स्कंन्नस्मृतिहोमः ॥ ॐ यदद्यत्वांप्रयतीयज्ञेअस्मिनहोताचिकित्वंनवृणीमहीह ॥ ध्रुवमयोध्रुवमुताशंविष्टप्रवद्धानयज्ञमुपयाहिसोमस्वाहा ॥ इति संततहोमः॥ उदपात्रेसंपातः स्रुचिस्रुवचतुष्टयंकृत्वामनसस्यतइमंन्नोदिविदेवेषुयज्ञं ॥ स्वाहादिविस्वाहापृथिव्यांस्वाहां तरिक्षेस्वाहावातेधास्वाहा ॥ इतिचतुर्गृहीतहोमः बर्हिराज्यशेषेणक्तिपृथिवित्वानज्मिमूलेअंतरिक्षायत्वानज्मिमध्येदिवे त्वानज्मिमूलेएवंवार३स्रुवंघृतपूर्णंकृत्वातदुपरिसर्वाणिबर्हिर्होमः ॥ संबर्हिरक्तंहविषाघृतेनसमिंद्रेणवसुनासंमरुद्भिः ॥ संदेवैर्विश्वेदेवेभिरक्तमिंद्रंगछतुहविस्वाहा ॥ इतिबर्हिर्होमः ॥ यथादैवतंस्रुवमग्नौधारयनयदाज्यधान्यांतत्संस्रावयति ॥ संस्रावभागास्तविराष्ट्रहंतः प्रस्तरेष्टाबर्हिषदश्चदेवा : ॥ इमंयज्ञमभिविश्वेगृणंतः स्वाहा ॥ देवाअमृतमादयंत ॥ इति संस्रावहोमः ॥ ततोस्रुचिपूर्णमुदकंप्राचिनिनयति॥ ॐवनस्पतिभ्योवानस्पत्येभ्योओषधीभ्योवीरुद्भ्योसर्वेभ्योदेवेभ्यो देवजनेभ्यः पुण्यजनेभ्यः इदंनमम॥ प्राचीनावितिदक्षितः ॥ स्वधाप्रपितामहेभ्यः स्वधापितामहेभ्यःस्वधापितृभ्यः ॥ पितृभ्यइदंनमम ॥ पश्चिमे ॥ तार्क्ष्यायारिष्टनेमयेमृतंमह्यंस्वाहा ॥ इदंतार्क्ष्यायनमम ॥ अथोत्तरतोनिनयनं ॥ सोमाय सप्तर्षिभ्यः स्वाहा ॥ सप्तर्षिभ्यइदंनमम ॥ स्रुवोसिघृतादनिषितः सपत्नक्षयणोदिविषिदअंतरिक्षे ॥ सीदपृथिव्यांसी दोत्तरोहंभूयासमधरेमत्सपत्ना ॥ इतिस्रुवंप्राक्दंडंनिदधाति ॥ अग्नेरुत्तरतः ॥ विमुंचामिब्रह्मणाजातवेदसमग्निहोतारमज

रंरथस्पृतं ॥ सर्वादेवानांजनिमानिविद्वान्यथाभागंवहतुहव्यमग्निंअग्नयेस्वाहाइत्येकांसमिधंहुत्वा ॥ एधोस्पेधिषीय स्वाहा ॥ इतिद्वितीयां ॥ समीदसिसमेधिषीयस्वाहा ॥ इतितृतीयां ॥ तेजोसितेजोमयिधेहि ॥ इतिमुखंमार्जयति ॥ अग्नेः पूजनं अभ्यर्चतसुष्टुतिगव्यंमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंयज्ञंनयतदेवतानोघृतस्यधारामधुमत्पवंतां इतिसूक्तेनवाऋचाअग्न्युपस्थानम् ॥ प्रजापतेत्यथर्वाप्रजापतिस्त्रिष्टुप्प्रजापत्युपस्थानेविनियोगः ॥ ॐप्रजापते० इत्यू पस्थानं ॥ ॐत्र्यायुषमथर्वाग्निस्त्रिष्टुप् ॥ भस्मधारणेविनियोगः ॥ ॐत्र्यायुषंजमदग्नेकश्यपस्यत्र्यायुषम् ॥ त्रेधामृतं स्यचक्षणंत्रीण्यायूंषितेकरं ॥ इतिकंठेललाटेहृदिभस्मधारणंकृत्वा ॥ दक्षिणाग्नेःत्रीनविष्णुक्रमान्क्रमते ॥ ॐविष्णो क्रमोसिसपत्नहापृथिवीशंशितइतिप्रथमंक्रमंक्रामयित्वाश्रावपात्रात्व्रीहियवशमीमिश्रोदकंनिनयति ॥ एवंसपत्नहांतरिक्ष संशितः इतिद्वितीयं ॥ एवंसपत्नहाद्यौः संशितः॥ इतितृतीयं॥ एवमपसव्येनत्रीन्॥ सव्यम्॥ सूर्यस्यावृतंपंचब्रह्मालिंगो क्तानुष्टुप्द्वेगायत्र्युष्णिक्दक्षिणाभ्यावर्त्तनेविनियोगः ॥ सूर्यस्यामृतमन्वावर्त्तेदक्षिणामन्वावृतंसामेद्रविणंयछतुसामां ब्राह्मणवर्चसम् ॥ १ ॥ दिशोज्योतिष्मतीरभ्यावंतेतामेद्रविणम्यच्छन्तु तामेब्राह्मणवर्चसं ॥ २ ॥ सप्तऋषीनभ्या वर्त्तेतेमेद्रविं०तेमेब्राह्मणवर्चसं॥ ३ ॥ ब्रह्माभ्यावर्त्ततन्मेद्रवि० तन्मेब्राह्मणवर्चसं ॥४॥ ब्राह्मणाअभ्यावर्त्तेतेमेद्रवि०मेते ब्राह्म० ॥ ५ ॥ इतिऋग्भिअभिर्दक्षिणमावर्त्तयतिजपन्नावर्त्तयतीत्यर्थः ॥ अगन्मस्वः इत्यादित्यमीक्षते ॥ अथाग्नेः प्रदक्षिणां करोति ॥ समास्त्वेतिपंचानांशौनकोग्निर्नानः छंदांसिप्रदक्षिणेविनेयोगः ॥ समास्त्वाग्नऋतवोवर्द्धयंतुॐसंवत्सराऋषयो यानिसत्या ॥ संदिव्येनदिदिहिरोचनेनॐविश्वाआभाहिप्रदिशश्चतस्रः ॥ ॐसंचेध्यस्वाग्नेप्रचंप्रचवर्द्धयेमं ॥ ॐउच्च तिष्ठमहतेसौभगाय ॥ ॐमातेरिषन्नुपसत्ताशे अग्ने ॥ ॐब्रह्मणस्तेयशसःसंतुमान्ये॥अथाग्निंनमस्करोति॥ नमःस्तेतिभृग्वं गिराग्निरनुष्टुप्नमस्करणेविनियोगः ॥ ॐनमस्तस्मैनमोदात्रेशालापतयेचकृण्मः ॥ नमोग्नयेप्रचरतेपुरुषायचतेनमः ॥ इति





नमस्कारपूर्वकंधूमभक्षणं ॥ ततोक्षतैः ॥ इंद्रस्यवचसावयंमित्रस्यवरुणस्यच ॥ ब्रह्मणास्थापितंपात्रंपुनरुत्थापयामसि ॥ इत्यपरेणाग्निमुदपात्रंपरिक्ष्योत्तरेणाग्निंपूर्वस्थापितमुदपात्रमुत्थाप्याग्निंपश्चिमतः परिहृत्यअग्नेरुत्तरतः स्थापयतीत्यर्थ ॥ ततआपोहिष्ठामयोभुवस्तानऊर्ज्जेदधातनः ॥ महेरणायचक्षसे ॥ योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उषतीरिव मातरः ॥ तस्माअरंगमामवो यस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ इतिमार्जनंसपवित्राद्भिः ॥ पवित्रउपगृहश्चां पत्यंजलीकृत्वा ॥ ॐसमुद्रंवः प्रहिणोमि० ॥ ॐइदंजनासो० ॥ इतिद्वाभ्यांउदपात्रंनिनयति ॥ वीरपुरुषोहंभूयासमिति मुखंविमार्ष्टि ॥ ॐव्रतानीव्रतपतयउपाकरोम्यग्नये समेद्युम्नंबृहद्यशोदीर्घमायुः कृणोतुमेस्वाहा ॥ इत्येकांसमिधंव्रतविस र्जनीयेजुहोति ॥ सत्यंतत्वेनपरिषिंचामिजातवेदइत्युदकेनाग्निंत्रिः पर्युक्ष्यच०तूष्णीं ॥ अमुककर्मणः समृध्यर्थंन्यूनाति रिक्तपरिपूरणार्थंदास्यमानंपूर्णपात्रंसहिरण्यंब्रह्मणेतुभ्यमहंसंददे ॥ कर्मापवर्गेब्राह्मणभोजनसंकल्पः ॥ ॐयस्मात्कोशादिति ब्रह्मापरमात्मात्रिष्टुप्कर्मसमापनीयमंत्रजपेविनियोगः ॥ ॐयस्मात्कोशादुद्भरामवेदंतस्मिन्नंतरवद्ध्मएनम् ॥ कृतमिष्टं ब्रह्मणोवीर्येणतेनमादेवातपसावतेह ॥ ॐपुनर्मैत्विति ब्रह्मापरमात्माबृहतीआत्मानमंत्रणेविनियोगः ॥ ॐपुनर्मैत्विंद्रियं पुनरात्माद्रविणंब्राह्मणंच ॥ पुनरग्नयोधिष्ण्यायथास्थामकल्पयंतामिहैव ॥ ॐचमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंत स्मैतउपयतेतिरिक्तंतस्मैनमः ॥ अग्नयेनमः ॥ स्वस्तिश्रद्धांमेधांयशः प्रज्ञांविद्यांबुद्धींश्रियंबलंआयुष्यंतेजआरोग्यंदेहिमे हव्यवाहन ॥ इतिनमस्कारः ॥ अत्राद्य०अमुककर्मणिस्थालिपाकाख्यंकर्मकृतस्यविधेः सर्वंपरिपूर्णमस्तु ॥ शांतिसूक्तं जपित्वा ॥ कृतंकर्मेश्वरार्पणंकुर्यात् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकरकृतेस्थाली पाकप्रयोगरश्मिरष्टादशोयम् ॥

नारायणायन० श्रीगणेशायनमः॥ प्रणम्यादौगुरून्भक्त्यानत्वाऽश्यामांविशेषतः ॥ हितायशौनकीयानांकरोमि
गृहपद्धतिम् ॥ १ ॥ तत्रादौगृहयज्ञस्त्रिधा ॥ सनित्योनैमित्तकःकाम्यश्च ॥ मकरकर्कटादिसंक्रांतिव्यतिपातादिषुक्रीय
माणोनित्यः ॥ विवाहाद्युत्सवेषुक्रीयमाणोनैमित्तिकः ॥ लक्ष्म्यादिकामनयाक्रीयमाणः ॥ काम्यः ॥ काम्येकुंडमंडपा
दिनित्यं ॥ नित्यनैमित्तिकयोस्त्वनित्यम् ॥ नित्यनैमित्तिकंहित्वासर्वमन्यत्समंडपमितिमात्स्योक्तेः ॥ कुंडमेवंविधंनस्या
त्स्थंडिलंवासमाश्रयेदितिप्रपंचसाराच्च ॥ नित्यनैमित्तिकयोप्रतिपदोक्तवस्त्वलाभेतत्प्रतिनिधिरूपंवस्त्वतरंग्राह्यं ॥ काम्येतु
प्रतिनिध्यभावात्प्रतिपदोक्तवस्तून्ये वग्राह्याणिअत्रयद्यपि ग्रहयज्ञास्त्रिधाप्रोक्तपुराणश्रुतिकोविदैः ॥ प्रथमोयुतहोमःस्या
ल्लक्षहोमस्ततःपरः॥ तृतीयःकोटिहोमस्तुसर्वकामफलप्रदः॥ इत्यनेनायुतहोमादीनांप्राधान्यमुक्तं॥ तथापि॥ सूर्यसोमस्तथा
भौमोबुधोजीवःसितोर्कजः ॥ राहुः केतुरमीप्रोक्ताग्रहालोकहितावहाः॥ वित्तशक्तिगृहेनास्तिगृहपीडासमागता॥ श्रद्धया
स्वल्पवित्तेनतमेकंपूजयेद्ग्रहमित्येकस्यपीडाकरग्रहस्य पूजनेनापिइष्टसिद्धिस्मरणाद्ग्रहपूजाहोमयोरपिप्राधान्यं प्रतीयते
किंच॥ उपक्रांतस्यत्रिविधस्यापि ग्रहमखस्यहोमतंत्र देवतानुपदेशादप्याचार्येणशौनकेनैतयोः प्राधान्यंसूचितं ॥ नह्यवरो
पिप्रधानमंतरेणागान्येववक्ति ॥ कथंत्रिकालदर्शनमाचार्यस्यैवसंभवति ॥ अतः पूजाहोमयोः प्राधान्यं ॥ अयुतहोमादी
नांतुग्रहयज्ञविशेषत्वं ॥ अतएवयाज्ञवल्क्येनाप्ययुतहोमादिविधिमंतरेणैवकेवलग्रहपूजाहोमविधिः प्रदर्शितः ॥ प्रपंचि
तंचेदंशांतिमयुखेमयूखकारैः॥ अत्रकुंडमंडपादिकरणप्रकारस्यविवाहादिनैमित्तिकेष्वनावश्यकत्वंतथापिकाम्यकर्मप्रयोगा
दावावश्यकत्वादत्रकुंडमंडपादिप्रकारः कथ्यते ॥ तत्रादौभूमिशोधनपूर्वकमंडपकरणंक्रीयते ॥ तत्रभूमानमादित्यपुराणे
जालांतरगतेभानौयत्सूक्ष्मंदृश्यतेरजः ॥ प्रथमंतत्प्रमाणानांत्रसरेणुंप्रचक्षते ॥ त्रसरेणुस्तुविज्ञेयोह्यष्टौयेपरमाणवः ॥
त्रसरेणवस्तुतेह्यष्टौरथरेणुस्तुसंस्मृतः ॥ रथरेणवस्तुतेह्यष्टौवालाग्रंतत्स्मृतंबुधैः ॥ वालाग्राष्टकंलिक्षास्तुयूकालिक्ष ष्टकं
तथा ॥ अष्टौयूकायवंप्राहुरंगुलंतुयवाष्टकं ॥ अन्यत्रापियूकाष्टकंयवंप्राहुर्यवानामुदरैस्तथा ॥ अष्टभिश्चांगुलंतिर्यक्यवा
नामुत्तमंमतं ॥ सप्तभिर्मध्यमंप्रोक्तंषडभिः स्यादधमांगुलमिति ॥ द्वादशांगुलमात्रोवैवितस्तिपरिकीर्त्तितम् ॥ अंगुष्ठस्यप्रदे





शिन्याव्यासः प्रादेशउच्यते ॥ तालस्मृतोमध्यमयागोकर्णश्चाप्यनामया ॥ कनिष्ठयावितस्तिस्तुद्वादशांगुलमानकः ॥
रत्निस्त्वंगुलपर्वाणिविज्ञेयस्त्वेकविंशतिः॥ चत्वारिविंशतिश्चैवहस्तस्यादंगुलानितु ॥ किष्कुःस्मृतोद्विरत्निस्तुद्विचत्वारिं
शदंगुलः ॥ षण्णवत्यंगुलिश्चैवधनुर्दंडः प्रकीर्त्तितः ॥ धनुर्दंडयुगंनालिर्ज्ञेयाह्येतेयवांगुलैः ॥ धनुषांत्रिशतंनल्वंआहुः
संख्याविदोजनाः ॥ धनुः सहस्रेद्वेचापिगव्यूतिरुपदिश्यते ॥ अष्टौधनुः सहस्राणियोजनंपरिकीर्तितम् । विष्णुधर्मो
त्तरे ॥ यदुत्पन्नमथाश्नातिनरः संवत्सरंद्विजः ॥ एकंगोचर्ममात्रंतुभुवः प्रोक्तंविचक्षणैः ॥ बृहस्पतिः ॥ दशहस्तेन
दंडेनत्रिंशदंडानिवर्त्तनं ॥ दशतान्येवगोचर्मब्राह्मणेभ्योददातियः ॥ इतिभूमानम् ॥ मार्जनखननाद्यन्यतमप्रकारेणयथो
चितंभूमिः संशोध्य ॥ तत्रमंडपस्थलंसिद्धांतशेखरे ॥ स्थालादर्कांगुलोछ्रायंमंडपस्थलमीरितमिति ॥ मंडपंप्रकृत्यकपि
लपंचरात्रे ॥ उछ्रायोहस्तमानंस्यात्सुसमेचसुशोभनमिति ॥ ततोडंडत्रयनिर्मितदीर्घसूत्रत्रिकोणाकारयंत्रेदंडाग्राभ्यांभुवि
न्यस्तेयंत्रमुलात्तिर्यग्दंडोपरिलंबितमधोभारवद्भूमिप्राप्तंसूत्रंयथातियग्दंडमध्यसूत्रेचिन्हेयतेत्तथानिम्नाभूः पूर्वोच्चावाखन
नीयेत्यादिशिल्पशास्त्ररीत्यातांसमी कृत्यचमंडपा द्युपयुक्तांप्राचींसाधये देवंसमायांभुविद्वादशांगुलाधिकव्यासर्द्धमेकं
तन्मध्येचापरंनवांगुलव्यासार्द्धमितिवृत्तद्वयंकृत्वा तन्मध्येद्वादशांगुलं ॥ पृथुमूलंसूक्ष्माग्रंरुज्जूशंकुंनिधायनवांगुलवृत्त
रेखायांचतस्रोदिशः प्रकल्प्यतासुचतस्रोरुज्व्यः पंचदशांगुलाःशलाकाः शंकग्रस्पृष्टाग्राः स्थाप्याः ॥ शंकुसमतार्थंताष्टश
शंकग्रछायाचमहद्वृत्तरेखांपूर्वाह्णे यत्रस्पृशतिसाप्राक् ॥ यत्रापराह्णेसाप्राक् ॥ सूक्ष्मप्राचीज्ञानार्थंतुपरदिनेपितस्मिन्नेववृत्ते
शंकुछायानिर्गमप्रवेशयोश्चिन्हंकृत्वापूर्वापर दिनछाया निर्गमन चिन्हयोरंतरालमिष्टैस्त्रिचतुराद्यैर्भागैर्विभज्यापूर्वदिनछाया
प्रवेशनिर्गमांतरालंघटीः पादछायाघटियंत्रादिनाज्ञातव्याताभिर्घटिकाभिः कल्पितान्भागान् गणयेत्षष्टिभिश्चहरेत् ॥
ततोलब्धांशेनप्राच्यामेव पूर्वदिनकृतापग्रमचिन्हादुत्तरायण उत्तरस्मिन्दक्षिणायने दक्षिणस्मिन्नंकयेत्तदुपरिपूर्वछाया
प्रवेशचिन्होपरिचधृतेसूत्रेसूक्ष्माप्राचीभवति ॥ दिक्ज्ञोपायांतरंचशुल्वे ॥ कृत्तिकाश्रवणपुष्येश्चित्रास्वात्योर्यदंतरम् ॥
एतत्प्राच्यादिशोरुपंयुगमात्रोदितेसतीतिअत्रायंगुरुपदेशः ॥ रज्वोंसूक्ष्मरंध्रांनलिकांकाष्टादौबध्वातद्रंध्रेणयुगमात्रमुपरि

गतंकृत्तिकादिनक्षत्रंदृष्ट्वा॥ नलिकाताभ्यांप्राक्प्रत्यग्देशयोः सूक्ष्मपाशागद्वयमवलंबद्वयंवाभूमौ प्रक्षिप्यतच्चिन्हयोः प्राचि
सूत्रंदेयमिति ॥ एवमेवध्रुवंदृष्ट्वोदीचीसाध्याचित्रास्वात्यंतराल ज्ञानार्थंतुनलिकाद्वयेनैकेनचंडंडांतरेणत्र्यस्त्राकारयंत्रंकृत्वा
दंडंचमध्येंकयेत् ॥ नलिकाद्वयांतौतुतथातत्क्षणादिनापरस्परंयोजनीयंयथैकेनैवप्रयत्नेनयुगपन्नक्षत्रद्वयमपिदृश्यते ॥
एवंदृष्ट्वामिलितान्नलिकाद्वयांतादृंडमध्यांकाच्चपाषाणावचलंबौप्रक्षेप्तव्याविति ॥ अथमंडपादिलक्षणम् ॥ तत्रपंचरात्रे ॥
कनीयान्दशहस्तः स्यान्मध्यमोद्वादशोन्मितः ॥ तथाषोडशभिर्हस्तैर्मंडपः स्यादिहोत्तमः ॥ प्रतिष्ठासारसंग्रहे ॥ मंडपः
कलाहस्तोवासर्वलक्षणसंयुतः ॥ दशद्वादशहस्तोवाद्विद्विवृध्यातत्तः क्रमात् ॥ लिंगपुराणे ॥ तुलापुरुषदानप्रकरणे ॥
त्रिंशद्धस्तप्रमाणेनमंडपंकूटमेववा ॥ अथाष्टादशहस्तेनकलाहस्तेनवापुनरितिविंशतिहस्तोप्युक्तः ॥ मध्यस्तंभवलिकोपरि
गतैश्चतुर्भिरष्टभिर्वामृदंगाकारकलशप्रांतैः काष्ठैर्मध्येशिखराकारयतः कूटं ॥ कूटोस्त्रीशिखरंशृंगमित्यभिधानानुसारात् ॥
मध्यस्तंभोपरिसमतयाछादितोमंडपइतिहेमाद्रिः ॥संप्रतीतूकुटएवादशेलोकानाम् ॥ तत्रैवचमंडपभ्रमः॥ दशहस्तमंडपस्तु
एकमेखलपक्षेएकाग्निविधानपक्षेचोपयुक्तोभवतीइतिमदनरत्ने ॥ पंचरात्रे ॥ कुर्याद्वैष्णवयागेषुचतुर्द्वारांश्चमंडपान् ॥
सारदारुमयान्स्तंभानवेदसंख्यांश्चूडासमन्वितान् ॥ व.लिकाभूर्ध्वतस्तेषांस्तंभद्वादशकंपुनः बाह्यपीठप्रमाणेनतत्रसूत्रविधा
नतः ॥कल्पयेद्विकरंद्वारंचतुरंगुलवृद्धितः ॥ मध्यमोद्भमयोर्वेदीमंडपस्थत्रिभागतः ॥ चतुर्थांशोछ्रितिस्तस्यास्त्रिसप्तपंचतो
पिवा ॥ नवैकांदशहानंवाइष्टकाभिः प्रकल्पयेदिति ॥ चूडाशिखावलिलामितितेषांचक्षुस्तंभानांशिखाभिः प्रोतच्छिद्रण्यु
भयतश्छिद्रद्वयोपेतानिवलिकाख्यानितियक्वाष्टानिविधेयानीत्यर्थः बाह्यइत्यादि ॥ आदीमध्यस्तंभचतुष्टयंविन्यस्यत
द्वाह्यपरिधौमंडपक्षेत्रविस्तारपर्यायपीठप.रिमितमेवंशोडषस्तंभतासंपद्यते ॥ तेषुचत्वारोमंडपायामार्द्धमिताछ्रायाअष्ठहस्ता
नवहस्तावाभवंति ॥ अधममध्यमोत्तमरूपेष्वष्टहस्ताएतचत्वारः ॥ शारदातिलके ॥ उक्तत्वादितितत्रापिमध्यस्तंभेषु
चुडास्वेवतिर्यकाष्टनिवेशनम् ॥ बाह्येषुतच्चूडास्तुस्तंभकरणेषुत्वेत्यनियमः सर्वेच ॥ पंचमांशंन्यसेद्भूमौसर्वसाधारणो
विधिरित्युक्तत्वात् सूत्रपंचमांषेननिधेयाः ॥ सर्वेपिदशांगुलसूत्रवेष्टनयोगस्थौल्यादि विधेयाःकल्प्येदित्यादि ॥ कनिष्ठ





मंडपेद्वारचतुष्टयंद्विहस्तविस्तारं ॥ तथामध्यमेचतुरंगुलाधिकद्विहस्तविस्तारम् ॥ एवमुत्तमेष्टांगुलाधिकद्विहस्तविस्तारं ॥
मध्यमोत्तमयोर्वेदीत्यादि ॥ मंडपमध्ये.त्रिभागमाना.वेदिः स्त्रा.यामतृतीयचर्थ पंचमसप्तमनवमैकादशान्यतमेनोच्चा ॥ तुला
पुरुषेतुमात्स्ये॥ सप्तहस्ताभवेद्वेदीमध्येपंचकरा.वथवेतिसिद्धांतशेखरे ॥ चतुरस्त्राचतुः कोणावेदीसर्वफलप्रदा ॥ तडागादि
प्रतिष्ठानांपद्मिनीपद्मसन्निभा ॥ राज्ञांस्यात्सर्वतोभद्राचतुर्भद्रा।भशेचने॥ विवाहेश्रीधरीवेदीविंशत्यस्त्रसमन्वितेति ॥ द्वारंदे
हल्याबहिर्हस्तमात्रेद्वारशाखानिखाय।इतिनिबंधांतरे॥ व्रतखंडेतुहस्तद्वयंबहिस्त्यक्त्वातोरणानिनिवेशयेदित्युक्तंमात्स्ये ॥
द्वारेषुकार्याणिचतोरणानिचत्वार्य.पक्षीरवनस्पतीनामिति॥ अयमर्थः॥पूर्वद्वारेअश्वस्यशाखेदक्षिणेउदुंबरशाखेपश्चिमेप्लक्ष
शाखेउत्तरतोवटशाखे ॥ शाखाश्चाधममभ्यमोत्तममंडपेषुक्रमात्पंचषट्सप्तहस्तोच्चास्तासामुपरिकृतचूडासुतियक्फलमुभ
यतः ॥ सच्छिद्रंचूडान्यस्तच्छिद्रंनिदध्यात् ॥ तद्विहस्तमध्यममंडपेअंगुलषकूटाधिकंद्विहस्तंमध्ये ॥ सार्द्धहस्तद्वयमुत्तमे ॥
नियकूफलकोप.रिमध्येमंडपेषुक्रमात्चतुरंगुलाः सार्द्धचतुरंगुलाः पंचांगुलाश्चकीलाः निवेश्याः तियकूफलकंकीलाश्चतत्त
त्काष्टचाएव ॥ यद्वारतुशास्त्रे ॥ मस्तकेद्वादशांशेनशंखचक्रगदांबुजं ॥ प्रागादिक्रमयोगेनन्यसेत्तेषांस्वदारुजं ॥ द्वादशां
शोत्रफलकस्यचतुरंगुलादिरेवोक्तः ॥ शंखचक्रगदांबुजाकारकरणंवैष्णवयागविषयं ॥ शैवयागेतुतेकीलास्त्रिषूलाः स्युस्त्रि
शूलाकारत्वंचैवं ॥ मध्यकीलात्रिशूलाकारत्वंचवं ॥ मध्यकीलोनवांगुलोवृत्तःसपाद्यंगुलविस्तारःतमुभतोन्यौकिंचिद्वक्रौ॥
दैर्घमध्येश्लस्यमूलागुलद्वयंविलेप्रविशति ॥ इत्यधममंडपे ॥ मध्यत्वेएकांदशांगुलउछ्रायः पादोनत्र्यंगुलविस्तारः ॥
त्र्यंगुलोबिलप्रवेशः ॥ उत्तमेत्रयोदशांगुलउछायः सपादत्र्यंगुलोविस्तारश्चतुरंगुगुलोबिलप्रवेशः ॥ [इदंचपिंगलामते ॥
शूलेनचिन्हिताकार्याद्वारशाखास्तुमस्तके ॥ शूलेनवांगुलैर्दैर्घ्यंतुरीयांशेनविस्तृतिः ॥ ऋजुर्वैमध्यशृंगस्यात्किंचिद्वक्रंच
पक्षयोः ॥ प्रथमंतत्समाख्यातंद्व्यंगुलंरोपयेत्तथेत्यादिनोक्तं.एषामलाभेएकवृक्षजानितोरणानितस्याप्यभावेशमीद्रुमजानि
एतन्निवेशमंत्राश्चाग्निमीलइषेत्वाअग्नआयाहिशन्नोदेवीत्यनुसंधेयाः ॥ मध्यस्तंभचतुष्टयोपरिचमुरजाकृतिकाष्टेदिग्विदि
गांतरथाष्टकपोताग्रकाष्टाष्टकेनोन्नतताकार्याकटैः सद्भिस्तुसंच्छाद्याविजयाद्यास्तुमंडपाइत्युक्तत्वात् ॥ द्वारवर्जंसर्वतमंडप

आछाद्यः ॥ जयविजयभद्रविश्वरूपसुरूपध्रुवधनदधन्वकसुप्रसन्नाः ॥ एतेष्टहस्तादयोद्विहस्तवृद्धितोज्ञातव्याः ॥ यदामंडप द्वयंक्रियतेतदातत्रप्रथममंडपपरिमितरमंतरमुत्सृज्यद्वितीयोमंडपः कर्त्तव्यइतिवास्तुशास्त्रेएवंयदाधामाग्रेमंडपः क्रियतेतदा तत्रप्रथममंडपपरिमाणमंतरमुत्सृज्यपरतोमंडपोविधेयइति ॥ मात्स्ये ॥ मंडपेपताकाउक्ताः ॥ लोकेशवर्णाः परितःपताका मध्येध्वजः किंकिणिकायुतःस्यात् ॥ इतिसंग्रहेपि॥सप्तहस्तापताकास्युः सप्तमांशेनविस्तृता ॥ लोकपालानुवर्णेननवमीतु हिनप्रभा ॥ पीतरक्तादिवर्णाश्चपंचहस्ताध्वजास्मृताः ॥ द्विपंचहस्तैर्दंडैश्चवंशजैः संयुतास्तथेतिलोकपालवर्णाः ॥ इंद्रः पीतोयमः श्यामोवरुणस्फटिकप्रभः ॥ कुवेरस्तुसुवर्णाभोह्यग्निश्चापिसुवर्णभः ॥ तथैवनिर्ऋतिश्यामोवायुधूम्रः प्रशस्यते ॥ इशानस्तुभवेद्रक्तएवंध्यायेत्क्रमादिमानिति ॥ गारुडेतुपताकानांप्रकारांतरमुक्तं ॥ पंचहस्तध्वजाः कार्यावैपुल्येनद्वि हस्तकाः ॥ सप्तहस्तापताकास्युर्विंशत्यंगुलविस्तृताः दशहस्तापताकानांदंडाः पंचांशवेशिताः सिंदुराः कर्बुराधूम्राः धूस रामेघसन्निभाः ॥ हरिताः पांडुवर्णाश्चशुद्धाः पूर्वादितः क्रमात् ॥ एवंवर्णाः शुभाः कार्याः पताकाः पाकशासनेति ॥ अत्रसमचतुरस्रमंडपसाधनं मंडपादिव्यासप्रमाणां ऋज्जूंद्विगुणीकृत्यतामेवोभयतः पाशाभ्यांसहाष्टधा विभज्यपंचमां शांतेकर्शणायषष्टां शांतेशंकर्थंचचिन्हद्वयंकृत्वामंडपादेःप्राचीसूत्रप्रांतद्वयेशंकुद्वयंनिखायऋज्वंतपाशोतयोः शर्कोरासज्य वर्षणचिन्हंदक्षिणत आकृष्यशंकुचिन्हेशंकुंनिखायतः कर्षचिन्हमुत्तरतः आकृष्यशंकुंनिखायव्यत्यासंकृत्वाशकोः पाशां तावासज्यपूर्ववद्दक्षिणोत्तरयोः क्रमेणकर्षणचिन्हमाकृष्यशकुद्वयंनिहन्यात् ॥ ततइशानाग्नेयादिशंकुषुप्रादक्षिण्येन रज्जु वेष्टनान्मंडपादिचतुरस्रक्षेत्रंसिद्धंभवति॥ अत्रवृषभायसिद्धिश्चशिल्पिमतानुसारित्वात्यत्नेनसाध्या॥ मध्येवेदीसाधनम् ॥ मंडपसूत्रंप्रागायतंदक्षिणोत्तरायतंचत्रेधाभज्यतेननवभागोमंडपः संपद्यते ॥ मध्यमेनवमेंशेनतन्मानावेदिकायजमानहस्तो छ्रायाचविधेया ॥ मात्स्ये ॥ द्वारेषुकुंभद्वयमत्रकार्यंस्रगांधधूपांबररक्तमिति ॥ मदनरत्ने ॥ गंधपुष्पाक्षतोपेतान् कुंभांस्तेषुनिवेशयेत् ॥ ध्रुवंधरांवाक्पतिंचविघ्नेशंतेषुपूजयेत् ॥ मंडपस्यतुकोणेषुकलशेषुक्रमादमी ॥ अमृतोदुर्जयश्चैव सिद्धार्थोमंगलस्तथा ॥ पूज्याश्चद्वारस्थकुंभेषुशक्राद्यास्तुमनूत्तमैः ॥ मनुर्मंत्रः ॥ इतिमंडपनिरूपणंदानमयूखोक्तं ॥ अथ





प्राचीनग्रंथोक्तकुंडादिकरणानांमतिस्थौल्यतरत्वात्तत्तद्ग्रंथाशयमालोड्यक्षिप्रक्षेत्रफलादिसिद्धयेनवीनंकुंडोदाहणमाह ॥ तत्रभविष्यपुराणे ॥ वेदीपादांतरंत्यक्त्वाकुंडानिनवपंचवा ॥ वेदास्रण्येवतानिस्युर्वर्तुलान्यथवाकचित् ॥ आम्नाय रहस्ये ॥ कुंडानिचतुरस्राणिवृत्तनानाकृतीनिवा ॥ नवपंचाथवैकंवाकर्त्तव्यलक्षणान्वितम् ॥ नवकुंडविधानेतुदिक्षुकुंडाष्ट केस्थिते ॥ नवमंकारयेत्कुंडंपूर्वेशनदिगंतरे ॥ विधानेपंचकुंडानामीशानेपंचमंभवेत् ॥ अत्रचतुः कुंडीपक्षेखातंनास्ती त्युक्तंहेमाद्रौ ॥ नारदीये ॥ यत्रोपदिश्यतेकुंडचतुष्कंतत्रकर्मणि ॥ वेदास्रमर्द्धचंद्रंचवृत्तंपद्ममिभंतथा ॥ पीठवर्द्धत्तयेकुंडं सुप्रमाणेष्वगर्त्तकम् ॥ कुर्यात्कुंडानिचत्वारिप्राच्यादिषुविचणः ॥ कुंडवेद्यंतरंचैवसपादकरसंमितं ॥ त्रिंशांगुलंप्रकर्त्तव्यंअं तरंकुंडपीठयोः ॥ स्मृत्यंतरे ॥ वेदिभित्तिंपरित्यज्यत्रयोदशभिरंगुलैः ॥ हस्तमात्राणिकुंडानिचतुरस्राणिसर्वतइतिसर्वतो दीक्षुकाम्येतु॥ऐंद्रयास्तंभेचतुष्कोणंअग्नौभागेभगाकृतिं॥चंद्रार्द्धंमारणेयांम्येत्रिकोणंद्वेषनिर्ऋतौ॥ वारुण्याशांतिकेवृत्तंषड स्त्र्युच्चाटनेनिले ॥ उदीच्यांपौष्टिकेपद्मंरौद्रयामष्टास्रिमुक्तिदं ॥ शारदातिलके ॥ विप्राणांचतुरस्रंस्याद्राज्ञांवर्त्तुलमिष्यते ॥ वैश्यानामर्द्धचंद्राभंशूद्राणांत्र्यस्रमीरितं॥ चतुरस्रंचसर्वेषांकेचिदिच्छंतितांत्रिकाः॥ चतुरस्रसाधनंतुमंडपसाधनावसरउक्तम्॥ अथचतुरस्रकुंडस्यक्षेत्रफलसिद्धिः ॥ तद्यथा ॥ तत्रादौचतुरस्रस्यक्षेत्रंअंगुलानि२४चतुरस्रव्यासः २४अस्यवर्गः ५७६ उपरिआयसिध्यर्थंलिक्षैकाधिकेकृतेसतिजातंक्षेत्रफलं ५७६।०।०।१॥ अथयोनिकुंडस्यकर्त्तव्यतामाह ॥ जिनां शंक्षेत्रंअगुलानि२४तस्यपंचमांशः क्रियतेपंचभक्तेलब्धंअंगुल ४शेषंअं ०४ अस्यकरणार्थमष्टघ्नं ३२ इदंपंचभक्तंतदलब्ध यवा ५शेषं २इदंयूकाकरणार्थमष्टघ्नं १६पंचभक्तेलब्धायूका ३शेषा१ अस्यलिक्षाकरणार्थमष्टघ्नजातं ८पंचभक्तंलब्धं १एवंकृतेजातः पंचमांशः ४।६।३।१॥ अस्यद्वात्रिंशांशः क्रियते ॥ द्वात्रिंशभक्तेलब्धंअंगुल० ।० शेषं४ इदंयवार्थ मष्टघ्नं ३२अधः फलं५ योजितंसज्जातं ३८ इदंद्वात्रिंशद्भक्तंसज्जातंयव १ शेष १९ अष्टघ्नं १५२। अधः फलं १ योजितं जातं १५३ इदंद्वात्रिंशद्भक्तंलब्धंलिक्षाचतुष्टयं ४ अयंपंचमांशस्यद्वदांशः १।०१।१४ अयंपंचमांशे ४।६।३।१ योजितेसतिजातं ४।७।४।५। अयंपंचमांशः पुरः संवर्ध्यकर्णांध्रिमानेनेंदुखंडद्वयंविलिख्यतदारभ्यपंचमांशाग्रपर्यंतं

सूत्रद्वयपातेकृतेसतियोन्याकारकुंडंभवतीतिकर्त्तव्यता ॥ अथक्षेत्रफलानयनं ॥ अत्रक्षेत्रत्रयंतत्रप्रथममहत्रिकोणस्यलंबः
१७।०।२। भुज २४।४। अत्रमुखाभावात्भूम्यर्द्धमेवलंबेनगुणितंकार्यं। भुजएवभूस्तस्यार्द्धं १२ अयेननिघ्नंसज्जातं
२०४।३। इतिमहत्रिकोणस्पक्षेत्रफलं ॥ अथापरंक्षेत्रंमध्यत्रिकोणंपूर्वापरलंबः १२ भुज २४ अस्यार्द्धं १२ अनेननि
घ्नंसज्जातंफलं १४४। इतिद्वितीयत्रिकोणस्यफलं ॥ अथवृत्तार्द्धयोरेकंवृत्तात्मकंक्षेत्रंतस्यव्यासः १७।०।४। अस्य
वर्गः क्रियते। तत्रेयंरीतिः ॥ प्रथमंगोमूत्रिकारोत्यापरस्परगुणितंसज्जाफलं २९१ इदंभनवाग्निनिघ्नंसज्जातंफलं
११४२७५७ इदंपंचसहस्र ५००० भक्तंसज्जातंफलं २२८ इतिवृत्तस्यक्षेत्रफलं ॥ ततः फलत्रयाणामैक्येक्वतेजातं
फलं ५७६।१३ यवत्रयंशेषंध्यजायसिध्यर्थमितिभगाभक्षेत्रंफलम् ॥ अथार्द्धचंद्राकारकुंडकर्त्तव्यतामाह ॥ तत्रक्षेत्रं २४
अस्यपंचमांशः ४।६।३।१।५। पंचमांशस्यशतांशः ०।०।१।३।५ अयेनयुतः पंचमांशः ४।६।५।५।२
अनेवउनाक्षेत्रभूमिः १८।१।१।६ अनेनक्षेत्रमध्यचिन्हामूवृत्तार्द्धकार्यंचंद्राकृतिः स्यादितिकर्त्तव्यता ॥ अथक्षेत्रफला
नयनं ॥ वृत्तमेवएकंक्षेत्रंकल्पनीयं तस्यव्यासः ३८।२।३।३ व्यासस्यवर्गे गोमुत्रिकारोस्या कृतेसतिलब्धंफलं
१४४७।०।०।४ इदंभनवाग्नि ३८२७ निघ्नंसज्जातंफलं ५७६०८०८ इदंपंचसहस्र ५००० भक्तंसज्जातं ११५२
अस्यार्द्धेकृते ५७६।०।०।४ लिक्षाचतुष्टयमायसिध्यर्थं ॥ अत्रापिध्वजायसिद्धिरिलार्द्धचंद्राकृतिकुंडस्य क्षेत्रफल
कर्त्तव्यतासिद्धिः ॥ अथत्रिकोणकुंडस्यकर्त्तव्यतांक्षेत्रफलंचाह ॥ आदौचतुरस्रेक्षेत्रप्राच्यांजिनांशक्षेत्रस्यतृतीयोविभागः
अंगुलानि ८ पुरः संवर्ध्यतत्रचिन्हंकृत्वाततः उभयश्रोण्योश्चतुर्थांशंअंगुल ६ निधायदक्षिणोत्तरतःदत्वा ततस्त्रिषुचिन्हेषु
सूत्रदानात्कष्टरहितंत्र्यस्त्रिकुंडंस्यादितिकर्त्तव्यता ॥ अथक्षेत्रफलानयनं ॥ अत्रत्रिकोणात्मकमेकंक्षेत्रंतत्रलंबः ३२ भूः ३५
अस्यार्द्धं १८ अत्रमुखाभावात्भूम्यर्द्धंग्राह्यं ॥ ततः लंबेननिघ्नंकुमुखैकखंडमित्यनेन सूत्राशयेनगुणितेसतिलब्धं ५७६
उपरिआयसिध्यर्थं यूकाधिकंकार्यंकृतेधिकेजातं ५७६।०।१।१ अनेनध्वजायसिद्धिरितिक्षेत्रफलम् ॥ अथवृतकुंडकरण
माह ॥ तत्रादौजिनांशक्षेत्रं २४ तन्मध्यात्त्रयोदशांगुलाग्राह्याः तस्यचातुर्विंशांशः।१०।४।२।५।२ अनेनयुतात्रयोदश१३







जातंव्यासार्द्धमेतन्मितं।१३।४।२।५।२ एतत्मितेनव्यासार्द्धेनसूत्रेणकर्कटेनवामध्यचिन्हायत्तंकार्यंतन्मंडलसंज्ञोरम्यः
कुंडोभवतीतिकर्त्तव्यता ॥ अथक्षेत्रफलानयनम् ॥ तत्रवृत्तव्यासः २७।०।६।२।४ ॥ तस्यवर्गेकृते ७३४ इदंभनवाग्नि
निघ्नंसज्जातंफलं २८८०२४१८ इदंपंचसहस्रभक्तंसज्जातंफलं ५७६।०।२ इतिवृत्तकुंडस्येक्षेत्रफलम् ॥ अत्रापिध्वजाय
सिद्धिः ॥ अथषट्कोणकुंडकर्त्तव्यतामाह ॥ चतुरस्रंजीनांशं २४ क्षेत्रस्याष्टादशांगुलाः १८ ग्राह्याः तेषांद्विसप्तत्यंशः
७२ अष्टादशांगुलमध्येयुतः कार्यः ॥ तद्यथा ॥ अष्टादशस्यद्विसप्तत्यंशः अंगुल० । यव २ सअष्टादशांगुलमध्येयुतः
१८।२ ॥ अयमेवव्यासार्द्धः एतावदंगुलपरिमितकर्कटकेनचतुरस्रक्षेत्रमध्यचिन्हात्वृत्तंकृत्वाततउत्तरदिक्तः कृतवृत्त।
मितकर्कटकभ्रामणेनषट्चिन्हानिकुर्यात् ॥ ततएकमेकंचिन्हंत्यक्त्वाषट्चिन्हे षुषड्सूत्राणिदेयानि तदाषडस्रात्यंकुंडं
स्यात् ॥ ततः संधौयेंगदोषास्तेषांनाशेचषट्भुजास्तेषानाशेवृत्ती कृतमंडलस्यापिनाशेषडस्त्रिकुंडं स्यादितिकर्त्तव्यता ॥
अथक्षेत्रफलानयनम् ॥ तत्रउतराग्रमेकंत्रिकोणंग्राह्यंतस्यलंबः २७।४ भूः ३१।४।७।०। अस्यार्द्धं १५।५।१।
इदंलंबेननिघ्नमित्यनेनगोमूत्रिकयागुणितेजातंफलं ४३३।५।४। ततः त्रिणिकनिष्टानित्रिकोणानितन्मध्ये एक
त्रिकोणस्यफलंसाध्यतेलंबः ९ भुजएवभूः १०।४। अस्यार्द्धम् ५।२ अनेनलंबोगुणितश्चेत्तदा ४७।२ इदंत्रिगुणि
तंसज्जातंफलं १४४। इदंपूर्वानीतेफलेयोजितसज्जातंफलं ५७७ यूकादिकानांव्यत्ययेकृतेन्यूनाधिकंभवति ॥ अथवा
किंप्रयासेन षट्सूक्ष्माणित्रिकोणानि। तन्मध्येएकस्य क्षेत्रफलंकृत्वातत्द्वादशेनगुणितंसक्षेत्रफलंजायते ॥ तद्यथा ॥
उत्तराग्रत्रिकोणस्यलंबः ९ भूः १०।४ अस्यार्द्धम् ॥५।२ अनेगुणितोलंबः ४८। ।१। इदंद्वादशघ्नंसज्जातं
फलं ५७६।०।१। इतिषट्कोणकुंडस्यक्षेत्रफलम् ॥ ध्वजायसिद्धिश्च ॥ अथपद्माकारकुंडकर्त्तव्यतामाह ॥ आदौ
जिनांशंक्षेत्रं २४ तस्याष्टमांशः ३ तेनवर्द्धितकर्कटकेनपंचवृत्तानिकार्याणि ॥ तद्यथा। प्रथमं ३ द्वितीयं ६ तृतीयं ९
चतुर्थ १२ पंचमंयद्वृत्तंतत्स्वस्याष्टत्रिंशांशोनंकार्यं। तद्यथा ॥ अंगुल १४।४।६।६। एतत्परिमितंपंचमंकार्यंतद्
परिक्षुविदिक्षुतदंतरालेचषोडशचिन्हानिकृत्वाततः पंचचिन्हांतरेकर्कटकभ्रामणेनाष्टपत्राणिका र्याणितदनंतरंक्षेत्रंअं०

२४ अस्यार्द्ध १२ तत्परिमितकर्कटकेनवृत्तंकार्यंसर्वंचिन्हादि कलोपेअष्टदलान्येवजायंते तत्परिमितखननेपद्मकुंडो भवति ॥ अथक्षेत्रफलानयनं ॥ अत्रक्षेत्रद्वयंवर्त्तुलाकृतीतत्रप्रथमंवृत्तंअंगुल० २४ द्वितीयंक्षेत्रअंगुल० २९। ६। ५। ७। तत्रप्रथमंस्पचतुर्विंशत्यंगुलस्यवर्गः कार्यः ॥ कृतेवर्गेफलं ५७५। इदंभनवाग्नि ३९। २७ निघ्नंसञ्जातं २१६१९५२ इदंपंचसहस्र ५००० भक्तंसञ्जातंफलं ४५२३। १। अथांतिमवृत्तव्यासः। २९। ६। ५। ७ अस्यवर्गेकृते ८९०। ४। २ इदंभनवाग्निनिघ्नंकर्त्तव्यंततः पंचसहस्र ५००० भक्तंसञ्जाफलं ६८९। ४। ५ अन योरंतरार्द्धं १२। ३। ६ इदंपूर्वक्षेत्रफलेयोजितंसत्पूर्णं ५७५। ०। १ इतिपद्मकुंडस्यक्षेत्रफलं ॥ ध्वजायसि द्धिश्च ॥ अथाष्टास्त्रीकुंडकरणमाह ॥ प्रथमंक्षेत्रंअं ०२४ तस्मादष्टादशांगुलानि १८ तेषाष्टाविंशतिमोभागः। अंगुल० यव ५। युका १। लीक्षा १। अयंअष्टादेशेयोक्तव्यः ॥ १८। ५। १। १ एतन्मितेनकर्कटकेनक्षेत्रमध्येचि न्हात्वृत्तं कार्यतस्मिन्वृत्तं पूर्वाधष्टदिक्षु चिन्हानिकृत्वाद्वे चिन्हेत्यक्त्वा तृतीयेतृतीये चिन्हेऽष्टसूत्राणि देयानि तदाष्टास्रिस्यात् ॥ अथक्षेत्रफलानयनं ॥ अदौवृत्तस्यक्षेत्रफलमानीयततः अष्टधनुषांमध्येएकस्यधनुषः क्षेत्रफलंकृत्वा तदष्टघ्नंकृत्वायत्क्षेत्रफलंसंपद्यतेतद्वृत्तक्षेत्रफलाद्धीनंकार्यंएवंकृतेपूर्णस्यात् ॥ ५७६। ०। १। ० इत्यष्टास्त्रीकुंडस्यक्षेत्र फलं ॥ ध्वजायसिद्धिश्च ॥ अथकुंडोपरियोनिकरणंक्षेत्रफलानयनंचाह ॥ लंबः १२। विस्तरः अं० १० एतादृशंक्षेत्रंतस्य त्रिभागौद्वौकार्यौ २ तन्मध्येपश्चिमविभामः अं० ५ तथाचपूर्वविभागः अं० ७ तन्मध्येपश्चिमविभागेंदुखंडद्वयंलिखित्वा पूर्वविभागेसूत्रद्वयेनचिन्हितेसतियोनिर्भवतिइतिकर्त्तयता ॥ अथक्षेत्रफलायनं ॥ अत्रेक्षेत्रत्रयंपूर्वापरत्रिकोणेवृत्तार्द्ध द्वयमिति ॥ प्रथमक्षेत्रलंबः ७ भूः १० अस्यार्द्धं ५ लंबेननिघ्नतदाजातं ३५ द्वितीयक्षेत्रलंबः अं० ५ भुजार्द्धं ५ लंबेन निघ्नंजातं २५ अथवृत्तव्यासः ६। ५ व्यासस्यवर्गः ४७। ७ भनवाग्नि ३९२७ निघ्नं १६९२०४ पंचसहस्रभक्ते जातं ३३ त्रयाणामैक्याज्जातं ९३ यत्रयूकादिकगृहीत्वातितीक्ष्णतयाक्रियतेतदपूर्णं ९६ स्वल्पांतदत्वाददोषइति योनिफलम् ॥ अकंठमानमाह ॥ कंठोजिनांशमानेनेति। अंगुल १ ॥ मेखलाप्रमाणमाह ॥ प्रथमाचतुरंगुलोच्छ्राया





चतुरंगुलविस्तारा। तथाद्वितीया ३ तथातृतीया २ कुडाद्बहिः कुंडाकारापद्मस्यपद्माकारायोन्यायोनिचदिति ॥ अथ हवनानुसारीकुंडप्रमाणमाह ॥ दिग्भिर्वैभस्तुकोणैनृपकरम परेषट्करंपंक्तिलक्षेलक्षेस्या द्वेदहस्तंसदयुतहवनेहस्तयुग्मं सहस्रे ॥ हस्तश्चारत्निकुंडंशतमितहवनेरत्नि कुंडंशतार्द्धेलक्षाद्धस्तैकवृध्यादशकर मुदितंपंक्तिलक्षांतमन्यैः ॥ इत्याहुत्यानु सारिकुंडमानं ॥ अथविवाहादौक्रीयमाणोग्रहयज्ञो विवाहाद्याव्यवहितपूर्वकालेकार्यः ॥ असंभवेतुव्यवहितपूर्वकाले पिकार्यः ॥ तत्रापिसप्तदिनाधिकव्यवधानंकार्यमित्याश्वलायनगृह्यपरिशिष्टेः ॥ विवाहादौनांदीश्राद्धावधिरुक्तः स्मृतौ ॥ एकत्रिंशत्यहर्यज्ञेविवाहेदशवासराः त्रिषट्चौलोपनयनेनांदीश्राद्धंविधीयतइति ॥ तच्चसतिसंभवेविवाहाद्यर्थंग्रहमखार्थं चतंत्रेणअसंभवेपृथक्। स्थंदिलप्रमाणंतुहस्तमात्रंतुहोमानुसारेणतदधिकंवा ॥ स्थंदिलादीशानेग्रहपीठंस्थूलमानेनचतु स्त्रिंशांगुलपरिमितचतुरस्रं। द्वादशांगुलोचंमेखलाद्वययुतंचकुर्यात् ॥ तत्राद्यमेखलाद्व्यंगुलविस्ताराद्व्यंगुलोच्चा ॥ द्विती याद्व्यगुलविस्तारात्र्यंगुलोच्चा ॥ तद्गोमययेनानुलिप्यतदुपर्यहतं शुक्लवस्त्रंप्रसार्यतदुपरिगंधैरष्टदलंकुर्यात् ॥ तच्चैवं। चतुस्त्रिंशदगुलपरिमितं शुक्लंवस्त्रंसमचतुरस्रं निधायपूर्वपश्चिमप्रांत मेलनेनदक्षिणोत्तरप्रांत मेलनेनाग्नेयवायव्यकोण मेलनेनेशानकोणमेलनेनदिक्षुविदिक्षुचतत्रचिन्हानिसंपद्यंते। प्रतिमेलनमध्येअनुसंताडयेत् ॥ ततोष्टांगुलपरिमितेन सूत्रेणकर्कटकेनवाव्यासार्द्धमध्येवृत्तंरचयेत् ॥ वृत्तव्यासः षोडशांगुलः ततास्तस्मिन्वृत्तेदिक्चिन्हेभ्यउभयपार्श्वेषुकिंचि न्यूनार्द्धयवाधिकांगुलत्रयेऽष्टौचिन्हानिकुर्यात् ॥ ततोद्वाभ्यांद्वाभ्यां चिन्हाभ्यांदिक्षु विदिक्षुचाष्टौदलानिरचयेत् ॥ तैर्दलैः प्रतिदिशंपंचपंचांगुलाभूमिर्व्याप्यते ॥ अवशिष्यतेचप्रतिदिशंचतुश्चतुरंगुलपरिमिताभूमिः सातुदिक्पालनक्षत्र देवतानांस्थापनायभवति ॥ इदंचैकदेशीयमतं ॥ वस्तुतस्तुशौनकोक्तप्रकारएवसाधुः ॥ तद्यथाकुर्यादष्टदलंपद्मंवेधां शुक्लपटेऽहतइत्यादि ॥ तद्व्याख्याच ॥ प्रथमतश्चतुस्त्रिंशांगुल परिमितायामविस्तारयुक्ते शुक्लेअहतपटेचतुर्दिक्षुप्रतिदिशं सार्द्धत्रयांगुलपरिमितंवस्त्रमैशानकोण दितआग्नेयाद्यंतंदिक्पालादीनांस्थापनार्थं त्यक्त्वापूर्वदिश्यैशानमारभ्याग्नेयंयावत्स प्तविंशांगुलपरिमितांरेखांसमाकृष्यएवंदक्षिणा पश्चिमोत्तरदिक्षुतत्तत्कोणादारभ्यतत्तत्कोणपर्यंतंरेखांकर्षयेत् तेनसमचतुर

स्रंस्यात् तस्मिंत् चतुरस्रेनवनवांगुलांतरालेप्राक् पश्चिमायतेद्वेरेखेकृत्वातथैवदक्षिणोत्तरायतेद्वेरेखेकुर्यात् ॥ एवंकृते सतिप्रतिदिशमेकैकंग्रहंमध्येचैकं मितिसममावानिनवग्रहाण्युत्पद्यंते ॥ तत्रैकैकस्यगृहस्यनवांगुलपरिमितोबाहुस्तावत्ताकश्च स्यात् ॥ क्षेत्रफलतः प्रतिग्रहस्यभूमिरेकाशित्यंगुल परिमिताभवति ॥ ततः सर्वेषुगृहेषुकरणरज्जुभ्यांमध्यंसाधयित्वा ग्रहमध्यदिंगमध्ययोः कर्काटकसंरक्षणेनसमत्वविधायकर्काटकेनहस्तादिनासंताब्रगृहमध्यंकुर्यादित्यादि ॥ तस्मिन्मध्येऽ ष्टसुदलेषुचद्वादशद्विगुणंचैवत्रिचतुः पादनत्रयं ॥ सूर्यादीनांक्रमात्यंच विंशत्यर्द्धमंगुलमित्या युक्तप्रमाणातिनद्ग्रहवर्ण चंदनैर्मंडलानिविलिखेत् ॥ एतदेवनवग्रहहाणांक्षेत्रनिर्माणक्षेत्रफलोद्घाटनप्रकरणंसव्याख्यंपंचश्लोक्यासविस्तरमाह ॥ तद्यथा ॥ पीठयुग्मकरंमिमायविलिखेत्पद्मंदलैश्चाष्टभिर्युक्तंमध्यमकर्णिकांतकुहरेसौरंसुवृत्तंगृहं ॥ चंद्रश्चार्त्तुमितांगुलादि भिमिहव्यासार्द्धयुक्त्याहितं वेदाश्चाश्वमितेस्तथाग्निकदलेसौम्यं चतुष्कोटिकम् ॥ १ ॥ व्याख्या ॥ पीठमिति ॥ तत्रहस्तद्वयपरिमितंसमचतुरस्रग्रहपोठंमित्वातदु परितंदुलैरष्टदलंपद्मंविलिखेत् ॥ तस्यमध्यकर्णिकायांसूर्यग्रहंवृत्तंएकां गुलसप्तयवषट्यूकापरिमितव्यासार्द्धेनकर्काटकेनसूत्रेणवामंडलंकुर्यात् ॥ तस्यमध्यसूत्रत्रीण्यंगुलानि ३ सप्तयवाः ७ चतस्रोयूकाः ४ एतत्परिमितंस्यात् ॥ तत्रव्यासस्यवर्गेभनवाग्निनीघ्नेसूक्ष्मंफलं पंचसहस्र भक्तइत्यनेनद्वादशांगुलंक्षेत्र फलंमंडलस्यभवति ॥ तथाग्नेयकोणदलेचतुरंगुलंसप्त यवयूकाद्वयपरिमितचतुर स्रंचंद्रमंडलभवति ॥ इदंतुगोमूत्र्यागण नेनचतुर्विंशत्यंगुलक्षेत्रफलकंभवति ॥ १ ॥ मूल० ॥ भौमंयाम्यदलेक्षिबाणमितविष्कंभांत रंभूतलेवद्याभ्राब्धिभिरं गुलादिरचितंतावन्मितेखद्वयं ॥ एवंत्र्यस्त्रिगृहंमिमायभवदिश्यब्धं शविष्कंभयुङ्मुलादंगुल मध्यसूत्रमुपरित्र्यंशंचतिर्य कूद्वयं ॥ २ ॥ अथव्याख्या ॥ भौममिती ॥ तयोर्याम्यदले त्रिकोणंद्व्यंगुलंपंचयवाधिकपरिमितमध्यसूत्रंत्र्यंगुलपूर्ण यवचतुर्यूकाधिकपरिमितभुवंशून्यवदनंभूसं मितेरेषाद्वययुतं शकटाकारंमंगलस्य गृहंकार्यं ॥ तत्रभूवदनसार्द्धंलंवेन संगणयेदित्यनेनत्रिकोणगणनंतच्चतुरंगलंक्षेत्रफलंस्यादिति ॥ २ ॥ मूल० ॥ मध्यस्थैकभुवंत्रिकोणयुगलंपूर्वापराग्रंलि खेत्मूलेद्वृत्तयुतंशराकृतिगृहंचंद्रात्मजस्योत्तमं ॥ सौम्येपद्मदलेगुरोस्तु दहनैरायामसूत्रंभवेद्विस्तारेंगुलयुग्ममत्रकथितं





दीर्घंचतुः स्रक्तिकम् ॥ ३ ॥ व्याख्या ॥ ततइशानदिशिचतुरंगुलमध्यसूत्रंततोमूलादेकां गुलेतिर्यग्रेखामंडलद्वयमितां कुर्यात्तदुपरित्र्यंगुलमध्यसूत्रमेवं त्रिकोणद्वयंमध्यस्थैकभुवं पूर्वापराग्रंसाधयेत् ॥ तन्मूलेयथाकथंचिच्छराकृतिवद्वृत्तंएवं चंद्रमसः सुतस्यग्रहंनिष्पादनीयं ॥ तत्रिकोणद्वयंलंबेननिघ्नंकुमुखैकखंडमित्यनेनचतुरंगुलक्षेत्रवद्भवति ॥ ततउत्तरदल पद्मस्यबृहस्पतेर्गृहंत्र्यंगुलमध्यसूत्रंद्व्यंगुलविस्तारंदीर्घचतुरस्रंसाध्यं॥ इदंचभुजकोटिघातमित्यनेनषडंगुलक्षेत्रफलसहितं संपद्यते ॥ ३ ॥ ऐंद्र्यांभार्गवपंजरंसुविपुलंत्र्यंशैश्चपार्श्वद्वयेभित्तिद्व्यंगुलउच्छ्रूतेतदुपरिप्राच्यांत्रिकोणंभवेत् ॥ वेदांशांतर सूत्रमत्ररचितंपंचास्रमत्युत्तमंवारुण्यांधनुषंशनैः कुमुनिषड्व्यासार्द्धवृत्तार्द्धकम् ॥ ४ ॥ व्याख्या ॥ ततः पूर्वदलेशुक्रस्य ग्रहंचतुरंगुलमध्यसूत्रंमूलेत्र्यंगुलविपुलंदक्षिणोतरपार्श्वेद्व्यंगुल परिमितंभित्तिद्वययुतं परिद्व्यंगुलमध्यसूत्रत्रिकोणंत्र्यंगुलभुव मेकंपंचकोणं॥ तत्रभुजकोटिघातमित्यनेनअधस्तिर्यग्दीर्घचतुरस्रस्यफलंषडंगुलानिउपरित्रिकोणेभूवदनसमासेतिगुणिते त्र्यंगुलफलंमिलित्वानवांगुलपरिमितंक्षेत्रफलंस्यात् ॥ ततएकांगुलक्षेत्रफलंस्यात् ॥ ४ ॥ मू० ॥ स्वर्भानोः शरनेत्र रामयमयुक्शुर्पास्यमक्षैर्लवैर्विष्कंभंयुगदृग्गुणाक्षिभिरधः साध्यासुरेभूः समा ॥ केतूनांध्वजमूलभूर्गुणयुगत्वैच्छंशमाना निलेपंचाशैर्मितामध्यमूत्रमुदितंमूलेषुदंडांकितम् ॥ ५ ॥ व्याख्या ॥ नैरृत्यांदिशिराहोर्गृहंसूर्पाकारंपंचांगुलयवद्वय यूकात्रयलिक्षाद्वयपरिमितविपुलंमूलेचतुरंगुलयवद्वययूकात्रयलिक्षायुगुल विपुलंमध्यसूत्रेपंचांगुल मेवंचतुर्विंशत्यंगुलक्षेत्र फलंवदनादिनागणितंजिनांगुलक्षेत्रफलंभवति ॥ ततोवायव्यांदिशिकेतूनांगृहंपंचांगुलमध्यसूत्रंत्र्यंगुलचतुर्यवषट्यूकाच तुर्लिक्षापरिमितंमूले॥ मुखेशुन्यंदलेसहितंलंबाहतंभूम्यर्द्धमितिगुणितंनवांगुल क्षेत्रफलंभवति॥ द्वादशांगुलिखेदर्कंसोमंत द्विगुणंलिखेत् ॥ चतुर्भिरंगुलैर्भौमंसौम्यंचतुर्भिरेवच ॥ षडंगुलंदेवगुरुंभृगुंचैचनवांगलं ॥ शनिंषडंगुलंप्रोक्तंचतुर्विंशति रंगुलम् ॥ कुर्याद्राहुगृहंकेतोर्नवांगुलमितंक्रमात् ग्रहाणिरविपूर्वाणांग्रहाणांपंकजेलिखेदिति ॥ अथग्रहप्रतिमाधातवः ॥ ताम्रकात्स्फटिकाद्रक्तचंदनात्स्वर्णकादुभौ ॥ रजतादयसः सीसात्कांस्याक्तार्याक्रमादिमे ॥ ताम्रादीनांप्रमाणंशक्त्यनु सारेणकल्पम् ॥ अथवाग्रहवर्णैर्गंधैर्वस्त्रेकृतमंडलेषुमूर्त्तयोलेख्याः ॥ तत्रग्रहवर्णः ॥ आदीत्यांगारकौरक्तौशूक्लौशुक्र

निशाकरौ ॥ पीतोबुधोगुरुश्चैवशेषाः कृष्णागृहाः स्मृताः तथा ॥ शुक्रार्कौप्राङ्मुखौज्ञेयौगुरुसौम्याउदङ्मुखौ ॥ प्रत्यङ्मुखौशनिसोमौशेषादक्षिणतोमुखाः ॥ अथवा ॥ मंडलोपरिसंस्थाप्याः सर्वेप्रत्यङ्मुखाअपि ॥ ग्रहाणांभिन्नदिङ्मुखत्वेपिदेवाधिदेवादथउक्तस्थानेएवस्थाप्या : ॥ शनिरीशानकोणेतुकेतुभ्यश्चाग्निकोणके ॥ आदित्याद्वायुभागेतु निर्लक्ष्म्यंगणनायकमितिज्ञापकात्॥ तेनबुधस्योदङ्मुखत्वे उत्तरदिशंप्राचीत्वेनपरिकल्प्य बुधसंमुखेविष्णुर्नस्थाप्यः ॥ किंतुप्राकृतप्राच्यामेवस्थाप्यः ॥ आदित्यादीनामन्यदिङ्मुखत्वे पिकर्त्तुरनायासार्थप्रयोगे विकल्पोक्तंप्रत्यङ्मुखत्वमेव स्वीकृतमितिबोध्यम् ॥ एकैककस्यगृहस्यस्मृतिष्वनेकैः पर्यायशब्दैः रूपस्थितिदर्शनान्नत्यागादावेकस्यनियमः ॥ विनिगमकाभावात् ॥ यथासूर्यः सोमस्तस्थाभौमइतिप्रथमवाक्यंशौनक्यां ॥ द्वितीयंशुक्रार्कौप्राङ्मुखौज्ञेयाविति ॥ तृतीयमादित्यादिग्रहाः सर्वेपीठेयत्रव्यवस्थिताइति ॥ चतुर्थंभास्करंविद्यादितिमात्रवणिकीतुसवितादेवता ॥ अत्रैनकस्यचित्विनिगमकंकिंचिद्दश्यते ॥ अतोयथेच्छंप्रयोगः ॥ अयमेवाशयोमयूख काराणां ॥ गृहाणांस्थापने । वैदिकामंत्राप्रयोज्याः ॥ विषासहीतिमंत्रेणमध्येसंस्थापयेद्रविमिति ॥ वचनात् ॥ केचिदावाहनपूर्वकंस्थापनंकुर्वंतितदस्माकमयुक्तम् ॥ एवंग्रहान्सनक्षत्रान्संस्थाप्येशानकोणगान् ॥ आवाहनंचततः कुर्यात्सूर्यादीनांक्रमेणवैइतिवचनात् ॥ स्थापनावाहयोर्भेदान्मंत्रैः स्थापनंव्याहृत्यावाहन मितिमदनरत्नग्रंथाच्च ॥ केचिन्नक्षत्रदेवता नामेवस्थापनंकुर्वंतिन नक्षत्राणांतदप्ययुक्तम् ॥भानिदेवानरास्थाप्या इतिशौनकवचनात् ॥ प्रदक्षिणक्रमेणैमप्रभृतिर्नवा ॥ इशानकोणादारभ्य चतुर्दिक्षुचविन्यसेत् ॥ सप्तसप्तचऋक्षाणिस्थापयेन्मंत्रपूर्वकं ॥ क्रमेणकृत्तिकादीनांमंत्राज्ञेयाविजानतेतिनारायणभाष्यकोशेधृतलघुशौनकीवचनाच्च अतएवपरिशिष्टेगिराः ॥ चित्राणिसाकंसूक्तेनकृत्तिकादिनिस्थापयेत् ॥ एतेनैवचसूक्तेनऋक्षदेवांस्तथैवच ॥ अष्टाविंशेतिमंत्रेणयोगोन्वैक्रमतोयजेत् ॥ होमेऽप्युतेभदेवानांयोगानांचतथैवच ॥ स्थापनंस्वल्पहोमेतु वस्त्राद्यंतंचपूजयेदिति ॥ प्रतिष्ठापनंतुशौनक्यां ॥ भानिदेवागरास्थाप्याइतिप्रतिष्ठाप्यविचक्षणैरित्यावाहनात्पूर्वमुक्तम् ॥ लघुशौनक्यांतुआवाहनोत्तरमुक्तमतोविकल्पः ॥ जन्मभूगोत्रमग्निश्चवर्णस्थानमुखानिच ॥ अज्ञात्वाकुरुतेशांतिंगृहास्ते







नापमानिताइतिउक्तेः ॥ प्रयोगेग्रहाणांजन्मभूमिगोत्रादीज्ञानमपेक्षितम् ॥ तत्ज्ञानंयद्यपिस्मरणात्मकंतथापिशिष्टाः प्रतिमंत्रमृष्यादिस्मरणशब्दोच्चारणपूर्वकुर्वंति ॥ तद्वदत्रापिव्दोच्चार१पूर्वकर्त्तव्यम् ॥ तत्कुत्रेत्याशांकायांशौनक्याआवाहनवाक्येएषांचित्यदानांदर्शनात् बौद्धायनीकेतत्रैवबहूनांपदानांदर्शनादावाहनवाक्ये एवस्मरणार्थंसर्वेषांसंग्रहः कृतोबोद्धव्यः ॥ यद्यपिबौद्धायनेनग्रहाणांसूर्यमंगलशुक्रचंद्रबुधगुरुशनिराहुकेतवइतिक्रमउक्तः तथाचारसंवादाच्छौनकोक्तक्रम एवसंग्रहीतइतिबोध्यम् पूजायांप्रथोगपारिजातादौहोमात्पूर्वंग्रहाणां पुष्पांतंपूजनंविधायहोमोत्तरं धूपदीपादिभिस्तान् पूजयेदित्युक्तं ॥ अतोहोमात्पूर्वोत्तरकालयोर्व्यवस्थया पूजाकार्या ॥ स्थापनंचग्रहादीनां पूजासंक्षेपतस्ततइतिसंस्थाप्यायमेवार्थउक्तः होमेसमिदाज्यचरूणांचहोमस्तिलयवैः क्रमादितिमयुखकारेणापि ॥ सूर्यादीनांसूक्तैरपिहोमोउक्तः ॥ तानिसूक्तान्यग्रे वक्ष्यामः ॥ अत्रैवतुमंत्रैर्होमःपैठीनसीमतमंगीकृत्यप्रयोगएवादृतः ॥ ॥ इतीश्रीमदथर्वग्रह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकर कृतेसर्वकर्मप्रयोगिग्रह शांतिनिर्णयरश्मिरेकोनविंश ॥ १९ ॥

अथसर्वकर्मोपियोगित्वात्सर्वेषां सुखबोधायसमंत्रकोयंग्रदशांतिप्रयोगरश्मिः प्रारभ्यते ॥ ॥ सपत्निकोयजमानः प्रातर्नित्यकृत्यंविधायोक्त विधिनागणेशांबिके पूजयित्वावैश्वदेवं विधायमातृपूजन पूर्वकमाभ्युदयिकंस्वस्ति वाचनंशांतिकलश करणंचकृत्वागृहयज्ञोपकरणानिसंपाद्यशुचौदेशेप्राङ्मुखो पविश्यजीवास्थेत्याचम्य प्राणानायम्यत्यं सुषुवाजिनमिति मांगल्यतिलककरण पूर्वकंस्वस्त्ययनंविधाय ॥ ब्रह्मजज्ञानं० ॥ अव्यंसश्वस ॥ ततः सुमुखश्चेत्यादि पठित्वा ॥ संकल्पंकुर्यात् ॥ तद्यथा ॥ देशकालौस्मृत्वाममजन्मलग्नेवर्षलग्नेदुष्टस्थानस्थित सूर्यादिग्रहजनितसर्वपीडोपचय शांतिपूर्वकंशुभस्थानस्थफलप्राप्तये गृहानुकुल्यसिद्धयेश्रीपरमेश्वरप्रीत्यर्थं ग्रहयज्ञंकरिष्यइति ॥ विवाहादिनिमित्तेषुअदः कर्मकुर्त्तुमादौग्रहयज्ञंकरिष्ये ॥ कामनायांतुममामुक कामनासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञं करिष्य इति ॥ तदंगत्वेनाचार्यादीनामर्घ्यदान पूर्वकंपादप्रक्षालनमर्चनवरणं करिष्ये ॥ तत्रैकआचार्यः ऋत्विजोऽष्टोचत्वारो

द्वौवासर्वेष्याचरितपादकृच्छ्रप्रायश्चित्ताः कृतायुगतायत्रीजपावाविद्वांसः कर्मणिकुशलावाविवक्षताः ततोदधिदुर्वाशमी
पत्रकुसुमाक्षतचंदनगौरशर्षपयुक्तमुदपात्रंकृत्वा कृतांजलिः ॥ स्वागतंभोद्विजश्रेष्टामदनुग्रहकारकाः ॥ इदमर्घ्यमिदं
पाद्यंभवद्भिः प्रतिगृह्यतामुइत्युक्त्वातैः प्रतिगृह्णामीत्युक्तेअस्मिन्ग्रहमखकर्मण्येतत्तेर्ध्यमितिविप्रपादयोः स्वल्पमर्घ्यंदत्वाऽ
स्मिनग्रहमखकर्मण्येत्तत्तेपाद्यमितिसम्यक्पादप्रक्षालनंकृत्वातज्जलमभिवंदयेत् ॥ एवंसर्वेषांकृत्वास्वपादप्रक्षालनंकृत्वाद्वि
राचमनंकुर्यात् ॥ विप्राअपिप्रक्षलनानंतरंद्विद्विराचमनंकुर्युः ॥ ततोग्नेः स्थानात्पश्चिमतोयथाज्येष्टाचार्यान्त्विजः ॥
प्राङ्मुखानुपवेश्यसाक्षात्परंपरया।चान्वारब्धस्याचार्यस्प दक्षिणंजान्वालभ्य ऋत्विग्वरणनिमित्तमर्चयिष्यइत्युक्त्वातैरर्च
येत्युक्तश्चंदनाक्षतपुष्पमालादिभिस्तानर्चयेत् ॥ तेपिआचारप्राप्तानर्चनमंत्रान्पठेयुः ॥ अर्चामिवामितिसूक्तम् ॥तद्यथा ॥
ॐअर्चामिवांबद्धायापोंघृतस्नूधावांभूमिश्शृणुतंरोदसीमे ॥ अहायद्देवाअसुंनीतिमायन्मध्वांनोअत्रपितराशीशीताम् ॥१॥
स्वावृंग्देवस्यामृतंयदीगोरतोजातासेधारयंतउर्वी ॥ विश्वे देवाअनुतत्तेअजुर्गूर्दुहेयदेनि दिव्यंघृतंवाः॥२॥ किंस्विनोराजा
जगृहेकदस्पतोव्रतंचंमाकोविवेद ॥ मित्रश्चिद्धिष्मांजुहुराणोदेवान्छ्लोकोनया।तानपिवाजोअस्ति ॥ ३ ॥ दुर्मंत्रत्वा
मृतंस्यनामसलक्ष्मायद्विषुरूपाभवाति ॥ यमस्ययोमनवंतेसुमंत्वग्नेतमृष्वपाह्यप्रयुछन ॥ ४ ॥ यस्मिंदेवाविदथेमादयं
तेविवस्वतः सदनेधारयंते ॥ सूर्येज्योतिरदंधुर्मास्यं१क्तून्परिंद्योतनिंचरतोअजस्रा ॥ ५ ॥ यस्मिन्देवामन्मनिसंचरं
त्यपीच्ये३ नवयमस्यविद्म ॥ मित्रोनोअत्रादितिरनागान्सवितादेवोवरुणायवोचत् ॥ ६ ॥ सखायआशिषामहेब्रह्मेंद्राय
वज्रिणे ॥ स्तुषेऊषुनृतमायधृष्णवे ॥ ७ ॥ शवसाह्यसिश्रितोवृत्रहत्ये नवृत्रहा ॥ मघैर्मघोनोअतिशूरदाशसि ॥ ८ ॥
स्तेगोनक्षामत्येषिपृथिवींमहीनोवातांइहवांतुभूमौ ॥ मित्रोनोअत्रवरुणोयुज्यमानोअग्निर्वरुणे नव्यसृष्टश्लोकं ॥ ९ ॥
स्तुहिश्रुतंगर्तसदंजनानांराजानंभीममुपहत्नुमुग्रम् ॥ मृडाजरित्रेरुद्रस्तवानोअन्यमस्मत्तेनिवपंतुसेन्यम् ॥ १० ॥ एवम









र्चयित्वऽर्चनविधेः परिपूर्णतास्त्वितिवदेत् ॥ तेप्यस्त्वितिब्रूयुः ॥ ततआचारात्साक्षतहस्तेनाचार्यस्यदक्षिणंजान्वालभ्या
दित्यादिग्रहयज्ञमहंकुर्वे ॥ अत्रकर्मण्यदोगोत्रमदः प्रवरब्रह्मवेदाध्यायिनमदोदः शर्माणमाचार्यंत्वामहंवृणे ॥ इतिआ
चार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रतेतिब्रुयात् ॥ आचार्योपिवृतोस्मीत्युक्त्वा
चारात्। त्वमग्नेव्रतपाअसिदेवआमर्त्येष्वा ॥ त्वंयज्ञेष्वीड्यः ॥ इतिमंत्रंपठेत् ॥ थवासर्वेषांगोत्रादीनप्रथक्पृथगुच्चार्य
ऋत्विजोयुष्मानहंवृणेतियुगपत्सर्वान्वृणुयात् ॥ ततस्तान्वस्त्रादिभिर्दक्षिणादानेनचतोषयेत् ॥ देयानिर्लिंगपुराणे ॥
वस्त्रंयुग्मंतथाप्पूरंकेयूरंकर्णभूषणं ॥ अंगुलीभूषणंचैवमणिवंधस्यभूषणे ॥ कंठाभरणयुक्तानिप्रारंभेधर्मकर्मणः ॥ पुरो
हितायदत्वाथऋत्विग्भ्यश्चापिदापयेत् ॥ प्पूरंजलपात्रं ॥ इमानिवस्त्राभरणादीनिसदक्षिणा निआचार्यायतुभ्यमहं संप्रदे
इत्याचार्यायदत्वाऋत्विग्भ्योदापयेत् ॥ अत्रमंगलसूत्रवंधनं ॥ अक्षतैर्विप्राअपिआशिषोदद्यात् ॥ ततोयजमानः कृतांजलिः
स्तन्प्रार्थयेत् ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया ॥ सुप्रसादंप्रकर्त्तव्यंशांतिकंविधिपूर्वकं इतितान्प्रार्थयेत् ॥
केचित्फलनिवेदनपूर्वकंप्रार्थयेदितिवदंति ॥ इतिवरणप्रयोग ॥ अत्रकेचित्सप्तव्याधेति पद्यपाठंकुर्वंतिकचित्कर्मव्यत्या
संचकुर्वंतितन्निर्मूलं ॥ ततआचार्यएकस्मिन्पात्रेपंच गव्यंकृत्वागायत्र्यागोमूत्रं ॥ यस्तेगंधः पुरुषेषुस्त्रीषुपुंसुभगोरुचिः
योअश्वेषुवीयेर्मृगेषूतहस्तिषु ॥ कन्यायांवर्चोयद्भूमेतेनास्मा अपिसंसृजमानेद्विक्षतकश्चनेतिगोमयम् ॥ पयस्वतीरो
षधयः पयस्वान्मामकंवचः ॥ अथोपयस्वतीनामाभरेहंसहस्रशः ॥ इतिक्षीरं ॥ दधिक्राव्णेतिदधिः ॥ देवस्यत्वेतिकु
शोदकम् ॥ एवंपंचगव्यंसंपाद्य ॥ हिरण्यवर्णाः शुचयः पावकायासुजातः सवितायास्वग्निः ॥ याअग्निगर्भंदधिरे
सुवर्णास्तानआपः संस्योनाभवंतु ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ याअग्निगर्भंदधिरेसु० ॥
यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेवहुधाभवंति ॥ याअग्नि० ॥ शिवेनमाचक्षुषापश्यतापः शिवयातन्वोपपृशतत्व

चंमे ॥ घृतश्चयुतः शुचंयोयाः पांवकाः स्तानआपः संश्योनाभंवंतुइतिसूक्तेनकर्मभूमिंसंप्रोक्ष्य ॥ ततआचार्योऽग्निपश्चिम
तोपविश्यकुंडेस्थंडिलेवाग्निस्थापनादिहविर्गृहणांतंकर्मकृत्वा ॥ हविर्गृहणेविशेषः ॥ आदित्यायसोमायभौमायबुधाय
बृहस्पतयेशुक्रायशनैश्चराय राहवेकेतुभ्योजुष्टंगृह्णामीतित्रिः चतुर्थंऽतूष्णीं ॥ आदित्या० जुष्टमासादयामीतित्रिः ॥
ॐआदित्या० ॥ जुष्टंप्रोक्षामीतिप्रोक्ष्याधिश्रयेत् ॥ संस्थितहोमाघारावाज्यभागांतंकृत्वा ॥ दर्शश्चेद्दर्शांतंपौर्णमासीचे
त्पौर्णमासांतंकृत्वा ॥ ततोग्रहस्थापनंकुर्याद् ॥ ततोगृहवेदीपश्चिमभागेउपविश्याचम्य ॥ आचम्यप्राणानायम्यदेश
कालौसंकीर्त्यकरिष्यमाणादः कर्मनिमित्तंग्रहयज्ञांगभूतंसर्वतोभद्रमं डलदेवतानांस्थापनप्रतिष्ठापूजनानिकरिष्ये । इति
संकल्प ॥ ततोवेद्यांसर्वतोभद्रमादौविरच्य ॥ तदुक्तंहेमाद्रौस्कांदे ॥ प्रागुदीच्याकृतारेखाकुर्यादेकोनविंशतिः ॥
खंडेदुत्रिपदाकोणेशृंखलापंचभिःपदैः ॥ चतुर्विंशत्पदावापिपरिधिर्विंशकैः पदैः मध्येषोडशभिः कोणेपद्ममष्टदलंस्मृतं ॥
श्वेतेंदुः शृंखलाकृष्णावल्लीनीलेनपूरयेत् ॥ भद्रारूणासितात्रापिपरिधिः पीतवर्णकैः ॥ बाह्यंतरंदलश्वेताकर्णिकापीत
वर्णकैः ॥ दलानिश्वेतवर्णानियद्वाचित्राणिकारयेत् ॥ रजांसीपंचवर्णानिमंडलार्थंहिकारयेत ॥ शालितंदुलचूर्णेनशुक्ल
वायत्रसंभवः ॥ रक्तंकुसुंभसिंदुरगैरिकादिसमुद्भवं ॥ हरितालोद्भवंपीतंरजनीसंभवंक्कचित् ॥ कृष्णंदग्धयवैः कार्यंहरि
तंरजनीरजं ॥ परिधीवेष्टितंपद्मंबाह्येसत्वरजस्तमः ॥ तन्मध्येस्थापयेद्देवान् ब्रह्माद्यांश्चसुरानिति ॥ एवंक्रमेणमंडल
मालिख्यतत्रदेवानावाहयेत् ॥ तद्यथा ॥ ब्रह्मापरिमित्यथर्वा ब्रह्माजगतीब्रह्मन्नावाहनेविनियोगः ॥ ॐब्रह्मापरंयुज्यतां
ब्रह्मपूर्वंब्रह्मांततोमध्यतोब्रह्मंसर्वतः ॥ अनाव्याधांदेवपुरांप्रपद्यंशिवास्योनापतिलोकेविरांज ॥ ॐब्रह्मणेनमः ब्रह्माणं
आवाहयामीत्येवंसर्वत्रप्रयोगमुच्चार्यावाहयेत् ततोत्तरतआरभ्यवायव्यांतंअष्टौलोकपालन् ॥ सोमंराजानमित्यथर्वाकुबेर
स्त्रिष्टुप्सोमावाहनेविनियोगः ॥ ॐसोमंराजांनमवसेग्निंगीभिर्हवामहे ॥ आदित्यंविष्णुंसूर्यंब्रह्माणंचबृहस्पतीम् ॥
उत्तरेसोमंआ० ॥ इशानामितिपिप्पलादइशोनुष्टुप् ॥ इशानावाहनेविनियोगः ॥ इशांनांत्वाभेषजानामुज्जेषआरं





भामहे ॥ चक्रेसहस्रंवीर्यंसर्वस्माओषधेत्वा ॥ इशानंआ० ॥ त्रातारमिंद्रगर्गइंद्रस्त्रिष्टुप् ॥ इंद्रआवाहनेवि० ॥ ॐत्रातार
मिंद्रंऋक्१ इंद्रंआ० ॥ अग्नेबन्वेत्यथर्वाग्निर्जगतीअग्न्यावावानेवि० ॥ ॐअग्नेर्मन्वप्रथमस्यप्रचेतसः । पांचंजन्यस्यवहुधा
यमिंधते ॥ विशोविशः प्रविशिवांसंमीमहेसनेमुंचत्वंहसः ॥ अग्निंआ० ॥ येदक्षिणतोंगिरायमोनुष्टुप्यमावाहने
विनि० ॥ ॐयेदंक्षिणतोजुह्वतिजातवेदोदक्षिणायादिशोंअभिदासंत्यस्मान् ॥ यममृत्वातेपरांचोव्यथंतांप्रत्यगेनाप्रतिस
रेणहन्मि ॥ यमंआ० ॥ अभित्यमित्यथर्वानिर्ऋतिरनुष्टुप्निर्हत्याबाहनेबिनि० ॥ ॐअभितंनिर्हतिधत्तामश्वंमिवाश्वा
भिधान्यां ॥ मल्वोयोमह्यंक्रध्यंतिसउपाशांनमुच्यते निर्हतिमावाहयामि० ॥ येपश्चादित्यथर्वावरुणोऽनुष्टुप् ॥ वरुणा
बाहनेवि० ॥ ॐयेपश्चाज्जुह्वतिजातवेदप्रतीच्यांदिशोंअभिदासंत्यस्मान् ॥ वरुणमृतत्वातिपरांचोव्यथंतांप्रत्यगेनान्प्र
तिसरेणंहन्मि ॥ वरुणमावा० ॥ वायोसवितुरित्यथर्वावायुस्त्रिष्टुप्वायुरावाहनेवि० ॥ ॐवायोः संवितुर्विदथांनि
मन्महेयात्रांतमन्वद्विषथोयौचरक्षथः ॥ यौविश्वस्यरिबंभूवथुस्तौनोमुंचंत्वंहसः ॥ वायुंआ० ॥ वायूसोममध्येष्टौवसून् ॥
अस्मिवस्वित्यथर्वावसवः पंक्तिः वसून्नावाहनेवि० ॥ ॐअस्मिनवसुवसंवोधारयंत्विंद्रः पूषावरुणोमित्रोअग्निः ॥
इममादित्याउतविश्वेचदेवाउत्तरस्मिनज्योतिषिधारयंतु ॥ ध्रुवंआ० अध्वरंआ० ॥ आपआ०॥ अनिलं० ॥ अनलंआ०॥
प्रत्यूषंआ० ॥ प्रभासंआ० ॥ सोमंआ० ॥ सोमेशानयोर्मध्येएकादरुद्रान् ॥ ॐरुद्रंजलाषब्रह्मारुद्रास्त्रिष्टुप्रुद्रान्नावाहने
बिनियोगः ॥ ॐरुद्रंजलाषभेषजंनीलशिखंडकर्मकृत् ॥ प्राशंप्रतिप्राशोजह्यरषान्कृण्वोषधे ॥ अजैकपदंआ० ॥ अहि
र्बुध्न्यंथा० ॥ पिनाकिनंआ० ॥ विशांपतिंआ० ॥ भुवनाधीश्वरंआ० ॥ कपालिनंआ० ॥ अपराजितंआ० ॥ स्थाणुं
आ० ॥ भर्गंआ० ॥ भगवंतंआ ॥ रुद्रंआ० ॥ इशानेंद्रयोर्मध्येद्वादशादित्यान्स्थापयेत् ॥ येनः सपत्नांगिरसो

 

आदित्यानिचृज्जगतीआदित्यावाहनेविनियोगः ॥ ॐयेनः सपत्नाअपतेभवंत्विंद्राग्नीभ्यामवबाधामहएतान् ॥ आदि
त्यारुद्राउपरिस्पृशोंनउग्रंचेतारमधिराजमक्रन् ॥ अदित्यारुद्राउपरिस्पृशोंनउग्रंचेतारमधिराछमक्रन् ॥आदित्यंआ० ॥
दिवाकरंआ० ॥ भास्करंआ० ॥ प्रभाकरंआ० ॥ सहस्रांशुआ० ॥ त्रिलोचनंआ० ॥ हरिदश्वंआ० ॥
रविआ० ॥ दिनकरंआ० ॥ द्वादशात्मकंआ० ॥ त्रिमूर्त्तिआ० ॥ सूर्यमूआ० ॥ इंद्राग्निमध्ये ॥
अश्विनाब्रह्मणेति अश्विनाथर्वा जगती अश्विनीकुमारा वाहने विनियोगः ॥ ॐअश्विना ब्रह्म
णायातमर्द्वाचौवषट्कारेणंयज्ञंवर्द्धयंतौ ॥ बृहस्पतेब्रह्मणायाह्यर्वाङ्यज्ञोअयंस्वरिदंयजमानायस्वाहा ॥ अश्विनौआ०॥
यमाग्निमध्येविश्वेदेवान् ॥ विश्वेदेवाथर्वाविश्वेदेवाजगतीविश्वेदेवाहनेविनियोगः ॥ ॐविश्वेदेवावसवोरक्षतेममुतादि
त्यजागृतयूयमस्मिन् ॥ मेमंसनाभिरुतवान्यवाभिमेमंप्रापत्यौरुषेयोवधोयः ॥ क्रतुदक्षौ० सत्यवसू० ॥ तत्रैवपितॄन्० ॥
येवोदेवोत्यथर्वापितृन्जगतीपितृनावाहनेविनियोगः॥ ॐयेवोदेवाःपितरोयेचपुत्रासचेतसोमेशुणुतेदमुक्तं॥ सर्वेभ्योवः
परिददाम्येतंस्वस्त्येनजरसेवहाथ ॥ कव्यवालं० ॥ अनलं०॥ सोमं० ॥ अर्यमणं० ॥ अग्निष्वात्तान्० ॥ बर्हिषदं० ॥
आज्यपं० य सोमपं० ॥ यमनैर्ऋतिमध्येसप्तयक्षान् ॥ आवाहयेत् ॥ वामदेवः सप्तयक्षामकृतिसप्तयक्षानावाहनेवि० ॥
ॐअभित्यंदेवंसवितारमोण्योः कविक्रतुं ॥ अर्चामिसत्यसवंरत्नधामभिप्रियंमतिम् ॥ सप्तयक्षानआ० ॥ निर्ऋतिवरुण
मध्येभूतनागान् ॥ सार्पराज्ञीसर्पागायत्रीसपानावादनेवि० ॥ ॐआयंगौः पृश्नि० ॥ अनंतं० ॥ वासुकीं० ॥ तक्षकं० ॥
कर्कोटकं० ॥ पूलकं० ॥ महापद्मं० ॥ अश्वतरं० ॥ कंबलं० ॥ वरुणवायुमध्येगधर्वाप्सरसः ॥ अप्सरसत्यमित्यथर्वा
गंधर्वाप्सरोत्नुष्टुप् ॥ गंधर्वाप्सरसावाहनेविनियोगः ॥ ॐअप्सरसः सधमादंमदंतिहविर्धानमंतरासूर्यंच ॥ तास्तेज
नित्रमभितापरेहिनमस्तेगंधर्वर्तुनाकृणोमि ॥ विश्वावसुं० ॥ हाहाहुहू० ॥अप्सरसः ॥ ब्रह्मसोगमध्येस्कंदादीन् ॥

 

 

अग्निरिवमन्योब्रह्मास्कंदस्त्रिष्टुप्स्कंदादीनावाहनेविनि० ॥ अग्निरिवमन्योत्विषीतः । संहस्वसेनानीर्नः सुहुरेहूतएंधि ॥
हत्वायशत्रून्विभंजस्ववेदउजोमिमानोविमृधोनुदस्व ॥ स्कंदं० ॥ नंदीश्वरं० ॥ शुलं० ॥ महाकालं० ॥ तत्रैवऋषभं० ॥
ॐअश्वस्याश्वतरस्याजस्यपेत्वस्यच ॥ अथऋषभस्ययेवाजास्तानस्मिन्धेहितनूवशीन् ॥ ऋषभयोगिनंआ० ॥ ब्रह्मेशा
नयोर्मध्येदक्षादीन ॥ नैनमित्यथर्वादक्षोजगतीदक्षादीनावाहनेविनियोगः ॥ ॐनैनंरक्षांसिनपिशाचासहंतेदेवानामोजः
प्रथमजंह्येतत् ॥ योविभर्त्तिदाक्षायणंहिरण्यंसजीवेषुकृणुतेदीर्घमायुः ॥ दक्षं० ॥ मरीचिनं० ॥ आंगिरसं० ॥ ब्रह्मेंद्र
मध्ये ॥ सौभरीदुर्गास्त्रिष्टुप् ॥ ॐअहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः ॥ अहंमित्रावरुणोभाबि,भर्म्यहमिं
द्राग्निअहमश्विनोभादुर्गांआ० ॥ कण्वोमेधातिथिविष्णुगायत्रीविष्वावाहने० ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥
समूढमस्यपांशुरे ॥ विष्णुंआवाहयामि ॥ ब्रह्माग्निमध्येस्वधां ॥ स्वधाकारेणेत्यथर्वानुष्टुप् ॥ स्वधावाहने० ॥ ॐस्व
धाकारेणपितृभ्योयज्ञेनदेवताभ्यः ॥ दाने नराजन्योवशायांमातुर्हेडंनगंछति ॥ स्वधांआ० ॥ ब्रह्मयममध्ये ॥ अंत
कोसीत्यथर्वामृत्युरोगःश्रीमृत्युरोगावाहनेवि० ॥ ॐअंतकोसिमृत्युरसि ॥ मृत्युरोगान्आ०॥ ब्रह्मनैर्ऋतिमध्येगणपतिं०॥
ॐनिर्लक्ष्म्यमितिद्रविणोदाविनायकोनुष्टुप्गणेशावानेवि० ॥ ॐनिर्लक्ष्म्यंललाम्यं३निररातिंसुवामसि ॥ अथयाभद्रता
निनः प्रजायाअरातिंनयामसि ॥ गणेशंआ० ॥ ब्रह्मवरुणमध्ये ॥ सिंधुद्विपापोगायत्रीआपआ० ॥ ॐशन्नोदेवीरभिष्टय
आपोभवंमुपीतये ॥ शंय्योरभिश्रवंतुनः ॥ आपआ० ॥ ब्रह्मवायुमध्ये ॥ मरुतामन्वेत्यंगिरामरुतोजगतीमरुतआवाहने०
ॐमरुतांमन्वेअधिमेब्रुवंतुप्रेमंबाजंबाजसातेअवंतु ॥ आशुनिवसुयमानह्वऊतयेतेनोमुंचंत्वंहसः ॥ प्रवहं० ॥ उद्वहं० ॥
संवहं० विवहं० ॥ परावहं० ॥ परिवहं० ॥ अनलं० ॥ ब्रह्मणः पादमूलेकर्णिकाधः ॥ भूमेमीतरित्रिब्रह्माभुमिरनुष्टुप्

 

भूम्यावाहनेविनि० ॥ ॐभूमेमातर्निधेहिमाभद्रयासुप्रतिष्ठितं ॥ संविदानादिवाकवेश्रियांमाधेहिभूत्यांम् ॥ पृथ्वीं आ० ॥ तत्रैवनद्यः ॥ सिंधुपत्नीत्यंगिरानद्योनुष्टुप्नद्यआ० ॥ ॐसिंधुपत्नीः सिंधुराज्ञीः सर्वायानद्यः ॥ इत्थनदत्तनस्तस्यंभेषजंतेनावोभुनजामहै ॥ गंगां० ॥ यमुनां० ॥ सरस्वतीं० ॥ नर्मदां० ॥ पापनाशां० ॥ तत्रैवसागरान् ॥ धाम्नोधाम्नोराजंनितोवरुणनोमुंचनः ॥ यदापोअघ्न्याइतिवरुणेतियदूचीमततोवरुणमुंचनः ॥ सप्तसागरेभ्योनमः सप्तसागरान्० ॥ ब्रह्मणःउपरि ॥ मेरुंहिमवतं० मंदरं० विंध्यं० माल्यवंतं० मलयं० पारिजातं० ॥ गंधमादनं० कैलासं० वैकुंठं० ॥ मंडपाद्वहिरुत्तरतः ॥ गदां० ॥ त्रिशुलं ॥ वज्रं० ॥ शक्तिं० ॥ दंडं० ॥ खड्गं० ॥ पाशं० ॥ अंकुशं० ॥ तद्वाह्येतेनैवक्रमेण ॥ गौतमं० ॥ भरद्वाजं० ॥ विश्वामित्रं० ॥ कश्यपं० ॥ जमदग्निं० ॥ वशिष्ठं० ॥ अत्रीं० ॥ अरुंधतीं० ॥ तद्वाह्येपूर्वादिक्रमेण ॥ ऐंद्रीं० ॥ कौमारीं० ॥ ब्राह्मीं० ॥ वाराहीं० ॥ चामुंडां० ॥ वैष्णवीं० ॥ माहेश्वरीं० ॥ कालिकां० ॥ तद्वाह्येपूर्वादिक्रमेणमध्येसूर्यं ॥ एवंसोमादीन् ॥ एवमावाह्यव्याहृत्यासंस्थाप्य ॥ तदस्त्वित्यात्रयप्रतिरथोविश्वेदेवास्त्रिष्टुप्ब्रह्मादीनांप्रतिष्ठापनेविनियोगः ॥ ॐतदस्तु० ॥ प्रतिष्ठाप्य ॥ ब्रह्माद्यावाहितदेवताभ्योनमइतिसर्वोपचारैः संपूज्य ॥ अग्रेत्युत्तरसंकल्पंविधाय ॥ प्रणवादिनमोंतैर्नामभिः पायसादिबलिंदत्वातदुपरिवस्त्रमाछाद्यतत्रग्रहांश्चावाहयेत् ॥ केचित्तुसर्वतोभद्रमंडलदेवतानांस्थापनंविनैवग्रहाणांस्थापनंकुर्वंतितदसत् ॥ तदुक्तंवशिष्ठेन ॥ अग्निप्रणयनंकृत्वावेद्यामावाहयेत्सुरान् ॥ ब्रह्मादिकांस्तुसंस्थाप्यमंडलेभद्रसंज्ञिके ॥ तस्यामावाहयेद्वेद्यांखेचरान्साधिदैवतान् ॥ इति ॥ अथग्रहस्थापन ॥ अहतवस्त्रेउक्तप्रकारेणाष्टदलंविधायतत्रोक्तप्रमाणानिग्रहमंडलानिविरच्यतद्गोमयोपलिप्तगृहवेद्युपरिप्रासार्यमंडलेषुतत्तद्ग्रहचदन कृतवर्णानक्षातान्मंडलाकारेण संस्थाप्यतेषुसूर्यादिप्रतिमाअग्न्युत्तारणपूर्वकंयथास्थानंन्यसेत् ॥ मूर्त्तिलेखनपक्षेतत्तच्चंदनैस्ताः पटेविलिख्यस्थापयेत् ॥ तद्भावेतत्तद्वर्णपुंजंतत्तत्स्थानेन्यस्यतत्रदेवताः स्थापयेत् तत्रप्रतिमापक्षेऽग्न्युत्तारणं ॥ इमंमेअग्नेत्यग्न्युत्तारणसूक्तस्यांगिराग्निस्त्रिष्टुपादिछंदां





सिमूर्तिनामग्न्युत्तारणेविनियोगः ॥ ॐइमंमेअग्नेपुरुषंमुमुग्ध्ययंयोबद्धः सुयंतोलालपीति ॥ अतोधीतेकृणवद्भागधेयंयदानुन्मुदितोसंति ॥ १ ॥ अग्निष्टेनिशमयतुयदितेमनउद्युतं ॥ कृणोमिविद्वान्भेषजंयथानुन्मुदितोसंसि ॥ २ ॥ दैवेनसादुन्मंतिदितमुन्मंतरक्षसस्परि ॥ कृणोमिविद्वान्भेषजंयदानुन्मुदितोसंति ॥ ३ ॥ पुनंस्त्वारदुप्सरसः पुनरिंद्रः पुनर्भगः ॥ पुनंस्त्वादुर्विश्वेदेवायथानुन्मदितोसंसि ॥ ४ ॥ माज्येष्ठंवधादयमग्नएषांमूलबर्हणात्परि पाह्येनं ॥ सग्राह्यान्पाशानविचृंतप्रजाननतुभ्यंदेयाअनुजानंतुविश्वे ॥ ५ ॥ उन्मुंचपाशांस्त्वमग्नएषांत्रयंस्त्रिभिरुत्सितायेभिरासान् ॥ सग्राह्यान्पाशानविचृंतप्रजाननपितापुत्रंमातरंमुंचसर्वान् ॥ ६ ॥ येभिःपाशैः परिस्वितोविबंधोमेअंगंआर्पितउत्सितश्च ॥ वितेमुच्यतांविमुचोहिसतिभ्रूणघ्निपूषनदुरितानिमृक्ष्व ॥ ७ ॥ नृतेदेवाअंमृजतैतदेनस्त्रितएनंमनुष्येषुममृजे ॥ ततोयदित्वाग्राहिरानशेतांतेदेवाब्रह्मणानाशयंतु ॥ ८ ॥ मरीचीर्धुन्मान्प्रविजानुपाप्मन्नुदारान्गंछोतवानिहाशन् ॥ नदीनांफेनाअनुतानविनश्यनभ्रूणघ्निपूषनदुरितानिमृक्ष्व ॥ ९ ॥ द्वादशधानिहितंतृतस्यापंमृष्टंमनुष्यैनसानि ॥ ततोयदित्वाग्राहिरानशेतांतेदेवाब्रह्मणानाशयंतु ॥ १० ॥ इत्यंतंदुग्धेनजलेनवाप्रतिमानांस्नपनं ॥ द्वादशवारंमृदस्नानं ॥ सुवर्णशलाकयावाकुशेनचित्रंदेवोत्यर्द्धमंत्रेणमुखोद्घाटनं ॥ ॐआंह्रींक्रौंहंसः सोहंआसांप्राणइहप्राणाः जीवइहस्थितः० सर्वेंद्रियाणिइहागत्यसुखेनचिरंतिष्टंतुस्वाहेतिप्राणप्रतिष्ठा ॥ ततः हस्तेअक्षतानगृहीत्वा ॥ विषासहीत्यथर्वादित्योजगतीआदित्यस्थापनेविनियो० ॐविषासहिंसहमानंसासहानंसहीयांसम् ॥ सहमानंसहोजितंस्वर्जितंगोजितंसंधनाजितं ॥ ॐभूर्भुवः स्वर्जनदोमध्यमेमंडलेवर्त्तुलेसूर्यंस्थापयामीति सूर्यंशुक्लतंदुलैः स्थापयेत् ॥ अनयारीत्यासोमादीनांस्थापनं ॥ शकधूममथर्वासोमोनुष्टुप्सोमस्थापनेविनियोगः ॥ ॐशकधूमंनक्षत्राणियद्राजानमकुर्वत ॥ भद्राहमंन्यस्मै

मायंच्छन्निदंराष्ट्रमसादिति ॥ ॐभूर्भुवः स्वर्जनदेंआग्नेयांसमचतुरस्रेसोमंस्थापयामि ॥ २ ॥ त्वयांमन्योब्रह्माभौम
त्रिष्टुप्भौमस्थापनेवि० ॥ ॐत्वयांमान्योसरथंमारुजंतोहर्षमाणाहसितासोंमरुत्वन् ॥ तिग्मेशंवआयुधासंशिशांना
उपप्रयंतुनरोंअग्निरूपाः ॥ ॐभू०दक्षिणेत्रिकोणेभौमंस्थापयामि ॥ ३ ॥ यद्राजांनोविभजंतविष्णुबुधःपंक्तीबुधस्थापने० ॥
ॐयद्राजांनविभजंतद्रष्टापूर्तस्यंशोडषंयमस्यामिसंदंभासदः ॥ अविस्तस्माद्यमुंचतिदत्तः शितिवात्स्वधा ॥ ॐभू०इशेवा
णाकारेबुधंस्थापयामि० ॥ ४ ॥ बृहस्पतिनोब्रह्मागुरुस्त्रिष्टुप्गुरुस्था० ॥ ॐबुहस्पतिर्नः परिंपातुपश्चादुतोत्तंरस्माद
धरादघायोः ॥ इंद्रःपुरस्तांदुतमंध्यतोनंः सखासखीभ्योवरीयः कृणोतुः ॥ ॐभू०उत्तरेदीर्घचतुरस्रेगुरुंस्थाययामि ॥
५ ॥ शुक्रोस्यथर्वाशुक्रोनुष्टुप्शुक्रस्थापनेविनियोगः ॥ ॐशुक्रोंसिभ्राजोंसिस्वंसिज्योतिंरसि ॥ आन्पुहिश्रेयांसमतिं
समंक्रांम ॥ ॐभू०पूर्वेपचकोणेशुक्रंस्थापयामि ॥ ६ ॥ सहस्रबाहुर्नारायणः शनिस्त्रिष्टुप्शनिस्थापनेविनियोगः ॥
ॐसहस्रंबाहुः पुरुषः सहस्राक्षः सहस्रंपात् ॥ सभूमिंविश्वतोंवृत्वात्यंतिष्ठद्दशांगुलं ॥ ॐभू०पश्चिमेधनुकारेशनिंस्थाप
यामि ॥ ७ ॥ दिव्यंचित्रंकौशिकोराहुस्त्रिष्टुप्राहुस्थापनेविनियोगः ॥ ॐदिव्यंचित्रंमृतुनाकल्पयंतुमृतूनामुग्रंभ्रमयतु
देतु ॥ तदादित्यप्रचरंनेतुसर्वांतआपइमांलोका अनुसंचरंति ॥ ॐभू०नैर्ऋत्येशुर्प्पाकारेराहुंस्थापयामि ॥ ८ ॥ यस्ते
पृथुरथर्वाकेतवस्त्रिष्टुप् ॥ केतुस्थापनेविनियोगः ॥ ॐयस्तेपृतुस्तंनयिन्नुर्यारुष्वोदैवः केतुविश्वंसमाभूषंतीदं ॥
मानोंवाधिविद्युप्तांदेवसस्पंमोतवंधिरश्मिभिः सूर्यस्या ॐभू०वायव्येध्वजाकारेकेतूंस्थापयामि० ॥ इतिग्रहाः ॥
अथाधिदेवाः ॥ मानोविदनब्रह्माइश्वरोनुष्टुप्ईश्वरस्थापने० ॥ ॥ ॐमानोंविव्याधिनोमोअंभिव्याधिनोंविदन् ॥
आराछंरव्यांअस्मद्विषूचिरिंद्रपातय ॥ ॐभू०सूर्यादुत्तरेशंभुंस्थापयामि ॥ १ ॥ आपोहिष्टासिंधुद्वीपउमागायत्रीउमा





स्थापने० ॥ ॐआपोहिष्टामंयोभुवस्तानंऊर्ज्जेदंधातनः ॥ महेरणांयचक्षसे ॥ ॐभू०सोमाद्दक्षिणेउमांस्थापयामि ॥
२ ॥ अग्निरिवमन्योब्रह्मस्कंदस्त्रिष्टुप्स्कंदस्थापनेवि० ॥ ॐअग्निरिंवमन्योत्विषितः संहस्वसेनानीर्नः सुहूरेहूतएंधि ॥
हत्वायशत्रून्विभंजस्ववेदओजोमिमांनोविमृधोंनुदस्व ॥ ॐभू०भौमाद्दक्षिणेस्कंदंस्थापयामि ॥ ३ ॥ प्रतद्विष्णुरथर्वा
विष्णुर्गायत्रीविष्णुस्थाप० ॥ ॐप्रतद्विष्णुंस्तवतेवीर्यांणिमृगोनभीमः कुचरोगिरिष्टाः ॥ परावतआजंगम्यात्परस्याः ॥
ॐभू०बुधात्पश्चिमेविष्णुंस्थापयामि ॥ ४ ॥ ब्रह्मजज्ञानमथर्वाब्रह्मास्त्रिष्टुप्ब्रह्मास्थापनेवि० ॥ ॐब्रह्मंजज्ञानंप्रथमं० ॥
ॐभू०गुरोः पूर्वेब्रह्माणंस्थापय.मि० ॥ ५ ॥ त्रातारमिंद्रंगर्गस्त्रिष्टुप्इंद्रस्था० ॥ ॐत्रातारमिंद्र० ॥ ॐभू०शुक्रात्पूर्वे
इंद्रंस्थापयामि ॥ ६ ॥ यः प्रथमोब्रह्मायमस्त्रिष्टुप्यमस्थापेंने० ॥ ॐयः पंथमः प्रवतंमाससादंबहुभ्यः पंथांमनुपश्प-
शांनः ॥ यो३स्येशेद्विपदोयश्चतुंस्पदस्तस्मैयमायनमोंअस्तुमृत्यवे ॥ ॐभू०शनिराग्नेयेयमंस्था० ॥ ७ ॥ रोहिंतः
कालोथर्वाकालोनुष्टुप् ॥ कालस्थापनेविनियोगः ॥ ॐरोहितः कालोअंभवद्रोहितोग्रेंप्रजापतिः रोहितोयज्ञानां
मुखंरोहितः स्व१राभरत् ॥ ॐभू०राहोरैशान्यांकालंस्था० ॥ ८ ॥ सखासाब्रह्माचित्रगुप्तस्त्रिष्टुप्चित्रगुप्तस्थापनेवि० ॥
ॐसखासादस्मभ्यंमस्तुरातिः सखेंद्रोभगंः ॥सवितांचित्ररांधाः ॥ केतूनांनैहतेचित्रगुप्तंस्थापयामि० ॥ इतिदेवाः ॥
अथप्रत्यधिदेवाः ॥ समास्त्वाग्नेब्रह्माग्निस्त्रिष्टुप्अग्निस्थापनेविनियोगः ॥ ॐसमांस्त्वाग्नऋतवोंवर्द्धयंतुसंवत्सराऋषयो
यानिंसत्या ॥ संदिव्येनंदिदिहिरोचनेनविश्वाआभांसिप्रदिशश्चतंस्रः ॥ ॐभू०सूर्यादक्षिणेअग्निंस्था० ॥ १ ॥ शन्नो
देवीब्रह्मआपोगायत्रीआपस्थापनेविनि० ॥ ॐशंन्नोंदेवीरभीष्टय० ॥ ॐभू०सोमादुत्तरेआपः स्था० ॥ २ ॥ भूमेर्मात
ब्रह्माभूमिरनुष्टुप्भूमिस्थापनेवि० ॥ ॐभूमेंर्मातर्निधेंहिमाभद्रय।सुप्रतिष्टितं ॥ संविदानादिवाकंवेश्रियामांधेहिभूत्यां ॥

ॐभू०भौमात्पश्चिमेपृथ्वींस्था० ॥ इदंविष्णुवि० ॥ ॐभू०बुधात्प्राच्यांविष्णुंस्था० ॥ ४ ॥ इममिंद्रब्रह्माथर्वाइद्रस्त्रिष्टुप् ॥ इंद्रस्थापनेवि० ॥ ॐइममिंद्रवर्द्धयक्षत्रियंमइमंविषामेंकृष्टंकृणुत्वं ॥ निरमित्रांनक्ष्णुह्यस्यसर्वांस्तानरंधयास्मा अहमुत्तरेषु ॥ ॐभू०गुरोः पश्चादिंद्रंस्था० ॥ ५ ॥ प्रेतंपादावथर्वैन्द्राण्यनुष्टुप्इंद्राणीस्थापनेविनियोगः ॥ ॐप्रेतंपादौ प्रस्फुरंतंवहंतमृणताग्रृहान् ॥ इंद्राण्यैतुप्रथमाजितामुंषितापुरः ॥ ॐभू०शुक्रात्पाश्चिमेइंद्राणींस्थाप० ॥ ६ ॥ प्रजापतेत्यथर्वाब्रह्माप्रापतिस्त्रिष्टुप्प्रजपतिस्थापनेविनियोगः ॥ ॐप्रजापतेराव्रतो० ॥ ॐभू०शनिनैर्ऋतेप्रजापतिंस्था० ॥ ७ ॥ सर्पानुसर्पाथर्वासर्पापंक्तिः सर्पस्थापनेविनियोगः ॥ ॐसर्पानुसर्पपुनर्वोयंतुयातवः पुनर्हेतिः किमिदितिः यस्यस्थत्तमंत्तयोत्रः ॥ प्राहैत्तमंत्तमांसान्यंत्त ॥ ॐभू०राहोर्नैर्ऋतेसर्प्पान्स्था० ॥ ८ ॥ योदिशामथर्वाब्रह्मास्त्रिष्टुप्ब्रह्मास्थापनेविनियोगः ॥ ॐयेदिशामंतर्देशेभ्योजुह्वतिजातवेदः सर्वाभ्योदिग्भ्योअभिदासंत्यस्मान् ॥ ब्रह्मत्वार्त्तेपरांचोव्यथंतांप्रत्यगेंनान्प्रतिसरेणंहन्मि ॥ ॐभू०केतूनामाग्नेयेब्रह्माणंस्था० ॥ ९ ॥ इत्यधिदेवाः ॥ अथविनायकादिपंच ॥ निर्लक्ष्म्यद्रविणोदाविनायकोनुष्टुप् गणेशस्थापनेवि० ॥ ॐनिर्लक्ष्म्यंललाम्यं० ॥ ॐभू०आदित्याद्वायुभागेगणेशंस्थापयामि० ॥ १ ॥ प्रतनाजितमथर्वादुर्गास्त्रिष्टुप्दुर्गास्थापने० ॥ ॐपृतनाजितं० ॥ ॐभू०गणेशादुत्तरेदुर्गांस्था० ॥ २ ॥ अंतरिक्षेत्रायवेब्रह्मावायुरनुष्टुप्वायुस्थापनेविनियोगः ॥ ॐयेअंतरिंक्षेवायवेसमंनमन्सआंप्नोत् ॥ यथांतरिंक्षेवायवेसमनंमन्नेवामह्यंसंन्नमन्संन्नमंतु ॥ ऊर्जंकामंदुहांआयुः प्रथमंप्रजांपोषंरयिंस्वाहा ॥ ॐभू०गणेशात्पूर्वेवायुंस्था० ॥ ३ ॥ शाम्यंतोथर्वाकाशस्त्रिष्टुप्आकाशस्थापनेवि० ॥ शाम्यंत्यस्यततोरोगाग्रहाविघ्नविनायकाः ॥ स्वस्त्वस्तुनृपराष्ट्रायस्वस्तिगोब्राह्मणायच ॥ ॐभू०दुर्गायाउत्तरेआकाशंस्था० ॥ ४ ॥ संज्ञानंनांगिरांश्विनावर्ष्णिकूअश्विनोस्थापनेवि० ॥





ॐसंज्ञानंनः खेभिः संज्ञानगरंणेभिः ॥ संज्ञानमश्विनायुवमिहास्मासुनियंछतं ॥ ॐभू०दुर्गायाः पश्चिमेऽश्विनीकुमारौस्था० ॥ ५ ॥ अथवास्रूर्यादुत्तरप्राकसंस्थास्छापयेत् ॥ अथतत्रैवक्षेत्रपालंवास्तोष्पतिंस्थापयेत् ॥ अंजतेव्यंजतेत्यथर्वाब्रह्माक्षेत्रपतिस्त्रिष्टुप्क्षेत्रपतिस्थापनेविनि० ॥ ॐअंजतेव्यंजतेसमंजतेक्रतुंरिहंतिमधुनाभ्यंजतेछवासिंधोरुद्रासेपतयंतमुक्षणंहरिण्यपावाः पशुमाशुगृह्णते ॥ ॐभू०क्षेत्रपालंस्था० ॥ पुनरेहीत्यथर्वांगिरावास्तोष्पतिस्त्रिष्टुप् ॥ वास्तोष्पतिस्थपने० ॥ ॐपुनरेहिंवाचस्पतेदेवेनमनंसासह ॥ वसोष्पतेनिरंमयमय्येवास्तुमयिश्रुतं ॥ ॐ भू०वास्तोष्पतींस्था० ॥ अथदिक्पालाः ॥ त्रातारमिंद्रगर्गेइंद्रस्थापने० ॥ ॐत्रातारमिंद्र० ॥ ॐभू०पूर्वेइंद्रंस्थापयामि ॥ अग्नेमन्वेब्रह्माग्निस्त्रिष्टुप्अग्निस्था० ॥ ॐअग्नेमन्वप्रथमस्यप्रवेतसः पांचजन्यस्यबहुधायमिंधते ॥ विशोविशः प्रविशिवांसंमीमदेसनोमुंचत्वंहसः ॥ ॐभू०अग्निकोणेऽग्निंस्थापयामि ॥ येदक्षिणतांगिरास्त्रिष्टुप्यमस्थापनेवि० ॥ ॐयेदंक्षिणतोजुह्वतिजातवेदोदक्षिंणायादिशोअभिदासंत्यस्मान् ॥ यममृतत्वातेपरांचोव्यथंतांप्रत्यगेनान्प्रतिसरेणंहन्मि ॥ ॐभू०दक्षिणेयमंस्था० ॥ अभितनिर्हतिरनुष्टुप्निहृतिस्थापने० ॥ ॐअभितंनिर्हंतिधत्तामश्वंमिवाश्वाभिधान्यां ॥ मत्वोयोमह्यंक्रुध्यतिसउपाशान्नमुच्यते ॥ ॐभू० नैहृत्येनिर्हतिंस्थाप० ॥ येपश्चाज्जुह्वत्यथर्वावरुणस्त्रिष्टुप्वरुणस्यापनेवि० ॥ ॐयेपश्चाज्जुंह्वतिजावेदः प्रतिच्यांदिशोअभिदासंत्यस्मान् ॥ वरुणमृतत्वातिपरांजोव्यथंतांप्रत्यगेनान्प्रतिसरेणंहन्मि ॥ ॐभू०वारुण्यांवरुणंस्था० ॥ वायोः सवितुरथर्वावायुस्त्रिष्टुप्वायुस्यापने० ॥ ॐवायोः संवितुर्विदथानिमन्महेयावांयाबात्मद्विषथोयौचरक्षथः ॥ यौविश्वंस्यपरिवंभूवंथुस्तौनोमुंचतमंहसः ॥ ॐभू०वायुकाणेवायुंस्था० ॥ यउत्तरतोब्रह्मासोमस्त्रिष्टुप् ॥ कुबेरस्थापनेवि० ॥ ॐयउंत्तरतोजुह्वतिजातवेदः उदीच्यादिशोऽभिदासंत्यस्मान् ॥ सोमंमृत्वाते

परांचोव्यथतांमत्यगेनान्मतिसरेणहन्मि ॥ ॐभू०उत्तरेकुबेरंस्थापयामि० ॥ धातादधात्वंगिराइशानोगायत्रीइशान स्थापनेवि० ॥ ॐधातादधातुनोरमिमीशानोजगंतस्पतिः ॥ सनः पूर्णेनयच्छतु ॥ ॐभू०इशानकोणेईन्शानंस्थापया०॥ भूमेमांतरिब्रह्माभूमिरनुष्टुप्भूमिस्थापनेवि० ॥ ॐभूमेर्मात० ॥ ॐभू०मतीचीवायव्योर्मध्येपृथ्वींस्था० ॥ ब्रह्मापरम थर्वाब्रह्मात्रिष्टुप्ब्रह्मास्थापनेवि० ॥ ॐब्रह्मापरंयुज्यतांब्रह्मपूर्वंब्रह्मांततोमध्यतोब्रह्मसर्वतः ॥ अनाव्याधांदेवपुरांमपद्य शिवास्योनापतिलोकेविराज ॥ ॐभू० पूर्वैशानयोर्मध्ये ब्रह्माणंस्थापयामि ॥ इतिदिक्पालान् क्रमेणस्थापयेत् ॥ अथवस्वादीनांस्थापनंयथावकाशं ॥ येनः सपत्नांगिरसोवसवोनिचृज्जगतीवसवस्थापनेविनियोगः ॥ ॐयेनः सपत्ना०क्रन् ॥ ॐभू०वसूनस्थापयामि ॥ आदित्याब्रह्मादित्यास्त्रिष्टुप्आदित्यास्थापनेवि० ॥ ॐआदित्यारुद्रा अश्विनोभादेवाः पांतुयजमानंनिऋप्यान् ॥ येनः सपत्नाअपतेभवंत्विद्राग्निभ्यामवबाधामहएनाम् ॥ ॐभू०आदित्या न्स्था० ॥ रुद्रंजलाषब्रह्मारुद्रास्त्रिष्टुप्रुद्रास्थापनेवि० ॥ ॐरुद्रंजलाषभेषजंनीलशिखंउकर्मकृत् ॥ माशंमतिंमाशंजह्वर षानकृण्वोषधे ॥ ॐभू०रुद्रान्स्था० ॥ मरुतामन्वेत्यथर्वामरुतस्त्रिष्टुप्मरुतस्थापनेविनियागः ॥ ॐमरुतामन्वेअधिमेब्रु वंतुप्रेमंबाजंबाजंसातेअवंतु ॥ आशूनिंवसुयमानहऊतयेतेनोमुंचत्वंहसः ॥ ॐभू०मरुतः स्था ॥ इमाब्रह्मब्राह्माब्रह्मा त्रिष्टुप्ब्रह्मास्थापनेवि० ॥ ॐइमाब्रह्मबृहद्दिवः कृणवदिंद्रायशूषमग्रिः ॥ यः स्वर्षाः महोगोत्रस्यंक्षयतिस्वराजातुरश्चि द्विश्वंमर्णवत्तपस्वान् ॥ ॐभू०ब्रह्माणंस्था० ॥ तद्विष्णोब्रह्माषविणुर्गायत्रीविष्णुस्थापनेविनियोगः ॥ ॐतद्विष्णोः परमंपदंसदापश्यंतिसूरयः ॥ दिवीवचक्षुराततम् ॥ ॐभू०विष्णुंस्था० ॥ रुद्रंजलाषब्रह्मेशस्त्रिष्टुप्इशस्थापने० ॥ ॐरुद्रंजलाश० ॥ ॐभू०इशंस्था० ॥ योविश्विब्रह्मार्कस्त्रिष्टुप्अर्कस्थापनेवि० ॥ ॐयोविश्वचर्षणीरुतविश्वतोमुखोयो





विश्वतस्पाणिरुतविश्वतस्पृथः ॥ संबाहुभ्यांभरतिसंपत्रैद्यावापृथिवीजनयंदेवएकः ॥ ॐभू०द्वादशादित्यानस्था० ॥ इयंवीरुनित्यथर्वांगिसावनस्पतिरनुष्टुप्वनस्पतिस्थापनेवि० ॥ ॐइयंवीरुन्मधुजायांतामधुनात्वाखनामसि ॥ मधोरधि मजातासिसानोमधुमतस्कृधि ॥ ॐभू०वनस्पतिस्था० ॥ अथनक्षत्राणीतिनक्षत्रसूक्तेनाष्टाविंशतिइशकोणादारभ्येश कोणपर्यंतंमतिदिशंसप्तसप्तकृत्तिकादिनिस्थाप्यानि॥ त्रित्राणिसाकमितिनक्षत्रसूक्त.स्यांगिरानक्षत्राणित्रिष्टुवनुष्टुप्कृत्तिका दिनक्षत्रस्थापनेविनियोगः ॥ ॐचित्राणि साकंदिविरोचनानिसरीसृपाणिभुवनेजवानि ॥ तुर्मिशंसुमतिमिछमानोअहा निगीर्भिसंपर्यामिनाकं ॥ सुहवमग्नेकृत्ति कारोहिणीचास्तुभद्रंमृगशिरः शमार्द्रा ॥ पुनर्वसूसुनृताचारुपुष्योभानुराश्लेषा अयनमघामे ॥ पूण्यंपूर्वाफाल्गुन्यौचात्रहस्तश्चित्राशिवास्वातिसुघोमेअस्तु ॥ राधे विशाखे सुहवानुराधाज्येष्ठासुनक्षत्र मरिष्टमूलं ॥ अन्नंपूर्वारासतामेआषाढाऊर्जंदेव्युत्तराआवहंतु ॥ अभिजिन्मे रासतांपुण्यमेवः श्रवणः श्रविष्ठाः कुर्वतां सुपुष्टिं ॥ आमेमहच्छतभिषग्वरीयआमेद्वयाप्रोष्टपदासुशर्म ॥ आरेवतीचाश्वयुजौभगंमआमेरयिंभरण्यआवहंतु॥ यानिनक्षत्राणिदिव्यंऽतरिक्षे अप्सुभूमौयानिनगेषुदिक्षु ॥ मकल्पयेंश्चंद्रमायोन्येतिसर्वाणि ममैतानिशिवानिसंतु ॥ ॐभूर्भुवः स्वर्जनदांकृत्तिकांस्थापयामिरोहिणी० ॥ मृगशिरं० ॥ आर्द्रां० ॥ पुनर्वसुं० ॥ पुष्यं० ॥ अश्लेषां० ॥ मघां० ॥ पूर्वाफालानीं०॥ उत्तराफाल्गुनीं० ॥ हस्तं० ॥ चित्रां० ॥ स्वातिं० ॥ विशाखां०॥ अनुराधां० ॥ ज्येष्टां०॥ मूलं० ॥ पूर्वाषाढां० ॥ उत्तराषाढां० ॥ अभिजितं० ॥ श्रवणं० ॥ धनीष्ठां० ॥ शतभिषजं० ॥ पूर्वाप्रौष्ठपदां० ॥ उत्तरप्रौष्टपदां० ॥ रेवतीं० ॥ अश्विनीं० ॥ भरणीं० ॥ इतिनक्षत्राणि ॥ तद्वाह्येतेनैवक्रमेणविष्कंभादियोगान् ॥ अष्टाविंशानीत्यथर्वायोगानित्रिष्टुप्योगानिस्थापनेविनियागः ॥ ॐअष्टाविंशानिशिवानिशग्मानिसहयोगंभुंजंतुमे ॥ योगंमपद्येक्षेमंचक्षेमंमपद्येयोगंचनमोहोरात्राभ्यामस्तु ॥ ॐभूर्भुवः स्वर्जनदांविष्कुंभंस्थापयामि० ॥ मीतिं० ॥ आयु

ष्मंतं० ॥ सौभाग्यं० ॥ शोभनं० ॥ अतिगंजं० ॥ सुकर्माणं० ॥ धृतिं० ॥ शुलं० ॥ गजं० ॥ वृद्धिं० ॥ ध्रुवं० ॥ व्याघातं० ॥ हर्षणं० ॥ वज्रं० ॥ सिद्धिं० ॥ व्यतिपातं० ॥ वर्याणं० ॥ परिघं० ॥ शिवं० ॥ सिद्धिं० ॥ साध्यं० ॥ शुभं० ॥ शुक्रं० ॥ ब्रह्माणं० ॥ ऐंद्रं० ॥ वैधृतं० ॥ इतियोगान् ।. तद्वाह्येनक्षत्रदेवताः नक्षत्रस्थापनमंत्रेणतत्क्रमेणैव स्थापनं ॥ नपृथङ्मंत्रैः ॥ तदुक्तं ॥ त्रित्राणिसाकंसूक्तेनभानिदेवांश्चस्थापयेदित्यंगिरावचनं ॥ अग्निं० ॥ प्रजापतिं० ॥ सोमं० ॥ रुद्रं० ॥ अदितिं० ॥ बृहस्पतिं० ॥ सर्पान्० ॥ ७ ॥ पितॄन्० ॥ भगं० ॥ अर्यमणं० ॥ सवितारं० ॥ त्वष्टारं० ॥ वायुं० ॥ इंद्राग्नीं० ॥ ७ ॥ मित्रं० ॥ इंद्रं० ॥ निर्ऋतिं० आपः० ॥ विश्वेदेवान्० ॥ ब्रह्माणं० ॥ विष्णुं० ॥ ७ ॥ वसून्० ॥ वरुणं० ॥ अजैकपदं० ॥ अहिबुध्न्यं० ॥ पूषणं० ॥ अश्विनौ० ॥ यमं० ॥ ७ ॥ एवंक्रमेणशुक्लतंदुलैः स्थापयेत् ॥ ततइशकोणेस्वस्तिवाचनोक्तप्रकारेण कलशंस्थापयित्वा ॥ तत्ररुद्रंजलाषभेषभेषजमितिमंत्रेणरुद्रं स्थापयित्वा ॥ एवंसप्तत्रिंशाधिकशतंदेवताभवंति ॥ तदस्त्विवतिप्रतिष्ठाप्य ॥ ॐतदस्तु० ॥ सूर्यादयः स्थापितदेवताः सुप्रतिष्ठिताभवंत्वित्यक्षतैः प्रतिष्ठापयेत् ॥ एवंअयुतहोमेनक्षत्रयोगनक्षत्रदेवतानांस्थापनं ॥ स्वल्पहोमेवस्वादिदेवतानां स्थापनंमयूखकारैर्व्याख्यातं ॥ ततआचार्येर्वान्योऋत्विग्रुद्रकलशमालभ्य तैत्तरीयशाखोक्तंरुद्र जपंजपेत् ॥ तदुक्तं मेरुतंत्रे ॥ रुद्रोनयस्यशाखायांपरिशिष्टान्वितंसतु ॥ पठेद्रुद्रंतैतरीयंलुप्तशाखंतमेवहिइत्युक्तत्वात् ॥ ग्रहवेदिपश्चिमेउप विश्य ॥ देशकालौसंकीर्त्य० स्थापितानामादित्यादिदेवानांआवाहनपूर्वकंपूजनमहंकरिष्ये ॥ ततोव्याहृत्यासर्वेषामा वाहनम् ॥ ॐभूर्भुवःस्वर्जनदेंप्रौढवयसंकलिंग देशोद्भवंविशाखयायुक्तसप्तम्यामुत्पन्नंकपीलाख्याग्निंक्षत्रियवर्णपद्मासन स्थंपद्मधारिणंसप्ताश्वंद्विभुजं विश्वामित्रार्षत्रिष्टुप्छंदस्कंरक्ता बरधरंरक्ताभरणभूषितंरक्त माल्यानुलेपनंरक्त ध्वजछत्र पताकोपशोभितमारुह्यरथंमेरुं प्रदक्षिणीकुर्वाणंगृहमंडल मध्येमध्यमेमंडलेवर्तुलेप्रविष्टं श्रीसूर्यमावाहयामी तिरक्ताक्षतैः सूर्यमावाहयेत् ॥ १ ॥ ॐभूर्भुवः स्वर्जनदेंसूर्याद्धिनवयस्कंकृत्ति कानक्षत्रयुतायां कृष्णपक्षचतुर्दश्यामुत्पन्नंपिंगाला ख्याग्निंवैश्यवर्णकिरोडिन मात्रेयार्षमनुष्टुप्छंदस्कं यमुनादेशसंभूतंगदाधरंदशाश्वद्विभुजं श्वेताभरणभूषितंश्वेतमाल्यानु





लेपनंश्वेतध्वज श्वेतछत्रपताकोपशोभितंमुकुटकेयूरमणि शोभितंदिव्यंरथमारुह्यमेरुं प्रदक्षिणंकुर्वाणंआग्नेयेचतुरस्रेमंडले प्रविष्टंसोममावाहयामीति शुक्लतंदुलैरावाहयेत् ॥ २ ॥ ॐभूर्भुव० स्वर्जनदेंबालवयस्कं पूर्वाषाढानक्षत्रयुतायांदशम्या मुत्पन्नंधूम्राख्याग्निंक्षत्रिय वर्णकिरीटिनंजामदग्न्यार्षजगती छंदस्कंअवंत्यदेशोद्भवंमेषमारूढं भारद्वाजंचतुर्भुजंशक्ति शुलगदाधारिणंरक्तां बरधरंरक्ता भरणभूषितंरक्त माल्यानुलेपनंरक्त छत्रध्वजपताकोपशोभितं मुकुटकेयूरमणिशोभितं दिव्यंरथमारुस्वमेरुं प्रदक्षीणीकुर्वाणं दक्षिणेग्रहमंडले त्रिकोणेप्रविष्टंभौममावाहयामी तिरक्ताक्षतैरावाहयेन् ॥ ३ ॥ ॐभूर्भुवः स्वर्जनदेंभोमार्क्तिचिदधिकवयस्कंधनिष्ठानक्षत्रयुतायांद्वादश्या मुत्पन्नंकेत्वाख्याग्निंवैश्यवर्णकिरीटिनंकर्णि कारसमद्युतिंभारद्वाजार्षबृहतिछंदस्कंमागधदेशोद्भवंसिंहारूढं चतुर्भुजंगदाखेटधनुर्धरंप्रत्यङ्मुखंपीतांबरधरंपीताभरण भूषितंपीतमाल्यानुलेपनं पीतछत्रपताकोपशोभितंमुकुटकेयूरमणिशोभितं दिव्यंरयमारुह्यमेरुं प्रदक्षिणंकुर्वाणंइशाने बाणाकारेमंडलेप्रविष्टं बुधंआवाहयामीतिपीताक्षतैरावाहयेत् ॥ ४ ॥ ॐभूर्भुवः स्वर्जनदेंमध्यवयसमुत्तराफाल्गुनी नक्षत्रयुतायामेकादश्यामुत्पन्नंजठराग्निं द्विजर्णकिरीटिनंवसिष्टार्षअनुष्टुप्छंदस्कंसिंधुदेशोद्भवंदयारूढंचतुर्भुजैः पुस्तक दंडाक्षकमंडलुधारिणंकिरीटिनंपीतमानाल्यानुलेपनं पीतांबरधरंपीताभरणभूषितंपीतध्वज छत्रपताकोपशोभितं मुकुटके यूरमणिशोभितंदिव्यंरथमा रुह्यमेरुंप्रदक्षिणंप्रत्यङ्मुस्वतुत्तरेदीर्घ चतुरस्रेग्रहमंडलेप्रविष्टं गुरुमावाहयामीतिपीताक्षतैरा वाहयेत् ॥ ५ ॥ ॐभूर्भुवः स्वर्जनदेंतरुणवयसंपुष्य नक्षत्रयुतायांनवम्यामुत्पन्नं शिख्याग्निंब्राह्मणवर्णशौनकार्षपंक्ति छंदस्कंभोजकटदेशोद्भवंहयारूढंचतुर्भुजैः कमंडलुअक्षसूत्रादिधारिणं श्वेतांबरधरंश्वेताभरण भूषितंश्वेतमाल्यानुलेपनं श्वेतछत्रध्वजपताको पशोभितंमुकुटकेयूरमणि शोभितंदिव्यंरथमारुह्यमेरुंप्रदक्षिणी कुर्वाणंप्रत्यङ्मुखंपूर्वस्मिन्पंचकोणे मंडलेप्रविष्टंशुक्रंआवाहयामीतिश्वेताक्षतैरावाहयेत् ॥ ६ ॥ ॐभूर्भुवः स्वर्जनदेंवृद्धवयसंरोहिणी नक्षत्रयुतायामष्टम्या मुत्पन्नंहाटकाख्याग्निंशुद्रवर्णकिरीटिनं इंद्रनीलसमद्युतिंभृग्वार्षगायत्रीछंदस्कंगृध्रेरूढंचतुर्भुजैः शुलबाणधनुर्धरंसौराष्ट्र देशोद्भवंकाश्यपंकृष्णांबरधरंकृष्णा भरणभूषितंकृष्णमाल्यातुलेपनं कृष्णध्यजछत्रपताकोपशोभितं मुकुटकेयूरमणिशो

भितंदिव्यंरथंमारुह्यमेरुं प्रदक्षिणंकुर्वाणंधनुष्केप्रत्यङ्मुखं पश्चिमेमंडलेप्रविष्टं शनैश्चरमावाहयामीति कृष्णाक्षतैरा
वाहयेत् ॥ ७ ॥ ॐभूर्भुवः स्वर्जयदेशोद्भवयसंभरणीनक्षत्र युतायांपूर्णिमायांउत्पन्नं महातेजाख्याग्निशूद्रवर्णंकिरीटिन
मांगिरसार्षं अनुष्टुप्छंदस्कंबर्बर देशोद्भवंपैठिन संसिंहारूढंखड्गशूलचर्मधरं कृष्णांबरधरंकृष्णाभरणभूषितंकृष्ण
माल्यानुलेपनं कृष्णध्वजछत्रपताकोपशोभितं मुकुटकेयूरमणिशोभितं दिव्यंरथमारुह्यमेरुंप्रदणिणी कुर्वाणंगृहमध्ये
नैर्ऋत्येशूर्पाकारेमंडलेप्रविष्टंराहुं अत्राहहयामीतिकृष्णाक्षतैरावाहयेत् ॥ ८ ॥ ॐभूर्भुवः स्वर्जनदेशोद्भवयसमश्लेषा
युक्तामावाश्वायायामुत्यन्नंहुताशवाख्याग्निनशूद्रवर्णान् पाशधरान्बिक्रताननान् किरीटिनोगौतमार्पान्धुम्रान्वित्रांबर
धरान्त्रिात्राभरणभूषितान् चित्रमाल्यानुलेपनान्चित्रध्वजछत्रपताकोपशोभितान् मुकुटकेयूरमणि शोभितान्दिव्यंर
थमारुह्यमेरुंप्रदक्षिणीकुर्वाणान् वायव्येध्वजाभेमंडलेप्रत्यङ्मुखप्रविष्टान्केतूनावाहयामीतिकृष्णाक्षतैरावाहयेत् ॥ ९ ॥
एवंॐकारपूर्विकांव्याहृतिमुच्चार्यअधिदेवतां प्रत्यधिदेवतांगणेशादिदेवतां दिक्पालवस्वादिनक्षत्र योगनक्षत्रदेवताः
प्रयक्पृथबाह्यपूजये ॥ एतादिक्यावाद्याः सर्वादेवताः श्वेतपुष्पश्वेताक्षतैरावाह्यपदार्थानुसमये नवाकांडानुसमयेनैबप्रण
वादिनमोंतैः श्चतुर्थ्यंतनाममंत्रैरासनादिपुष्पांतानुपचारान् स्यापवक्रमेणदद्यात् ॥ तद्यथा ॥ ॐसूर्यायनमः आसनं
समर्पयामीत्येवंसोमादिदेवतां श्चएवंपाद्याद्यर्घ्याचमनीयादिनि ॥ अथवस्त्राणि ॥ रक्तंसूर्याय० ॥ श्वेतंसोमाय० ॥ रक्तं
भौमाय० ॥ पीतंबुधाय० ॥ पीतंगुरवे० ॥ श्वेतंशुक्राय० ॥ कृष्णंशनैश्चराय० ॥ कृष्णंराहुकेतुभ्यां० ॥ ततआच
मनीयं ॥ यज्ञोपवीतं ॥ सूर्यभौमाभ्यांरक्तचंदनं ॥ सोमशुक्रभ्यांश्वेतं ॥ काश्मीरयुतचंदनंबुधजीवाभ्यां ॥ शनैश्चराय
कस्तूरिचंदनंएतदेवराहवेकेतवेअगरुसहितंचंदनं ॥ ततश्चंदनरचितवर्णानक्षतान् ॥ सूर्यायरक्तकरवीरपुष्पं ॥ सोमाय
श्वेतकरवीरपुष्पं ॥ भौमायकौसुंभं ॥ बुधायचंपकं ॥ गुरवेशतावरीपुष्पं ॥ शुक्रायजातिपुष्पं ॥ शनिश्चरायशमी
पत्राणि ॥ राहवेऽगत्स्यपुष्पं ॥ केतवेविचित्रपुष्पं ॥ उक्ताभावेसर्वेषांश्वेतवस्त्रादिदेयं ॥ अधिदेवप्रत्यधिदेवयोरवित
तद्ग्रहचंदनादितदभावेश्वेतैरुपचारैर्वा ॥ दिक्पालादीनांतुश्वेतैरेव ॥ एवंकरणाशक्तेनआदित्यादिस्थापितदेवताभ्यो





नमः आसनंसमर्पयामीतिवाक्य मुच्चार्यपुष्पादिरुपचारार्प्पणांतंपूजनंविधेयं ॥ ततः कृतांजलिः सूर्यादिस्थापितदेवतानां
पुष्पांतंपूजनंपरिपूर्णमस्तु ॥ ततोवेद्युपरिबितानबंधनं ॥ इदंबितानं बृहस्पतिदैवतंसूर्यादिभ्योनमम इतित्यजेत् ततोग्नेः
पश्चादुपविश्यआघारावाज्यभागांतंकर्मकृत्वा ॥ अथर्वशाखीनांअन्वाधानाभावात् शौनकेनाप्यनुक्तत्वाच्च ॥ प्रतिदैवतं
त्यागः कार्यः ॥ सचबहुकर्तृकहोमेप्रतिदैवतंत्यागाशाक्यत्वात्तंत्रेणैवत्यागः कार्यः ॥ इदंसंपादितंतिलाज्याद्युपकल्पितं
द्रव्यंयायायक्ष्यमाणदेवतास्ताभ्यस्ताभ्यः मयात्यक्तमस्तुनममेतित्यजेत् ॥ ततोप्रधानहोमः ॥ तत्रप्रयुक्तकारैः ॥ समि
दाज्यचरूणांचतिलहोमक्रमेणतुद्रत्युक्तंतथा चशिष्टाच ॥ एकैकंगृहंप्रतिअष्टोत्तरसहस्राष्टोत्तर शतंवाअष्टाविंशतिरष्टौवाए
तेषांमध्येएकपक्षंगृहीत्वा सूर्यादीनांहोमःकार्यः ॥ तत्रसमिधः ॥ अर्कः पलाशमधुकवटोंरदुंबएवच ॥ पिष्पलीद्वौतत
प्रोक्तोराद्रोश्चारण्यगोमयं ॥ दर्भांतासमिधश्चैवसूर्यादीनांक्रमात्स्मृताः ॥ अर्कः ॥ खाखरोः ॥ महुडोः ॥ वडः ॥ उमेडोः ॥
पीपलोः ॥ पारसपीपलोः ॥ अडायां ॥ दर्भः ॥ ततोऋत्विगाचार्यादयः प्राङ्मुखोदुङ्मुखाः स्थापनमंत्रैश्चजुहुयुः ॥ अथवा
सूर्यादीनांसूक्तैःसकृत्सकृदवदानैर्जुयुःअत्रउदपात्रेसंपातः ॥ तेषासूक्तान्यग्रेस्पष्टानि ॥ होमांतेलक्ष्मीसूक्तेनहोमः ॥ तद्यथा ॥
अद्येत्यादि० ममग्रहेनंतलक्ष्मीप्राप्तयेलक्ष्मीहोमंकरिष्य इतिसंकल्पंविधाय ॥ तृष्टिकेतिलक्ष्मीसूक्तस्याथर्वाब्रह्मात्रिष्टु
पादिछंदांसिहोमेविनियोगः ॥ ॐतृष्टिकेतृष्टिवंदनउदमुछिंधितृष्टिके ॥ अथाकृतद्विष्टासोममुष्मैशेय्यावते ॥ १ ॥
तृष्टासितृष्टिकाविषाविषातक्यसि ॥ परिवृक्तायथासस्पृषभस्यवशेवं ॥ २ ॥ आतेददेवक्षणाभ्यआतेहंहृदयाददे ॥
आतेमुखस्यसंकाशात्सर्वंतेवर्चआददे ॥ ३ ॥ प्रेतोयंतुव्याध्यः प्रानुध्याः प्रोअशस्तयः ॥ अग्निरक्षस्वीनीर्हंतुसोमो
हंतुदुरस्पतीः ॥ ४ ॥ प्रपतेतः पापिलक्ष्मीनश्येतः प्रामुतः पत ॥ अयस्मयेनांकेनंद्विषतेत्वासृजामसि ॥ ५ ॥
यामालक्ष्मीपतयालुरजुष्टाभिचस्कंदवंदनेववृक्षं ॥ अन्यत्रास्मत्संवितस्तामितोधाहिरण्यहस्तोवसुनोरराणः ॥ ६ ॥ एकं
शतंलक्ष्मौमर्त्यांश्स्यसाकंतन्वाजनुषोधिजाताः ॥ तासांपापिष्टानिरितः प्रहिण्मः शिवाअस्मभ्यंजातवेदोनियच्छ ॥७॥

एताएंनाव्याकरं खिलेगाविष्ठिताइव ॥ रमंतांपुण्यालक्ष्मीर्याः पापीस्ताअंनीनशं ॥ ८ ॥ नमोरूद्रायच्यवंनायचोदंनाय धृष्णवे ॥ नमः शीतायपूर्वकामकृत्वंने ॥ ९ ॥ योअंन्येद्युरुभयद्युरभ्येतीमंमंडूकमभ्यंत्वव्रतः ॥ १० ॥ आमंद्रैरिंद्रहरिभियांहिमयूररोमभिः ॥ मात्वाकेचिद्वियमन्विनपाशिनोतिधन्वेवतांइहि ॥ ११ ॥ मर्माणितेवर्मणाच्छादयामिसोमस्त्वा राजामृतेनानुंवस्तां ॥ उरोर्वरीयोवरुणस्तेकृणोतुजयंतंत्वानुदेवामदंतु ॥ १२ ॥ एभिः स्वाहाकारांतैर्हेमैः ॥ सर्वत्र महालक्ष्म्यैइदंनममेतित्यागः ॥ ततोयजमानेनधूपादिसर्वैरुपचारैः पूजनंकार्यं ॥ ततउक्तनैवेद्यानि ॥ तदभावेपाय संहविष्यंवा ॥ तंत्रेणसमर्पयेत्ततआचमनीयंताम्बूलंफलानिदक्षणांशक्तौसत्यांछत्रचामरादिदत्वाप्रणम्यपुष्पांजलिंदत्वा ॥ ततएकस्मिन्पात्रेचंदनाक्षतपुष्पदूर्वानालिकेरंकृत्वा ॥ आदित्यादिग्रहाः सर्वेपीठेयेत्रसमागताः ॥ तेगृह्णतुमयादत्तमिम मर्घ्यंनमोनमः॥ आदित्यादिनवग्रहेभ्यः सांगेभ्यः विशेषार्घ्यंसमर्पयामि ॥ ततःकृतांजलिः आयुर्विद्यामितिपठित्वा ॥ आदित्यादिदेवतानांपूजनविधेः परिपूर्णमस्तु ॥ ततोअग्नयेनमइतिअग्निपूजनंकृत्वा ॥ अग्नेः परितोदध्यक्तंमाषभक्तंदश दिक्षुतथाचग्रहाग्रभागेपात्रेषुप्रुत्त्वा। तत्समीपेएकैकंदीपंचसंस्थाप्य ॥ त्रातारमिंद्रगर्गेंद्रस्त्रिष्टुप् इंद्रप्रीत्यर्थंबलिदानेविनि योगः ॐत्रातारमिंद्र० ॥ इंद्रायसांगायसपरिवारायसायुधायस शक्तिकायेमंसदीपंमाषभक्तबलिंसमर्पयामी तिप्राच्यां जलमुत्सृज्यभोइंद्रेमंमाषभक्तबलिंभक्षदिशंरक्षममसकुटुंबस्यायुः कर्त्ताक्षेमकर्त्ताशुभकर्त्ता पुष्टिकर्त्तावरदोभवेतिप्रार्थयेत्॥ एवंसर्वत्रप्रयोगः ॥ एवमग्नये० ॥ यमाय० ॥ नैरृतये० ॥ वरुणाय० ॥ वायवे० ॥ कुवेराय० ॥ ईशानाय० ॥ ब्रह्मणेपृथिव्यै० ॥ तत्रपृथिव्यांविशेषः ॥ पृथिव्यैसांगायै० भोपृथिवीत्वत्रायुः कत्रीक्षेमकत्रीतिवदेत् ॥ एवंसूर्यादिनव ग्रहेभ्यश्च ॥ तत्रायंविशेषः ॥ सूर्यायसांगायईश्वराग्निदेवताप्रत्यधिदेवतासहितायेमं०इति ॥ सोमायउमांबपाधिः स्कंद भूमिरूपाधि ॥ विष्णुनारायणरूपाधि० ब्रह्मेंद्ररूपाधि० इंद्रेंद्राणिरूपाधि० यमप्रजापतिरूपाधि० कालसर्परूपाधि० चित्रगुप्तब्रह्मरूपाधि० ॥ एवंगणपतये ॥ क्षेत्रपालायोक्तमंत्रेणबलिंदत्वा ॥ पूर्णाहुतिंजुहुयात् ॥ तद्यथा ॥ स्रुचिस्रुवे





णत्रिर्घृतमादायचतुर्थेनस्रुवेनोपायेन तामापूर्यसप्तनागवल्लीदलनालिके रक्तस्रग्गंधपुष्पादिनालंकृत्यतिष्ठन्मंत्रैः पूर्णाहुतिं कुर्यात् ॥ तत्रमंत्राः ॥ वसोर्याधारामितिसूक्तस्याग्निर्गौतमस्त्रिष्टुप्पूर्णाहुतिहोमेविनियोगः ॥ ॐवसोर्याधारामधुनाप्र पीनाघृतेनमिश्राअमृतस्यनाभयः सर्वास्ताअवरुंधेस्वर्गः षष्ट्यांशरत्सुनिधिपाअभीछात् ॥ १ ॥ निधिंनिधिपाअभ्येन मिछादनीश्वराअभितः संतुये३न्ये ॥ अस्माभिर्दत्तोनिहितः स्वर्गस्त्रिभिः कांडैस्त्रीन्स्वर्गानरुक्षत् ॥ २ ॥ अग्निरक्ष स्तपतुयद्विदेवंक्रव्यात्पिशाचइहमाप्रपास्त ॥ नुदामएनमपरुध्मोअस्मदादित्याएनमंगिरसः सचंताम् ॥ ३ ॥ आदि त्येभ्योअंगिरोभ्योमध्विदंघृतेनमिश्रंप्रतिवेदयामि ॥ शुद्धहस्तौब्राह्मणस्यानिहत्यैतंस्वर्गंसुकृतावपीतम् ॥ ४ ॥ इदं प्रापमुत्तमंकांडमस्ययस्माल्लोकात्परमेष्ठिसमाप ॥ आसिंचसर्पिघृतवत्समंड्ग्ध्येषभागोअंगिरसोनोअत्र ॥ ५ ॥ सत्या यचतपयसोदेवताभ्योनिधिंशेवधिपरिदद्मएतं मानोद्युतेवगामासमित्याम्मास्मानन्यस्मानुसृंजतापुरामत ॥ ८ ॥ अहं पचाम्यहंददामिममेदुकर्मनकरुणेधिजाया ॥ कौमारोलोकोअंजनिष्टपुत्रो३न्वारभेथांवयंउत्तरावत् ॥ ७ ॥ नकिल्बि षमत्रनाधारोअस्तिनयन्मित्रैः सममंमानएति ॥ अनूनंपात्रंनिहितन्नएतत्पक्तारंपक्कः पुनराविशाति ॥ ८ ॥ प्रियंप्रिया णांकृणवामतमस्तेयंतुयतमेद्विषंति ॥ धेनुरनड्वानवयोवयआयदेवपौरुषेयमपमृत्युंनुदंतु ॥ १ ॥ समग्नयोविदुरन्योअ न्यंओषधीसचंतेयश्चसिंधून ॥ यावंतोदेवादिव्या३तपंतिहिरंण्यंज्योतिः पचंतोबभूवस्वाहा ॥ १० ॥ इदमग्नयइदंनम मेतियजमानस्त्यजेत् ॥ ततआचार्येस्विष्टकृदादिउत्तरतंत्रंसमापयेत् ॥ ततोयजमानोदक्षिणांदद्यात् ॥ अत्रकेचिच्छ्रेयः संपादनंकुर्वंतितन्निर्मूलमितिभट्टाः ॥ अग्नेः पश्चात्प्राङ्मुखमाचार्यमुपवेश्यगंधादिनासंपूज्य ॥ अस्यग्रहमखाख्यकर्मणः समृध्यर्थमिमांधेनूंश्रीसूर्यप्रीतयेतुभ्यमाचार्यायाहंसंप्रददे ॥ कपिलेसर्वदेवानां पूजनीजासिरोहिणी ॥ सर्वदेवमयीय स्मदतः शांतिंप्रयच्छमे ॥ इत्याचार्यायदत्वाऋत्विग्भ्योदद्यात् ॥ आचार्यादयः प्रणवेनप्रतिगृह्णीयुः ॥ अस्य० ॥ इमं

शंखंसोमप्रीतयेऋजिजेतुभ्यं० ॥ पुण्यस्त्वंशंखदेवानांममलानांचमंगलं ॥ विष्णुनाभिधृतोनित्यमतःशांतिंप्रयच्छमे ।। २ ॥
इममनड्वाहंभौमप्रीतये० ॥ धर्मस्त्वंवृषरूपेणजगदानंदकारकः ॥ अष्टमूर्त्तेरधिष्टानमतः शांतिंप्रयच्छमे ॥ ३ ॥ इदंहे
मंबुधप्रीतये० ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतः यांतिंप्रयच्छये ॥४ ॥ इदंपीतवस्त्रद्वयंबृहस्पती
प्रीतये० ॥ पीतवस्त्रयुगंयस्माद्वासुदेवस्यवल्लभं ॥ प्रधानंतस्यतद्विष्णोरतः शांतिंप्रयच्छमे ॥ ५ ॥ इममश्वंशुक्रप्रीतये०
कपिलोअश्वरूपेणयस्मादमृतसंभवः ॥ चंद्रार्कवाहनोनित्यमतः शांतिंप्रयच्छमे ॥ ६ ॥ इमांकृष्णांगांशनिप्रतये० ॥
यस्मात्वंपृथिवीसर्वाधेनुकेकृष्णसंभवा ॥ सर्वपापहरानित्यमत्तः शांतिंप्रयच्छमे ॥ ७ ॥ इमंलोहंराहुप्रीतये० ॥ यस्मा
दायसकर्माणितवाधीनानिसर्वदा ॥ लांगुलांदीन्यायुधानित्यतः शांतिंप्रयच्छमे ॥ ८ ॥ इमंच्छागंकेतुप्रीतये० ॥
यस्मात्वंछागयज्ञानामंगत्वेनव्यवस्थितः ॥ योनिर्विभावसोनित्यमतः शांतिंप्रयच्छमे ॥ ९ ॥ एषामर्थानांविषममूल्य
कत्वेपिसुवर्णेनसाम्यंसंपादनीयं ॥ उक्तदक्षिणाभावेसर्वेषांसुवर्णंदद्यात् ॥ अस्य० यथोत्साहांभूयसींदक्षिणांविप्रेभ्योदातु
महमुत्सृजे ॥ ततोगृहवेदीपूर्वेसस्त्रीकंसपरिवारंयजमान मुपवेश्यरुद्रकलशजलंगृहीत्वाआचार्यादयः वेदोक्तैः पौराणैर्वामं
त्रैश्चाभिशेकंकुर्युः॥ हिरण्यवर्णासूक्तं ॥ आपोहिष्टासूक्तम् ॥ आदित्यश्चंद्रमाभौमोबुधोजीवसितोर्कजः॥ ग्रहास्त्वामभिषिंचंतु
राहुकेतुश्चपूजिताः ॥ सर्वेसमुद्राःसरितः सरांसिसजलानिच ॥ आयांतुयजमानस्यदुरितक्षयकारकाःसंवत्सरायनामासा
तिथिवारश्चनाडिकाः ॥ मूहूर्त्तान्यभिषिंचंतुनक्षत्राणिदिवानिशं ॥ अमृताभिशेकोस्तु ॥ ततोयजमानोन्यतूनवस्त्रपरिधाय
साज्येकांस्यपात्रेरूपंरूपमितिसपरिवारः स्वप्रतिरूपंप्रेक्ष्य ॥ आज्यंतेजसमुदिष्टमा ज्यंपापहरंपरं ॥ आज्यंसुराणामाहारः
आज्येलोकाप्रतिष्टिताः ॥ दिव्यभूम्यंतरिक्षस्थंयन्मेकिल्बिषमागतंतत्सर्वमाज्यसंस्पर्शात्प्रणाशमुपगच्छतु ॥ सौर्यकांस्य
पात्रंसाज्यदक्षिणंअदोगोत्राय० देतिदत्वा ॥ यथाशक्तिब्राह्मणभोजनसंकल्पः ॥ ततः स्थापितान्देवान्गंधादिनासं
पूज्य ॥ तेभ्यः पुष्पांजलिंसमर्प्य ॥ सुतासोमध्वीत्यथर्वांगिराब्रह्मात्रिष्टुप्विसर्जनेविनियोग ः ॥ ॐसुतासोमधुमत्त
मासोमाइंद्रांयमंदिनः ॥ पवित्रवंतोअक्षतरंदेवान्गच्छंतुवोमदाः ॥ यांतुदेवगणाः सर्वेपूजामादायपार्थिवात् ॥ इष्ट





कामसमृध्यर्थंपुनरागमनायचेतिपुष्पाक्षतैस्तान्विसर्जयेत् ॥ ततोयजमानः प्रतिमादिसर्वंद्रव्यमाचार्यायदत्वाविप्रेभ्यो
मंत्राक्षतान्गृहीत्वातान्प्रणम्य ॥ ततः शांताद्यौरितिशांतिसूक्तंपठित्वा यस्मात्कोशेतिमंत्रेणकृतंकर्मेश्वरार्पणंकुयात् ॥
श्रीयज्ञनारायणायनमः ॥ शुभंभवतु ॥ उत्तरकर्मण्यविघ्नमस्तु ॥ ॥ श्री ॥इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्प
न्नागरद्विवेदिधोरजरामौरसरविशंकरकृतेसनिर्णयगृहयज्ञप्रयोरश्मिर्विंशः ॥ २० ॥

श्रीकृष्णार्पणमस्तु ॥ अथसर्वविघ्ननिवृत्तिकामोयजमानो विनायकप्रीतयेशौनकोक्तप्रकारेणतच्छांतिंकुर्यात् ॥
तत्रादौतत्कर्मोपयोगिनिर्णयमाह ॥ ॥ अथवैनायकीशांतिः ॥ विघ्नप्रत्यूहबालार्कोबालार्कसदृशच्छविः ॥ शिवेतराणां
तनुतांतनुतागणनायकः ॥ याज्ञवल्क्यः ॥ एवंविनायकंपूज्यग्रहांश्चैवविशेषतः ॥ कर्मणांफलमाप्नोतिश्रियंचाप्यत्तनु
त्तमितिबृहत्पराशरः ॥ चतुर्थ्यांशुक्लपक्षेतुश्रवणेचोत्तरेतथा ॥ पुण्यार्थंसर्वसिध्यर्थंकुर्याच्छांतिंविनायकिमिति ॥ नक्षत्राणि
विष्णुधर्मोत्तरे ॥ इमांशांतिंप्रकृत्यहस्तपुष्याश्वयुक्सौम्येवैष्णवान्यतमेसुभे ॥ नक्षत्रेचमूहूर्तेचमैत्रेवाब्राह्मदैवतइति ॥
शुक्लपक्षेचतुर्थ्यांचवासरे धिष्येणस्यचतिचबोरनक्षत्रतस्यैवपुरतोनृपेति ॥ एतच्छ्रिकामस्यविनायकस्नपनविविषय
मित्यपरार्कः ॥ उपसृष्टस्यतुपुण्याहेएवविधानम् ॥ उपसृष्टस्यविलंबायोगात् ॥ अत्रोपकल्पनश्लोकामहार्णवे ॥
अथोच्यंतेऽत्रसंभारारोचनापंचमृत्तिकाः ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाह्रदात् ॥ चंदनागरुकस्तूरिकर्पूराद्या
सुगंधयः ॥ गौरसर्षपकल्कस्तूगव्यांज्येनविमिश्रितः ॥ गुग्गुलुश्चापिसंशुद्धः सर्वौषधिगणस्तथा ॥ चत्वारः कलशा
एकवर्णाश्चास्फुटिताव्रणाः ॥ ह्रदोदकयुतावापिनिम्नगासंगमोदकाः ॥ सग्रीवायुद्रमारक्तंचर्मचानडुहंतथा ॥ श्री
पर्णीकाष्ठपीठंचसहकारस्यपल्लवाः ॥ अश्वत्थपल्लवावास्युसुगंधिसुमनांस्यपि ॥ स्रजः शोभनगंधाश्चविचित्रकु
सुमानिच ॥ कलशावेष्टनार्थंचनववस्त्रचतुष्टयम् ॥ पीठस्याच्छादनार्थंतु शुभ्रवस्त्रमथापरं ॥ गणेशांबिकयोरर्थं वस्त्र
युग्मंसुशोभनं ॥ आचार्यदक्षिणार्थंतुमहार्हवसनद्वयं ॥ पंचवर्गानिपिष्ठानि स्वस्तिकस्यविनिर्मितैः ॥ तैलंचसार्ष
पंतद्वदुदुंबरविनिर्मितः ॥ स्रुवः कुशाश्चरुस्थालिपाकार्थंतंदुलाःशुभाः ॥ किंचिद्धृतिक्रियाक्लृप्तास्तंदुलाश्चापरेतथा ॥

तिलपिष्टेनसंयुक्तओदनः पूर्वमेवच ॥ पक्वाश्चमत्स्याश्चापक्वामोसंपक्वमकक्ककम् ॥ गौडीपैष्टीचमाध्वीचेत्येवंवैचित्रधाः
सुराः ॥ मत्स्यादिकंसुरांतंचनिषिद्धंयच्चयस्यतत् ॥ नग्राह्यंतुविशेषेणद्विजैक्स्त्याज्याः सुरास्तथा ॥ यजमान
स्तुशूद्रश्चेत्तद्विजैस्तानियोजयेत् ॥ मत्यक्षमुलकंवास्यादुतभक्षस्तदाकृतिः ॥ अपूपापूरिकाश्चैवतथैवोंडेरकस्त्रजः
दध्यन्नंपायसंचैवपिष्टंचगुडमिश्रि।म् ॥ लड्डुकाश्चतथादुर्वासर्षपागौरसंज्ञिताः ॥ गणेशप्रतिमाचैवगौर्याश्चप्रतिमांतथा ॥
एवंसंभृतसंभारः शांतिंकुर्याछुभेदिंनइति ॥ ॥ अथप्रयोगः ॥ सपत्नीकोयजमानः प्रातर्नित्यकृत्यं विधाउक्त
विधि नागणेशांबिकेपूजयित्वावैश्वदेवंविधाय मातृयजनपूर्वकमाभ्यु दयिकंस्वस्तिवाचनं शांत्युदकंचकृत्वाउपकरणा
निसंपाद्यशुचौदेशेप्राङ्मुख उपविश्यजीवास्थेतिमंत्रेण विधिवदाचम्य ब्रह्मजज्ञान मितिपठित्वाअव्वसश्चेति
चत्यमुपुत्राजिनमितिमांगल्यतिलक करणपूर्वकंस्वस्त्ययनंविधायसु मुखश्चेत्कादिपठित्वासंकल्पादिकुयात् ॥ तद्यथा ॥
देशकालौस्मृत्वादः कर्मणोविर्घ्निघ्नसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थविनायकशांतिंकरिष्यइति ॥ उपसृष्टेतुउपसर्गनिवृत्ति
द्वाराश्रीपरमेश्वरप्रीतयेशांतिंकरिष्यइतिवदेत् ॥ तदंगभूतमाचार्यामृत्विजामर्धंदानपूर्वक पादप्रक्षालनमर्चनंवरणंचाहं
करिष्यइतिसंकल्प्याचार्यस्य चतुर्णामृत्विजांचपादप्रक्षालनादिवरणांतं ग्रहमखोक्तप्रकारेणकृत्वाऽस्ययागस्येतिप्रार्थनां
तेउक्तप्रकारेणपंचगव्यंसंपाद्यकर्मभूमिमुक्तमंत्रैः प्रोक्षेत् ॥ अत्रऋत्विजोनसंतीतिकेचित् तत्पक्षेआचार्यएववक्ष्यमाणसूक्त
जपादिकंकुर्यात् ॥ ततआचार्यः प्रतिमयोरग्न्युत्तारणंकुर्यात् ॥ तद्यथाग्रहस्थापनोक्त प्रकारेणाग्न्युत्तारणं विधायान्यदेशे
प्रतिमांस्थाप्यततोमध्यदेशेशुचौसुलिप्तेस्थंडिलेपंचवर्णैः पिष्टैः सुधयावास्वस्तिकंविधायतस्मिन्प्राचीन ग्रीवमुत्तरलोमा
नुडुहंरक्तमरक्तमपिचर्मास्तीर्यतत्रश्रीपर्णीपीठंविधायतद्वस्त्रेणाछादयेत् ॥ तद्भद्रासनं ॥ भद्रंमनोरमन्मासनमित्यर्थः ॥
तस्मात्पूर्वादिक्रमेणचतसृषुदिक्षुस्वस्तिकानिकुर्यात् ॥ ततस्तत्प्राग्देशेकुंडंस्थंडिलंवा विधायतत्रभूसंस्कारादिप्रणितामणय
नांतंकुर्यात् ॥ ततः पात्रासादनं ॥ तत्रस्थालीपाकवत्सर्वं मासाद्यमहार्णवोक्तान्वैशेषिकान् वक्ष्यमाणान्पदार्थानासा
दयेत्ततोदक्षिणंजान्वाच्यपरिस्तीर्यततोहविर्ग्रहणं ॥ मितायसंमितायशालायकटंकटायकूष्मां डायराजपुत्रायजुष्ठंगृह्णा





मीति ॥ अप्रथग्देवताइतिमिताक्षरायां ॥ अपरार्कमतेशालकटंकटायकूष्णांडराजपुत्रायेतिसमासांगीकारेणचतस्रइति ॥
तथापरार्कमतेगणेशांबिकयोः स्थापनानंतरंव्योमकेशादिपंचदशदेवतानांस्थापनम् ॥ तासांहोमोपिभवतीकेचित् ॥
नेत्यपरे ॥ होमपक्षेराजपुत्रायेत्यनंतरंव्योमकेशायेत्यादि वक्ष्यमाणपंचदशदेवतानामाचर्थ्यतानुच्चार्य जुष्टंगृह्णाणीत्ती
गृह्णीयात् ॥ ततोहविरासादनाद्यधिश्रयणांतंकर्म ॥ ततोभद्रासनस्योपरितः कृतेषुचतुर्षुस्वस्तिकेषु पूर्वादिक्रमेणचतसृषु
दिक्षुचतुरः कलशान्स्वस्तिवाचनोक्तरीत्यापदार्थानुसमयेन कांडानुसमयेनवास्थापयेदाचार्यः ॥ ऋत्विजोवैकैकंतत्ररो
चनांगुग्गुलंवैशेषिकंप्रक्षिपेत् ॥ ततऋत्विजसूक्तपाठंकुर्युः तत्रग्रहशांतिप्रकरणोक्तंवृष्टिकेवृष्टिवंदनमितिलक्ष्मीसूक्तंपूर्वकल
शेपठेत् ॥ ततोदक्षिणकलशेवरुणसूक्तमाह ॥ अंबयोयंतीत्याद्यपांसूक्तगणमंत्राणां सिधुद्वीपोथर्वाशांतातिभृगुःशुनःशेपा
ऋषयः सोमापश्चंद्रमावरुणसिंधवोनानामंत्रोक्तादेवताःगायत्र्युनुष्टुप् बृहतीपंक्तीत्रिष्टुव्जगतीबृहत्यःछंद्बांसिमंत्रसूक्तजपे
विनियोगः ॥ ॐअंबयोयंत्वध्वंभिजामियोअध्वरीयतां ॥ पृंचतीर्मधुनापयः ॥ १ ॥ अमूर्याउपसूर्येयाभिर्वासूर्यः सह ॥
तानोहिन्वंत्वध्वरम् ॥ २ ॥ अपोदेवीरुपह्वयेयत्रगावः पिबंतिनः ॥ सिंधुभ्यः कर्त्वंहविः ॥ ३॥ अप्स्वं३तरमृतमप्सु
भेषजं ॥ अपामुतप्रशस्तिभिरश्वाभवंथवाजिनोगावोभवथवाजिनीः ॥ ४ ॥ आपोहिष्ठामयोभुवस्तानऊर्ज्जेदधातनः ॥
महेरणायचक्षसे ॥ १ ॥ योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उषतीरिवमातरः ॥ २ ॥ तस्माअरंगमामवोयस्यक्ष
यायजिन्वथ ॥ आपोजनयथाचनः ॥ ३ ॥ ईशानावार्याणांक्षयंतीश्चर्षणीनाम् ॥ अपोयाचामिभेषजं ॥ ४ ॥
शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ ५ ॥ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निं
चविश्वशंभुवं ॥ ६ ॥ आपपृणीतभेषजंवरुथंतन्वे३मम ॥ ज्योक्चसूर्यंदृशे ॥ ७ ॥ शन्नआपोधन्वन्याः३वशमुशंत्वनूप्याः ॥
शंनः खनित्रिमाआपः शमुयाः कुंभआभृताः शिवानः संतुवार्षिकीः ॥ ८ ॥ ॥ हिरण्यवर्णाः शुचयः पावकाया

सुजातसंवितायास्वग्निः ॥ याअग्निंगर्भंदधिरेसुवर्णास्तानआपः शंस्योनाभंवंतु ॥ १ ॥ यासांराजावरुणोयातिमध्ये सत्यानृतेअवपस्यंजनानां ॥ याअग्निंगर्भंदधिरेसुवर्णास्तानआपः शंस्योनाभवंतु ॥ २ ॥ यासांदेवादिविकृण्वंतिभक्षं याअंतरिक्षेवहुधाभवंति ॥ याअग्निंगर्भंदधिरेसुवर्णास्तानआपः शंस्योनाभंवंतु ॥ ३ ॥ शिवेनंमाचक्षुषापश्यतापः शिवयातन्वोपस्पृशतत्वचंमे ॥ घृतश्चुतः शुचयोयाः पावकास्तानआपः संश्योनाभंवंतु ॥ ४ ॥ यददः संप्रयतीरहावनंदताहते ॥ तस्मादानद्यो३ नामस्थतावोनामानिसिंधवः ॥ १ ॥ यत्प्रेषितावरुणेलगतनाछीभंसमवलात्त ॥ तथांप्नोदिंद्रोवोयतीस्तस्मादापोअनुष्ठन ॥ २ ॥ अपकामंस्पंदमानाअवोवरतवोहिकं ॥ इंद्रोवःशक्तिभिर्देवीस्तस्माद्वानर्मिवोहितम् ॥ एकोवादेवोप्यतिष्ठत्स्यंदमानायथावशं ॥ उदानिषुर्महीरितिस्तस्मादुदकमुच्यते ॥ ४ ॥ आपोभद्राघृतमिदापआसन्नग्नीषोमौविभ्रत्यापइत्ताः ॥ तीव्रोरसोमधुपृचामरंगमआमांभाणेनंसहवर्चसागमेत् ॥ ५ ॥ आदित्यस्याम्युतवांश्रृणोम्यामघोषोगछतिवाङ्मासां ॥ मन्येभेजानोअमृतस्यतर्हिहिरण्यवर्णाअतृपंयदावः ॥६॥ इदंवआपोहृदयमयंवत्सऋतावरीः ॥ इहेत्थमेतशक्वरीर्यत्रेदंवेशयामिवः ॥ ७ ॥ पुनंतुमादेजनाः पुनंतुमनवोधिया ॥ पुनंतुविश्वाभूतानिपवमानः पुनातुमाम् ॥ ८ ॥ पवमानः पुनातुमाक्रत्वेदक्षायजीवसे ॥ अथोअरिष्टतातये ॥ २ ॥ उभाभ्यांदेवसवितः पवित्रेणसवेनच ॥ अस्मान्पुनीहेचक्षसे ॥ ३ ॥ वायोः पूतः पवित्रेणप्रत्यङ्सोमोअतिद्रुतः ॥ इंद्रस्ययुज्यः सखा ॥ ४ ॥ आपोअस्मान्मातरः सूदयंतुघृतेननोघृतप्वः पुनंतु ॥ विश्वंहिरिप्रंप्रवहंतिदेवीरदिदाभ्यः शुचिरापूतएमि ॥ २ ॥ यत्किंचेदंवरुणंदैव्येजनेभिद्रोहंमनुष्या३श्चरंती ॥ अचित्त्याचेत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषः ॥ ३ ॥ वैश्वानरोरश्मिभिर्नः पुनातुवातः प्राणेनेषिरोनभोभिः ॥ द्यावापृथिवीपयसापयस्वतीऋतावरियज्ञिये नः पुनीताम् ॥ १ ॥





वैश्वानरींसूनृतामारभध्वंयस्याआशास्तन्वोवीतपृष्ठाः ॥ तयागृणंतः सधमादेषुवयंस्यामपतयोरयीणाम् ॥ २ ॥ वैश्वानरींवर्चसआरभध्वंशुद्धाभवंतः शुचयः पावकाः ॥ इहेडयासधमादंमदंतोज्योक्पश्येमसूर्यमुच्चरंतम् ॥ ३ ॥ अप्सुतेराजन्वरुणगृहोहिरण्ययोमिथः ॥ ततोधृतव्रतोराजासर्वाधामानिमुंचतु ॥ १ ॥ धाम्नोधाम्नोराजन्नितोवरुणमुंचनः ॥ यदापोअघ्न्याइतिवरुणेतियदूचिमततोवरुणमुंचनः ॥ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्याम ॥ ३ ॥ प्रास्मत्पाशान्वरुणमुंचसर्वान्यउत्तमाअधमावारुणाये ॥ दुष्वप्न्यंदुरितंनिश्वास्मदथगछेमसुकृतस्यलोकम् ॥ ४ ॥ इतिवरुणसूक्तम् ॥ ततोपश्चिमेसूर्यसूक्तं पठेत् ॥ तद्यथा ॥ ॐउदस्यकेतवोदिविशुक्राभ्राजंतईरते ॥ आदित्यस्यनृचक्षसोमहीव्रतस्यमीढुषः ॥ १ ॥ दिशांप्रज्ञानंस्वरयंतमर्चिषासुपक्षमशुंपतयंतमर्णवे ॥ स्तवामसूर्यंभुवनस्यगोपांयोरश्मिभिर्दिशआभातिसर्वाः ॥ २ ॥ यत्प्राङ्प्रत्यङ्स्वधयायासिशीभंनानारूपेअहनिकर्षिमायया ॥ तदादित्यमहितत्तेमहिश्रवोयदेकोविश्वंभूरिभूमजायसे ॥ ३ ॥ विपश्चितंतरणिंभ्राजमानंवहंतियंहरितः सप्तबह्वीः ॥ स्रुताद्यमत्रिर्दिवमुन्निनायतंत्वापश्यंतिपरियांतमाजिं ॥ ४ ॥ मात्वादभन्परियांतमाजिंस्वस्तिदुर्गांअतियाहिशिभं ॥ दिवंचसूर्यपृथिवींचदेवीमहोरात्रेविमिमानोयदेषि ॥ ५ ॥ स्वस्तितेसूर्यचरसेरथाययेनाभावंतौपरियासिसद्यः ॥ यंतेवहंतिहरितोवहिष्ठाः शतमश्वायदिवासप्तबह्वीः ॥ ६ ॥ सुखंसूर्यरथमंशुमंतंस्योनंसुवह्निमधितिष्ठवाजिनं ॥ यंतेवहंतिहरितोवहिष्ठाःशतमश्वायदिवासप्तबह्वीः ॥ ७ ॥ सप्तसूर्योहरितोयातवेरथेहिरण्यत्वचसोबृहतीरयुक्त ॥ अमोचिशुक्रोरजसःपरस्ताद्विधूयदेवस्तमोदिवमारुहत् ॥ ८ ॥ उत्केतुनाबृहतादेवआगन्नपावृक्तमोभीज्योतिरश्रैत् ॥ दिव्यः सुपर्णः सवीरोव्यख्यददितेः पुत्रोभुवनानिविश्वा ॥ ९ ॥ उद्यन्रश्मीनातनुषेविश्वारूपाणिपुष्यसि ॥ उभासमुद्रौक्रतुना

विभासिसर्वांल्लोकान्परिभूर्भ्राजंजानः ॥ १० ॥ इतिसूर्यसूक्तम् ॥ ततः उत्तरकलशेकयानश्चित्रेतिवामदेवीसूक्तमापठे
युराचार्याः ॥ तद्यथा ॥ ॐकयानश्चित्रआभुवदूतीसदावृधः सखा ॥ कयाशचिष्ठयावृता ॥ १ ॥ कस्त्वासत्योमदानां
मंहिष्ठोमत्सदंधसः ॥ दृल्हाचिदारुजेवसु ॥ २ ॥ अभीषुणः सखीनामविताजरित्रेणाम् ॥ शतंभवास्यूतिभिः ॥ ३ ॥
इमानुकंभुवनासीषधामहत्वायदेवाअसुरान्यदायन्निति द्विपदासूक्तौ ॥ तौतुपातुरोणे ॥ ४ ॥ इतिवामदेवीसूक्तम् ॥
ततस्त्यमूषुवाजिनमितिस्वस्त्ययनसूक्तंपठेयुः॥ ततआचार्योहोमार्थस्थंदिलादीशान्यो वेद्यांपोठेवाप्रतिमाद्वयेविनायकां
विकेवक्ष्यमाणमंत्राभ्यांसंस्थाप्य तदस्त्वितिप्रतिष्ठापयेत्ततो यजमानआवाहनादिनैवेद्यांतैरुपचारैः संपूजयेत् ॥ तत्र
मंत्रौ ॥ ॐतत्पुरुषायविघ्नहेवक्रतुंडायधीमहि ॥ तन्नोदंतीप्रचोदयात् ॥ १ ॥ ॐसुभगायैविद्महेकाममाल्यैधिमहि ॥
तन्नोगौरीप्रचोदयात् ॥ २ ॥ अपरार्केहेमाद्रिमतेप्रतिमयोरुत्तरतोनाममंत्रैरन्यापंचदशदेवताः संस्थाप्यप्रतिष्ठापयेत् ॥
चतुर्थ्यंतंनामोच्चार्यव्योमकेशंस्थापयामीत्यादिद्वितियांतेनावाह्यचतुर्थ्यंतेनपूजयेत् ॥ तत्रमंत्राः ॥ व्योमकेशायनमः ॥
१ ॥ पार्वत्यैनमः ॥ २ ॥ भीमजाय०॥ ३ ॥ कृष्णस्यपित्रे० ॥ ४ ॥ अर्काय० ॥ ५ ॥ आराय० ॥ ६ ॥ मिताय० ॥
७ ॥ धिषणाय० ॥ ८ ॥ क्लेदपुत्राय० ॥ ९ ॥ कोणाय० ॥ १० ॥ लक्ष्मीवते० ॥ ११ विधुंतुदाय० ॥ १२ ॥
केतवे० ॥ १३ ॥ बाहुलेयाय ॥ १४ ॥ नंदकस्यधारिणे० ॥ १५ ॥ ततः श्रृताभिधारणाद्याज्यभागांतंकुर्यात् ॥
तत्रयथादैवतंयजमानस्यत्यागः ॥ ततोगव्याज्यलोलोकृतेनसिद्धार्थपिष्टेनोद्वर्त्तितांगस्य सर्वौषधिभिः सर्वगंधैश्चविलिप्त
शिरसोयजमानस्यमंगलवेदघोषेण सहवस्त्राच्छादितभद्रासनोपर्याचार्येणोपवेशनंकार्यमितिमिताक्षरादौ॥ मदनरत्नेतूपवे
शनोत्तरमुद्वर्त्तनादिकार्यमित्युक्तं ॥ सर्वौषधानिप्रियंगुनागकेसरादीनिइतिमिताक्षरायाम् ॥ कर्मप्रदीपेतुकुष्ठंमांसीहरिद्रे
द्वेमुराशैलेयचंदनं ॥ वचाचंपकमुस्तेचसर्वौषध्योदशस्मृताइति ॥ अपरार्केवृद्धवसिष्ठः ॥ बालाचशंखपुष्टीचकुष्टंचैवबचा
तथा ॥ नागकेसरचूर्णंतुसर्वौषधिगणोभवेदिति ॥ सर्वगंधामदनरत्ने ॥ कर्पूरागरुकंदर्पः कुंकुमंचंदनंतथा ॥ जाति









फलमितिप्रोक्तासर्वगंधासदाबुधैरिति ॥ हेमाद्रौगारुडे ॥ कर्पूरंचंदनः दर्पः कुंकुमंचसमासकं ॥ सर्वगंधमितिप्रोक्तंस
मस्तसुरवल्लभमिति ॥ तत्रोभद्रासनोपविष्टोयजमानः

पूर्वोक्तप्रकारेणऋत्विग्भिः सहस्वस्तिवाचनंकुर्यात् ॥ ततआचार्योयजमानंदक्षिणतउदङ्मुखस्तिष्ठ न्नृत्विक्कृदत्त
पूर्वादिकलशत्रयेणैकैकमंत्रेणस्नपयेत् ॥ सहस्राक्षंशतधारमृषिभिः पावनंकृतं ॥ तेनत्वामभिषिंचामिपावमान्याः पुनंतुते ॥
भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः॥ भगमिंद्रश्चवायुश्चभगंसप्तर्षयोदुदुः॥ यत्तेकेशेषुदौर्भाग्यंसीमंतेयश्चमूर्द्धनि ॥ ललाटे
कर्णयोरक्ष्णोरापस्तत्रतुसर्वदा ॥ उत्तरकलशेमंत्रत्रयमुच्चार्यइतिहेमाद्रिमहार्णवमिताक्षरायाम् ॥ अपरार्केतुप्रतिकलशंमंत्र
त्रयावृत्तिरिति ॥ ततश्चतुर्मिलितैः कलशैर्ऋत्विग्धृतैर्बृहत्पराशरोक्तैर्मंत्रैरभिशेकंकारयेत् ॥ मंत्रान्स्वयंपठेदाचार्यः ॥
एतद्धिपावनंस्नानंसहस्राक्षमितिस्मृतं ॥ तेनत्वाशतधारेणपावमान्यः पुनंत्विमाः ॥ शक्रादिदशदिक्पालाः ब्रह्मेशाके
शवादयः ॥ आपस्तेघ्नंतुदौर्भाग्यंशांतियच्छंतुसर्वदा ॥ सुमित्रियानआनआपओषधयः संतुदुर्मित्रियास्तस्मैसंतुयोस्मा
न्द्वेष्टियंचवयंद्विष्मः ॥ समुद्रागिरयोनद्योमुनयश्चपतिव्रताः ॥ दौर्भाग्यंघ्नंतुतेसर्वेशांतियच्छंतुसर्वदा ॥ पादगुल्फोरुजं
घादीनितंबोदरनाभिषु ॥ स्तनोरोबाहुहस्ताग्रग्रीवाअंसांगसंधिषु ॥ नासाललाटकर्णभ्रूकेशांतेषुचयत्स्थितं ॥ त्वदी
यंघ्नंतुदौर्भाग्यंशांतियच्छंतुसर्वदेति ॥ ततआचार्यउपविश्यसव्यपाणिगृहीत कुशत्रयांतर्हितेयजमानमूर्द्धन्यौदुंबरेणस्रुवेण
सार्षपंतैलंजुहुयात् । पश्चिमतस्तिष्ठन्जुहुयादितिमयूखे ॥ उपविश्यजुहुयादित्यन्ये ॥ ॐमितायस्वाहा० ॥ ॐसंमिताय
स्वाहा० ॥ ॐशालाय० ॥ ॐकटंकटाय० ॥ ॐकूष्मांडाय० ॥ ॐराजपुत्राय० ॥ यथामंत्रलिंगंयजमानस्त्यागान्
कुर्यात् ॥ अपरार्कमतेआहुतेश्चतुष्टयंपूर्वोक्तप्रकारेण ॥ ततएभिरेवमंत्रैरवदानधर्मेणचरुहोमः ॥ व्योमकेशादीनांहोम
पक्षेव्योमकेशायस्वाहेत्येवंपंचदशाहुतयउदपात्रेऽत्रसंपातश्च ॥ यजमानोपियथामंत्रलिंगंत्यजेत् ॥ ततोयजमानःसुस्नातः
शुक्लानुलेपनमाल्यांबरधरआचार्यसहितः स्थापितदेवतानांयथाविभवंपूजांकृत्वास्तीर्ण कुशेनूतनवंशसूर्पेनिहितमुपहारं
विनायकगायत्र्याविनायकायैनमुपहारंनिवेदया मीत्यंतयाविनायकायनिवेदयेत् ॥ उपहारायथासकृदवहतास्तंदुला॥

१ ॥ तिलपिष्टओदनः अपक्कमांसमिश्रओदनइतिमयूखे ॥ मत्स्यापक्कास्वपक्काश्चमांसविकारास्तदाकारावा ॥ ३ ॥ पक्क मपक्कमांसंमाषविकारंवा ॥ ४ ॥ पुष्पंचित्रंरक्तपीतादिनानावर्णं ॥ ५ ॥ चंदनादिसुगंधिद्रव्यं ॥ ६ ॥ त्रिविधासुरागौडी माध्वीपैष्टीच ॥ गुडमधुपिष्टमिश्राणिससैंधवानिपात्र त्रयस्थितानिक्षीराणिवा ॥ ७ ॥ मूलकंकंदाकारोभक्ष्यविशेष इतिमिताक्षरायाम् ॥ स्वरूपतएवग्राह्यमितिशांतितिमयूखे ॥ ८ ॥ पूरिकाअपूपास्नेहपक्वोगोधूमविकारः ॥ १० ॥ उंडेरकस्रजः उंडेरकाः पिष्टादिमथस्ताः मोतास्रजः ॥ ११ ॥ दध्योदनः ॥ १२ ॥ पायसं ॥ १३ ॥ गुडमिश्रंशाल्या दिपिष्टम् ॥ १४ ॥ लड्डुकाः ॥ १५ ॥ इत्युपहाराः ॥ ॥ दशमेवोपहारमंबिकागायत्र्यांबिकायैएनमुपहारंनिवेदया मीत्यंतयांबिकायैनिवेदयेत् ततआचमनफलतांबूलदक्षिणानीराजन पुष्पांजलिभिरभ्यर्च्यशिरसाभूमिं गत्वोक्तगायत्री भ्यांविनायकमंबिकांचनमस्कुर्यात् ॥ गंधपुष्पदुर्वासर्षपयुतेन कुसुममात्रयुतेनवोदकेनांजलिमापूर्यपूर्वोक्त गायत्रीभ्या मर्घौदत्वापुनर्दुर्वासर्षपपुष्पपूर्णांजलिभ्यांदत्वाविनायकमुपतिष्ठेत ॥ रूपंदेहिजयंदेहिभाग्यंभगवान्देहिमे ॥ पुत्रान्देहि धनंदेहिसर्वान्कामांश्चदेहिमेइति ॥ ततोऽनेनैवमंत्रेणांबिकायाउपस्थानम् ॥ तत्रभगवान्शब्दस्थानेभगवतीतिवाच्यं ॥ यथापाठमात्रेणांबिकायाउपस्थानमितिमहार्णवं ॥ अंबिकायाउपस्थानेमंत्रांतरमाह ॥ बृहत्पराशरः ॥ सौभाग्यमंबिके देहिरूपंभाग्यंयशोपिच ॥ स्त्रियंपुत्रांश्चकामांश्चतथाशौर्यंचदेहिमे ॥ गणेशमातरंबालेयत्किंचित्सदभीप्सितं ॥ एकनाम्नै वतद्देहिह्रदिगौरिवरान्ममेति ॥ ततआस्तीर्णकुशेसूर्पेसर्वप्रकारमुपहारशेषंनिधाय चतुष्पथमुत्रमुपलिप्यकुशानास्तीर्यतत्र गुरुः शूर्पप्राङ्मुखंनिदध्यात यजमानः प्रक्षालितपाणिपादआचांतो मंत्रोक्तदेवताभ्योबलिंदद्यात् ॥ मंत्रःबलिंगृह्णंत्विमे देवाआदित्यावसवस्तथा ॥ मरुतोथाश्विनौरुद्राः सुपर्णपन्नगाग्रहाः ॥ असुरायातुधानाश्चपिशाचामातरोरगाः शाकिन्यो यक्षवेतालायोगिन्यः पूतनाः शिवाः ॥ जृंभकासिद्धगंधर्वानागविद्याधरानराः ॥ दिक्पालालोकपालाश्चयेचविघ्न विनायकाः ॥ जगतांशांतिकर्त्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमेपापंमासांतुपरिपंथिनः ॥ सौम्याभवंतुतृप्ताश्चभूत प्रेताः सुखावहाइतिदत्वा ॥ इदंदेवादित्यवसुमरुदश्विरुद्रसुपर्ण पंन्नगग्रहासुरयातुधानपिशाच मातृगणशाकिनी यक्ष





वेतालायोगिन्यपूतनाशिवाःजृंभकासिद्ध गंधर्वानागविद्याधरानराःदिक्पाललोकपालश्चयेच विघ्नविनायकाःजगतांछांति कर्तारोब्रह्माद्याश्चमहर्षयः॥ माविघ्नंमाचमेपापंमासांतुपरिपंथिनः सौम्याभवंतुतृप्ताश्चभूतप्रेताः सुखावहाइतिदत्वा ॥ इदं देवादित्यवसुमरुदश्वि रुद्रसुपर्णपंन्नगग्रहासुरयातु धानपिशाचमातृगणशाकिनी यक्षवेतालयोगीनीपूतना शिवजृंभक सिद्धगंधर्वनागविद्याधर नगदिक्पाललोक पालविघ्नविनायकजगछांतिकत् ब्रह्मादिमहर्षिभूतप्रेतेभ्योनममेतित्यजेत् ॥ ततोयजमानः साचार्योगृहमागत्यप्रक्षालित पाणिपादआचांतउपविशेत् ॥ आचार्योवन्हिपूजांविधायसदीपदध्यक्तमाष भक्तबलिनग्नेः परितोदिक्पालेभ्योदद्यात् ॥ ततग्रदशांतिप्रकरणोक्तसूक्तेनपूर्णाहुतिंहुत्वा स्विष्टकृदादिबर्हिर्होमांतमुत्तर तंत्रंकुर्यात् ॥ मिताक्षरायां ॥ चरुशेषेणाभिशेकशालायां दिक्षुविदिक्षुचादिक्पतिभ्योबलिदानमुक्तं ॥ तत्पक्षेपूर्वंस्विष्ट कृत्ततोबलिदानम् ॥ ततोयजमानः आचार्यसंपूज्यसदाक्षिणंवस्त्रयुग्मंतस्मैदद्यात ॥ ऋत्विग्भ्योपि यथाशक्तिहेमदक्षिणां दत्वाऽन्येभ्योभूयसींदद्यात्॥ तत्रदशावरब्राह्मणभोजनसंकल्पंकुर्यात् ततआपोहिष्ठेत्यादिभिरव्दैवतैर्वारुणैमंत्रैश्चाभिशेकं कुर्यात् ॥ ततः स्थापितदेवतानांपूजनपूर्वकं विसर्जनंविधायगछगछेत्यग्निंविसृजेत् ॥ यजमानः सोपस्करप्रतिमे आचार्यायसमर्प्यविप्राशिषो गृहीत्वायस्मात्कोशेतिकृतं कर्मेश्वरार्पणंकुर्यात् ॥ ततः शांताद्योरिति शांतिसूक्तंपठेत् ॥ इतिवैनायकीशांतिः ॥ अपरार्कमतेतुकलशेषुपूजांतेव्योमकेशादिपूजनम् ॥ ततउद्वर्त्तनादिसंस्कृत स्योपवेशनं ॥ ततः सहस्राक्षमितिमंत्रत्रया वृत्याचतुर्भिर्मंत्रैश्चतुष्पथेबलिदानम् ॥ ततोर्घदानोपस्थाने ॥ ततः शुक्लवस्त्रादिधारणं ॥ ब्राह्मण भोजनसंकल्पः ॥ गुरवेवस्त्रयुग्मदानादि ॥इत्यपरार्कमतविशेषः ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोग भानौषट्पन्नागर द्विवेदिरविशंकरकृतेकेवलवैनायकीशांतिप्रयोगरश्मिरेकविंशः ॥ २१ ॥

अथसग्रहविनायकशांतिः ॥ ततः ग्रहाणांपूर्वमनुष्टानम् ॥ ततोगणेशांबिकयोरित्येकः पक्षः ॥ विपर्यासेच द्वितीयः ॥सत्यपिपक्षद्वयेअतिप्रामाणिकैर्भट्टप्रभृतिभिः प्रथमपक्षस्यस्वीकृतत्वात्सएवलिख्यते ॥ नांदिश्राद्धंतंत्रेण ॥ संकल्पेसग्रहविनायकशांतिकरिष्यइति ॥ ग्रहणेआदौग्रहचरुः ॥ ततोवैनायकः स्थापनेप्राच्यांग्रहाणांस्थापनम् ॥

ततः इशानेगणेशांविकयोः ॥ होमेचग्रहहोमंपरिसमाप्य यजमानस्यभद्रासनोपवेशनादिवैनायकचरुहोमांतंकुर्यात् ॥ ततोगृहाणांयजनं ॥ गणेशांबिकयोर्बलिदानम् ॥ चत्वरेबलिदानंचबन्हिपूजा ॥ वलिदानं ॥ पूर्णाहुतिः ॥ ततः स्विष्टकृदादिबर्हिहोमांत मुत्तरतंत्रंकर्म ॥ ततोदक्षिणादानं ॥ अभिशेकः ॥ ततः प्रणिताविमोका दिशांत्यंतंकर्मकुया दिति ॥ ॥ इतिश्रीमदथर्वग्रह्यसूत्रप्रयोग भानौषट्पन्नागरद्विवेदि रविशंकरकृतेसग्रहविनायक शांतिप्रयोगरश्मि द्वाविंशः ॥ २२ ॥

अथगर्भाधानसंस्कारउच्यते ॥ तदुपयोगितयाप्रथम रजोदर्शनेदुष्ट मासादिनीर्णीयते ॥ तत्रचैत्रज्येष्ठाषाठ भाद्रपदकार्तिकपौषमासादुष्टाः ॥ आश्विनोमध्यमः ॥ शेषाः शुभाः ॥ क्वचिद्वैशाखफाल्गुनपूर्वार्द्धयारधमत्व मुक्तम् ॥ तिथीषुप्रतिपच्चतुर्थीषष्टयष्ठमीद्वादशी चतुर्दशीपौर्णिमाअमावास्याअशुभाः शेषाःशुभाः क्वचित्सप्तम्येकादश्य शुभेअष्टमीद्वादशी इत्युक्तंआसांशुभाशुभत्वाभ्यांमध्यमत्वमिति ॥ तथाच ॥ रविभौममंदवासरेषुभरणिकृत्तिकार्द्राश्लेषा मघापूर्वात्रयविशाखाज्येष्टा नक्षत्रेषुविष्कुंभगंडांतिगंडशुलव्याघातवज्र परिधपूर्वार्द्धव्यतीपातवैधृतयोगेषुविष्टयांगृहणे रात्रिसंध्यापराह्णकाले षुनिद्रायांजीर्णरक्तनीलवस्त्रेषु नग्नत्वेपरग्रहपरग्रामेषु अल्पाधिकनीलादिरुधिरत्वेचा निष्टफलम् ॥ संमार्जनीकाष्टतृणाग्निशूर्पान हस्तेदधानाकुलटास्यात् वस्त्रेविषमारक्तबिंदवः पुत्रफलाः ॥ अथप्रथमऋतुअक्षतैरासनं कृत्वातत्रतामुपवेश्यपतिपुत्रवत्यः स्त्रियोहरिद्राकुंकुमगंधपुष्प स्रक्तांबूलादितस्यैदत्वादीपैनीराज्य सदीपालंकृतेगृहेतांवा सयेयुः ॥ सुवासिनीभ्योगंधादिकंलवणं मुद्गादिचदद्यात् ॥ अथसर्वऋतुसाधारणनियमः ॥ त्रिरात्रमस्पृश्याभूत्वा चतुर्थेहनिषष्ठिवारंमृत्तिकाशौचेनमलंप्रक्षाल्यदंतधावन पूर्वकंसंगवकालेस्नायात् ॥ सूर्योदयात्प्राक्स्नानंत्वनाचारः ॥ चतुर्थहनिरजोनिवृत्तौभतृशुश्रुषणादौशुद्धिः ॥ पंचमेहनिदेवपित्र्ययोः कर्मणिशुद्धिः ॥ कानिचिद्दिनानिरजोयद्यनुवर्त्ते ततन्निवृत्तिपर्यंतंदेवपित्र्ययोर्नशुद्धिः केचित्तुचतुर्थेदिवसेदर्शेष्टयादि श्रौतकर्माणिकर्त्तव्यानीत्याहुः॥ अपरेतुइतरादिना





पेक्षयाचतुर्थदिवसस्यैवानुकालत्वेतत्रैवगर्भाधानं दुष्टरजोदर्शनशांतिश्चकर्त्तव्या ॥ महासंकटेश्रीसूक्तहोम पूर्वकाभिशेकेन उपनयनादिकं ॥ अपिचतुर्थेहनिकर्त्तव्यमित्याहुः ॥ अयंचतुर्थहन्यधिकारनिर्णयः सर्वथारजोभिवृत्तावेवज्ञातव्यः ॥ प्रथमेदुष्टरजोदर्शनेद्वितीयं प्रदीष्टयतस्मिन्नप्यशुभेविस्तरशांतिंकुर्यादित्यपिकेचित् ॥ ग्रहणव्यतीपातादिबहुतरदोषे रजोदर्शनंद्वितीयादिरजोदर्शने शांतिपूर्वकंगर्भाधानंकार्यं ॥ गर्भाधानेगुरुशुक्रास्ताधिकमासादिदोषोनास्ति ॥ यदितु प्रथमरजोदर्शनेशांतिर्नकृताद्वितीयादि रजोदर्शनेशुक्रास्तादिदोष प्रसक्तिस्तदानिमित्तानं तरमेवयत्रनैमित्तिकानुष्टानं तत्रास्तादिदोषाभावोमुख्यकालाति क्रमेतुअस्तादिदोषोस्त्येवेतिसामान्य निर्णयानुसारेणऋतुशांतिरस्तादौनकार्या ॥ तदनुरोधेनगर्भाधानंचनकार्यमितिभाति ॥ शांतिश्चसग्रहमखैवकार्या ॥ अथरजोदर्शनशांतिप्रयोगउच्यते ॥ रजो दर्शनानंतरंपंचमादिदिने चंद्रताराद्यनुकूलेशुचिदेशेषु स्नातयापत्न्यासहयजमानः कृतमांगलिकः श्रीपर्ण्यादिपीटेप्रा ङ्मुखउपविश्यजीवास्थेतिमंत्रेण विधिवदाचम्यप्राणनायम्य देशकालौसंकीर्त्यममपत्न्याः प्रथमरजोदर्शनेऽमुकदुष्ट मासादिशूचितसंकलानिष्ठनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांशौनक्तांशांतिंकरिष्य इतिसंकल्प्य ॥ स्वस्तिवा चननांदिश्राद्धपूर्वकसकलां वक्ष्यमाणप्रकारेण शांतिंकृत्वागर्भाधानोक्तकालेषष्ठाष्टमदशमद्वादश चतुर्दशषोडशदिना मन्यतमस्मिन्नेकदिवसेगर्भाधानंकार्यं ॥ यद्वा ॥ गर्भाधानोक्तएकस्मिनदिने पूर्वोक्तशांतिसंकल्पंकृत्वा ॥ गणेशपूजना दिशांतिंसमाप्यपूर्वोक्तपुनर्मंगलस्नानंकृत्वा ॥ गणपतिपूजनस्वस्तिवाचनांदिश्राद्धादि संकल्पपूर्वकगर्भाधानंकार्यं ॥ अथवाएकस्मिनदिनेशांतिगर्भाधानयो स्तत्रेणनांदिश्राद्धादिकुर्यात् कृत्वातंत्रेणसमापयेदिति ॥ तत्रसंकल्पेविशेषमाह ॥ देशकालयोः संकीर्त्तनांतेअस्याः ममपत्न्याः प्रथमरजोदर्शनेकरिश्यमाणयोः शांतिगर्भाधानयोः अंगत्वेनगणपति पूजनपूर्वकंस्वस्तिपुण्याहवाचनमातृका पूजनंनांदिश्राद्धंचकरिष्यइतिसंकल्प्य ॥ एतानिकृत्वापुनर्देशकालौसंकीर्त्यमम पत्न्याः प्रथमरजोदर्शनेदुष्टमासादिसूचितेत्यादिपूर्ववत्संकल्पंकृत्वा ॥ शांत्युदककलशस्थापनंचकृत्वाआचार्यादीन् वरयेत ॥ इतिप्रयोगदर्पणेस्पष्टं ॥ इतिपक्षत्रयमध्येएकंपक्षमगीकृत्य तदनुसारेणकर्मकुर्यादिति ॥ ॥ अथशिष्टा

चारानुसारेणप्रयोगः ॥ सपत्निकोयजमानः देशकालौसंकीर्त्य ॥ ममअग्निवित्सेदूदिनमारभ्येत्यादिसंकल्प्य पूर्वकं गृह्याग्निपुनः संधानंकृत्वाततोशांतिसंकल्पः ॥ ममपत्न्याः प्रथमरजोदर्शनेऽमुकदुष्टमासादि सूचितसकलारिष्टनिरसन द्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखां शौनकोक्तांआर्त्तवशांतिंकरिष्ये ॥ तत्रादौमहागणपति पूजनपूर्वकंस्वस्तिपुण्याहवा चनंआचार्यऋत्विग्वरणंचकरिष्येइतिसंकल्पः ॥ स्वस्तिवाचनांतेआचार्यादीन्वरयेत् ॥ तद्यथा ॥ यजमानप्रवरमुच्चार्य ॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नः अमुकशर्माहंअमुकप्रवरान्वितामुकगोत्रोत्पन्न अमुकवेदांतर्गतामुकशाखाध्यायिनंअमुक शर्माणंब्राह्मणंअस्मिन्सग्रहमखरजोदर्शनशांतिकर्मणि आचार्यत्वेनत्वामहंवृणे ॥ वृतोस्मि ॥ कर्मकरिष्यामीतितेन वाच्यं ॥ आचार्यंगंधादिनासंपूज्यप्रार्थयेत् ॥ आचार्यस्त्वंयथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन् आचार्योभवसुव्रत ॥ ततोब्रह्माणंवृत्वा ॥ अमुकप्रवरं० ॥ यथाचतुर्मुखोब्रह्मासर्ववेदधरोविभुः ॥ तथात्वंममयज्ञेस्मिन् ब्रह्माभवद्विजोत्तम ॥ अस्मिन्सग्रहमखरजोदर्शनशांत्याख्येकर्मणिब्रह्मत्वेनत्वामहंवृणे ॥ वृतोस्मि ॥ गंधादिनासंपूज्य ॥ ब्रह्मणाकर्मपंचकंकर्त्तव्यं ॥ निरस्तश्चोपवेशश्चतथाब्रह्मजपोपिच ॥ प्रायश्चित्तमुपस्थानंब्रह्मणः कर्मपंचकम् ॥ ततः पुस्तकधारणार्थंसदस्यवरणम् ॥ कर्मणामुपदेष्टारंसर्वकर्मविदुत्तमं ॥ कर्माणंदेवतत्वज्ञंसदस्यंत्वामहंवृणे ॥ वृतोस्मि ॥ गंधादिनासंपूज्य ॥ ततोहोमार्थमन्यानपिचतुरोष्टौवाऋत्विजोवृणुयात् ॥ ऋत्विगस्मिन्महायज्ञेभवसागरसुव्रत ॥ सर्व कर्मप्रतिष्ठार्थंऋत्विक्त्वंमेमखेभव ॥ इतिवृणुयात् ॥ तान्गंधादिनासंपूज्यप्रार्थयेत् ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थि तामया ॥ सुप्रसन्नैः प्रकर्त्तव्यकर्मेदंविधिपूर्वकम् ॥ ततः आचार्यः पवित्रपाणिः प्राणानायम्यदेशकालौसंकीर्त्यब्रह्म जज्ञानं० अव्यसच्चेत्यादिपठित्वासग्रहमखरजोदर्शनशांत्यंगत्वेनयजमानवृतोहमाचार्यकर्मकरिष्ये ॥ तत्रादावस्मिन्कर्मणि योग्यतासिध्यर्थंपुरुषसूक्तैकावृत्तिजपमहंकरिष्ये ॥ तद्यथा ॥ ॐसहस्रबाहुः पुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिं विश्वतोवृत्वात्यतिष्ठद्दशांगुलं ॥ १ ॥ त्रिभिः पद्भिर्द्यामरोहत्पादस्येहाभवत्पुनः ॥ तथाव्यक्रामद्विश्वंगशनानश नेअनु ॥ २ ॥ तावंतोअस्यमहिमानस्ततोज्यायांश्चपूरुषः ॥ पादोस्यविश्वाभूतानि त्रिपादस्यामृतंदिवि ॥ ३ ॥ पुरुषएवे





दंसर्वंयद्भूतंयच्चभाव्यं ॥ उतामृतत्वस्येश्वरोयदन्नेनाभवत्सह ॥ ४ ॥ यत्पुरुषंव्यदधुः कतिधाव्यकल्पयन् ॥ मुखंकि मस्यकिंबाहूकिमूरुपादाउच्येते ॥ ५ ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्योभवत् ॥ मध्यंतदस्ययद्वैश्यः पद्भ्यांशूद्रो अजायत ॥ ६ ॥ चंद्रमामनसोजातश्चक्षोः सूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ ७ ॥ नाभ्याआसी दंतरिक्षंशीर्ष्णोद्यौः समवर्त्तत ॥ पद्भ्यांभूमिर्दिशश्रोत्रात्तथालोकांअकल्पयन् ॥ ८ ॥ विराडग्रेसमभवद्विराजोअधि पूरुषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ९ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यं ग्रीष्मइध्मः शरद्धविः ॥ १० ॥ तंयज्ञंप्रावृषाप्रौक्षन्पुरुषंजातमग्रशः ॥ तेनदेवाअयजंतसाध्यावसवश्चये ॥ ११ ॥ तस्मा दश्वाअजायंतयेचकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः ॥ १२ ॥ तस्माद्यज्ञात्सर्वहुतऋचः सामा नियज्ञिरे ॥ छंदांहजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ १३ ॥ तस्माद्यज्ञात्सर्वहुतः संभृतंपृषदाज्यम् ॥ पशुंस्तांश्चक्रेवाय व्यानारण्याग्राम्याश्चये ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः ॥ देवायद्यज्ञंतन्वानाअबध्नन्पुरुषंपशुं ॥ १५ ॥ मूर्ध्नोदेवस्यबृहतोअंशवः सप्तसप्ततिः ॥ राज्ञः सोमस्याजायंतजातस्यपुरुषादधि ॥ १६ ॥ इतिपुरुषसूक्तंपठित्वाततः आचार्योयजमानोवावामहस्ते गौरसर्षपानगृहीत्वादिग्रक्षणंकुर्यात् तत्ररक्षोहणंवाजिनमितिसूक्तंपठेत् ॥ तद्यथा ॥ रक्षो हणंवाजिनमाजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्म ॥ शिशानोअग्निः क्रतुभिः समिद्धःसनोदिवासरिषः पातुनक्तं ॥ १ ॥ अयोदंष्ट्रोअर्चिषायातुधानानुपस्पृशजातवेदः समिद्धः ॥ आजिह्वयामूरदेवान्रभस्वक्रव्यादोवृक्त्वापिधत्स्वासन् ॥ २ ॥ उभोभयाविन्नुपदेहिदंष्ट्रा हिंस्रः शिशानोवरंपरंच ॥ उतांतरिक्षेपरियाह्यग्नेजंभैःसंधेह्यभियातुधानान् ॥ ३ ॥ अग्नेत्व चंयातुधानस्यभिंधिहिंस्राशनिर्हरसाहंत्वेनम् ॥ प्रपर्वाणिजातवेदः शृणीहिक्रव्यात्क्रविष्णुर्विचिनोत्वेनम् ॥ ४ ॥ यत्रेदा

प्रयोग १०६

अथर्व

नींपश्यंसिजातवेदस्तिष्ठंतमग्नउतवाचरंतम् ॥ उतांतरिंक्षेपतंत्तंयातुधानंतमस्तांविध्यशर्वाशिशानः ॥५॥ यज्ञैरिषुः संन्न
मेमानोअग्नेवाचाशल्यांअशनिभिर्द्दिहानः ॥ ताभिर्विध्यहृदयेयातुधानांन्प्रतिचोबाहुन्प्रति भङ्ध्येषाम् ॥ ६ ॥
उतारब्धान्स्पृणुहिजातवेदउतारेभाणांऋष्टिभिर्यातुधानांन् ॥ अग्नेपूर्वोनिजंहिशोशुचानआमादक्ष्विंकास्तमंदंत्वेनीः ॥
७ ॥ इहप्रब्रूहियतमः सोअंग्नेयातुधानोयइदंकृणोति ॥ तमारभस्वसमिधांयविष्टनृचक्षंसश्चक्षुषेरंधयेनम् ॥ ८ ॥ तीक्ष्णे
नांग्नेचक्षुषारक्षयज्ञंप्रांचंवसुभ्यः प्रणंयप्रचेतः ॥ हिंस्त्रंरक्षांस्यभिशोशुचानंमात्वांदभन्यातुधानांनृचक्षसः ॥ ९ ॥ नृचक्षार
क्षः परिंपश्यविक्षुतस्यत्रीणिप्रतीशृणीह्यग्रां ॥ तस्यांग्नेपृष्टीर्हरसाशृणीहित्रेधामूलंयातुधानस्यवृश्च ॥ १० ॥ ॥
त्रिर्यातुधानः प्रसितिंतएत्वृतंयोअंग्नेअनृतेनहंति ॥ तमर्चिषास्फूर्जयंन्जातवेदः समक्षमेनंगृणतेनियुंधि ॥ १ ॥
यदग्नेअद्यमिथुनाशपांतोयद्वाचास्तृष्टन्जनयंतरेभाः ॥ मन्योर्मनसः शरव्यां जायंतेयातयाविध्यहृदयेयातुधानाम् ॥
२ ॥ परांशृणीहितपसायातुधानान्परांग्नेरक्षोहरसाशृणीह ॥ परार्चिषामूरदेवाञ्छृणिहिपरासुतृपःशोशुचतःशृणीहि ॥
३ ॥ पराद्यदेवावृजिनंशृणंतुप्रत्यगेनंशपथायंतुसृष्टाः ॥ वाचास्तेनंशरवऋछंतुमर्मन्विश्वस्यैतुप्रसितींयातुधानः ॥ ४ ॥
यःपौरुषेयेणक्रविषासमङ्क्तेयोअश्व्येनपशुनांयातुधानः ॥ योअघ्न्यायाभरतिक्षीरमंग्नेतेषांशीर्षाणिहरसापिवृश्च ॥ ५ ॥
विषगवांयातुधानाभरंतामावृश्चंतामदितयेदुरेवाः ॥ परैणांदेवः ॥ सविताददातुपरांभागमोषधीनांजयंताम् ॥ ६ ॥
संवत्सरीण्यंपयउस्रियांयास्तस्यमाशीद्यातुधानोनृचक्षः ॥ पियूषमग्नेयतमस्तितृप्सात्तंप्रत्यंचमर्चिषाविध्यमर्मणि ॥ ७ ॥
सनादंग्नेमृणसियातुधानान्नत्वारक्षांसिपृतनासुजिग्युः ॥ सहमूरानन्नुदहक्रव्यादोमातेहेत्यामुक्षतदैव्यायाः ॥ इत्येका ॥
८ ॥ त्वन्नोंअग्नेअधरादुदुक्तस्त्वंपश्चादुत्तरक्षापुरस्तांत ॥ प्रतीत्येतेअजरांसस्तपिष्ठाअघशंसंशोशुचतोदहंतु ॥ ९ ॥

भानु

वेद १०६

प्रयोग १०७

अथर्व

पश्चात्पुरस्तादधरादुतोत्तरात्कविःकाव्येनपरिपाह्यग्ने ॥ सखासखांयमजरोजरिम्णेअग्नेमर्त्तां अमंर्त्यस्त्वन्नः ॥ १० ॥
तदग्नेचक्षुः प्रतिधेहिरेभेशफारुजोयेनपश्यसियातुधानांन् ॥ अथर्ववज्ज्योतिषादैव्येनसत्यंधूर्वंतमर्चितंन्योष ॥ १ ॥
परित्वाग्नइत्येका ॥ २ ॥ विशेणंभंगुरावतःप्रतिस्मरक्षोंजहि ॥ अग्नेतिग्मेनंशोचिषातपुरग्राभिरर्चिभिः ॥ ३ ॥ विज्यो
तिषोबृहताभात्यग्निराविर्विश्वानिकृणुतेमहित्वा ॥ प्रादेवीर्म्मायाः सहतेदुरेवाः शीर्ष ॥ तेशृंगेरक्षोंभ्योविनिक्ष्वे ॥
४ ॥ येतेशृंगेअजरेजातवेदस्तिग्महेतीब्रह्मसंशिते ॥ ताभ्यांदुर्हार्दमभिदासंतंकिमीदिनंप्रत्यंचमर्चिषांजातवेदो
विनिक्ष्व ॥ ५ ॥ अग्निरक्षांसिसेधतिशुक्रशोचिरमंर्त्यः शुचीः पावकईड्यः ॥ ६ ॥ इतिरक्षोहणसूक्तं पठित्वा
ततः स्मृतिमंत्राः ॥ यदत्रसंस्थितंभूतं स्थानमाश्रित्यससर्वदा ॥ स्थानंत्यक्त्वातुतत्सर्वं यत्रस्थंतत्रगच्छतु ॥
१ ॥ अपक्रामंतुभूतानिपिशाचाः सर्वतोदिशं ॥ सर्वेषामविरोधेन शांतिकर्मसमारभेत् ॥ २ ॥ इतिमंत्रैर्दिक्षु
प्रादक्षिण्येनसर्षपानविकीर्य ॥ अथपंचगव्यकरणं ॥ तद्यथा ॥ तिथीविष्णुस्तथावारोनक्षत्रं विष्णुरेवचयोगश्चकरणं
विष्णुःसर्वंविष्णुमयंजगत् ॥ अद्यपूर्वोच्चरितएवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौरजोदर्शन शांत्यांगतयाविहित
मादौपंचगव्यसंमीलनंचकरिष्ये ॥ ताम्रपात्रेताम्रवर्णायाः गोमूत्रंत्रिःपलंअष्टमाषंवा ॥ गायत्र्याविश्वामित्रसवितागायत्री
पंचगव्यसिध्यर्थंजपेविनियोगः ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहो ॥ धियोयोनःप्रचोदयात् ॥ इतिमंत्रेणगोमूत्रं ॥
अंगुष्ठार्द्धपर्वमात्रंशोडशमाषंवा ॥ श्वेतायाःगोमयं ॥ यस्तेगंधेत्यानंदश्रीरनुष्टुप्पंचगव्यसिध्यर्थंजपेविनियोगः ॥ ॐ
यस्तेगंधःपुरुषेषु इतिगोमयं ॥ पीतकपिलायाःपयःसप्तपलं ॥ द्वादशमाषंवा ॥ पयस्वतीरोषधयोगौतमः सोमोगायत्री
पंचगव्यसिध्यर्थंजपेविनियोगः ॐ पयस्वतीरोषधय इतिपयः ॥ नीलवर्णायाःदधिपंचपलंदशमाषंवा॥ ॥ दधिक्राव्ण
इत्यस्यवामदेवोदधिक्रावानुष्टुप ॥ पंचगव्यसिध्यर्थंजपेविनियोगः ॥ ॐदधिक्राव्णइतिदधि ॥ कृष्णवर्णायाः घृतं

भानु

वेद १०७

त्रिःपलमष्टमाषंवा ॥ घृतंते अग्नेदिव्येसधस्थे घृतेनत्वांमधुरध्यासम्निधे घृतंते देवीनृत्यं१ आवहंतुघृततुभ्यं दुहतांगावो अग्नेइत्याज्यं ॥ देवस्यत्वेतित्रिःपलंचतुर्माषंवाकुशोदकंप्रक्षिप्य ॥ आपोहिष्ठेत्येकयाऋचायज्ञियशफल मूलेनप्रणवेनच नीर्मथनियम् ॥ प्रणवेनाभिमंत्र्य ॥ अत्रमाषः पंचगुंजात्मकः ॥ टंकुकद्वयसमतोलितपलमित्यर्थः ॥ हिरण्यवर्णा इत्यादिग्रहशांतिक्रमोक्तमंत्रैः पंचगव्येनयागभूमिसंप्रोक्ष्य आपोहिष्ठेतितृचेनशुद्धाभिरद्भिस्तथैवसंप्रोक्ष्य ॥ कृतांजलिः सन्देवाआयांतुभापः आयांतुधानाविष्णोर्देवयजनंसरक्षस्व ॥ स्वस्तयनं ॥ त्रयःसुपर्णाभ्यामितिमंत्रांभ्यांदेवताः संप्रार्थ्य ॥ तद्यथा ॥ त्रयःसुपर्णास्त्रिवृतायंदायन्नेकाक्षरमभिसंभूयंशक्राः ॥ प्रत्यौहन्मृत्युममृते नसाकमं तर्दधानादुरितानिविश्वा ॥१॥ दिवस्त्वांपातुहरितंमध्यात्स्वापात्वर्जुनं ॥ भूम्या अयस्मयंपातुप्रागांदेवपुराअयं ॥ २ ॥ इतिमंत्रद्वयेन देवताःसंप्रार्थ्य ॥ ततोभुवनेश्वर्यादिप्रतिमात्रयस्यअग्न्युत्तारणमुक्त ग्रहशांतिक्रमादुध्धृत्ययथोचितमंत्रैःकुर्यात् ॥ तत्र संकल्पविशेषः ॥ देशकालौसंकीर्त्य आसुनूतनमूर्तिषुदेवकलासानिध्य पूर्वकपूज्यत्वादिअधिकारसिध्यर्थं घनदग्निदोष निवर्हणतुयूरारोग्यैश्वर्याभिवृध्यर्थं अग्न्युत्तारणपूर्वकंप्राणप्रतिष्ठापनंचकरिष्ये ॥ इमंमेअग्नेत्यग्न्युत्तारणसूक्तस्यांगिराग्निस्त्रिष्टुपादिनिछंदांसिमूर्त्तीनामग्न्युत्तारणेविनियोगः ॥ इमंमेअग्ने० ब्रह्मणानाशयंत्वित्यंतंसूक्तंपठेत् ॥ ततोप्राणप्रतिष्ठा॥ ॐअस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्माविष्णुमहेश्वराऋषयःऋग्यजुःसामाथर्वाणिछंदांसि॥चैतन्यरूपापराप्राणशक्तिर्देवता॥ आंबीजं ॥ ह्रींशक्तिः क्रौंकिलकं ॥ देवस्यप्राणप्रतिष्ठापनेविनियोगः ॥ ॐआंह्रींक्रौंअं कंखंगंघंङं आंह्रींआंपृथिव्यप्तेजो वाय्वाकाशात्मने आंअंगुष्ठाभ्यांनमः॥ ॐआंह्रींक्रौं ईचंछंजं झंञं अंईक्रौंह्रींआं शब्दस्पर्शरसरूपगंधात्मनेतर्जनीभ्यांनमः॥ ॐआंह्रींक्रौं ऊंटंठंडंढंणं ऊंक्रौं ह्रींआं श्रोत्रत्वक्चक्षुजिह्वाघ्राणात्मने ऊंमध्यमाभ्यांनमः ॥ ॐआंह्रींक्रौं ऐंतंथंदंधंनं ऐंक्रौंह्रीं आंवाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यांनमः ॥ ॐआंह्रींक्रौं ॐपंफंबंभंमं ॐक्रौंह्रींआं नादानगतिविसर्गानंदात्मने औंकनिष्ठिकाभ्यांनमः ॥ ॐआंह्रींक्रौं यंरंलंवंशंषंसंहंक्षं अःक्रौंह्रीं आंमानोबुध्यहंकारचित्तविज्ञानात्मने अःकरतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादिः ॐआंह्रींक्रौं अंकंखंगंघंङं आंक्रौंह्रीं पृथिव्यप्तेजोवाय्वाकाशात्मने









आंहृदयायनमः ॥ ॐआंह्रींक्रौंइं चंछंजंझंञं इंक्रौंह्रींआंशब्दस्पर्शरूपरसगंधात्मने शिरसेस्वाहा ॥ ॐआंह्रींक्रौं ऊंटंठंडंढंणं ऊंक्रौंह्रीं श्रोत्रत्वक्चक्षुजिह्वाघ्राणात्मने शिखायैवषट् ॥ ॐआंह्रींक्रौंऐं तंथंदंधंनं ऐंक्रौंह्रींआं वाक्पाणिपादपायूपस्थात्मनेकवचायहुं ॥ ॐह्रींक्रौंअं पंफंबंभंमं ॐक्रौंह्रींआं वचनादानगतिविसर्गानंदात्मने औंनेत्रत्रयायवौषट् ॥ ॐआंह्रींक्रौं यंरंलंवंशंषंसंहंक्षं अःक्रौंह्रीं आंमनोबुध्यहंकार चित्तविज्ञानात्मने अःअस्त्रायफट् ॥ ॐआंह्रींक्रौं यंरंलंवंशंषंसंहंक्षं अःक्रौंह्रींआं देवस्यप्राणाइहप्राणाः ॥ ॐआंह्रींक्रौं यंरंलंवंशंषंसंहंक्षं अःक्रौंह्रीं आंदेवस्यजीवइहस्थितः ॥ ॐआंह्रींक्रौं यंरंलंवंशंषंसंहंक्षं अःक्रौंह्रीं आं देवस्यसर्वेंद्रियाणि वाङ्मनश्चक्षु श्रोत्रजिह्वाघ्राण पाणिपादपायूपस्थ इहैवागत्यसुखं चिरंतिष्ठंतु स्वाहा ॥ ॐअसुनीते पुनरस्मासु चक्षुःप्राणमिहनोधेहिभागं ॥ ज्योक्पश्येमसूर्यमुच्चरंतमनुमते मृलयानस्वस्ति ॥ ॐचित्रंदेवाना मांगिरसः कुत्सः सूर्यस्त्रिष्टुप् ॥ नेत्रोन्मीलने विनियोगः ॥ ॐ चित्रंदेवाना मुदगादनीकं चक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावांपृथिवी अंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्च ॥ नैवेद्यंसमर्प्य॥ गर्भाधानादिपंचदशसंस्कारसिध्यर्थं पंचदशप्रणवावृत्तिगणनया कुर्यात् ॥ ततः रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः पाशांकोदंडमिक्षुद्भवममृत मथाप्यंकुशंपंचबाणान् बिभ्राणासृक्कपालं त्रिनयनलसितापीन वक्षोरुहाढ्यादेवी बालार्कवर्णाभवतु सुखकरीप्राणशक्तिः परानः ॥ ततः पूर्णकलशपात्रो परिसौवर्ण देवंतत्तद्देवता प्रकाशकमंत्रेण संस्थाप्य पूजयेत् ॥ पात्रांतरेवापंचामृतस्नानांतंसंपूज्यत दनंतरंकलशेस्थापयेदिति ॥ तत्रस्वस्तिवाचनोक्तरीत्याशोभनकलशत्रयंसंस्थाप्य ॥ तेषुकलशेषुहेमपंचरत्नप्रक्षेपोत्तरं गंधादिरत्नप्रक्षेपान्वक्ष्यामः ॥ ततोमध्यमकुंभेगायत्र्यायवव्रीहितिलमाषकंगुश्यामाकमुद्गानक्षिप्त्वा ॥ तथैवोदुंबरदुर्वारक्तोत्पलचंपकबिल्वविष्णुक्रांतातुलसीबर्हिः शंखपुष्पीशतावर्याश्वगंधानिर्गुंडीरक्तपीतसर्षप पापामार्गपलाशफनसजीवका प्रियंगुगोधूमव्रीहिअश्वत्थदधिदुग्ध घृतशतपत्रनीलोत्पलसीतरक्तपीतकरंडकगुंजावता नभद्राख्यानिद्वात्रिंशदौषधानि सर्वाणियथासंभवानिक्षिपेत् ॥ ततस्त्रिषुकलशेषुदुर्वामंत्रेणदुर्वाप्रक्षेपः ॥ कलशेषुसर्वत्रशांतिषुविवाहप्रकरणोक्तऔषधीप्रक्षेपः कार्यः ॥ औषध्यलाभेभाष्यकारोक्तयवप्रक्षेपोवा ॥ अश्व

त्येवोइतिपंचपल्लवान् ततः गंधपुष्पसौभाग्यद्रव्यफलहिरण्यसुवासोभिः तान्भूषयेत् ततस्त्रिपुधातुमयानिवावैणवमयानि वामृन्मयानिपूर्णपात्राणिनिधायतदुपरिश्वेतवस्त्रत्रयंचंदनादिनाकृताष्टदलयुक्तंन्यसेत् ॥ मध्यमेस्थापितप्रतिमायांभुवनेश्व रीमावाहयेत् ॥ ॐतत्सवितुरितिगायत्र्याभुवनेश्वंरीस्थापयामि ॥ एवंदक्षिणकलशेप्रेतंपादाथर्वेद्राण्यनुष्टुप् ॥ इंद्राणिस्था पनेविनियोगः ॥ ॐपेतंपादीमस्फुरंतंवहतंप्रणताग्रहान ॥ इंद्राण्येतुप्रथमाजीतामुशीतापुरः ॥ इंद्राणीं स्थापयामि ॥ उत्तर कलशेइंद्रमिंद्रव्रह्माथर्वाइंद्रस्त्रिष्टुप् ॥ इंद्रस्थापनेविनियोगः ॥ ॐइममिंद्रवर्द्धयक्षत्रियंमइमंविषामेकवृषंकृणुत्वं ॥ निर मित्रांनक्ष्णुह्यस्यसर्वास्तान्रंधयास्माअहमुत्तरेषु ॥ इंद्रंस्थापयामि ॥ ततस्तदस्त्वितिप्रतिष्ठाप्यसुप्रतिष्ठतमस्तु ॥ ततउक्त मंत्रैरुक्तक्रमेणवस्त्रादिदक्षिणांतैः संपूज्य ॥ अन्यथाशरणंनास्ति इतिप्रार्थनापूर्वकंनमस्कारान्कृत्वा ॥ अनयापूजया श्रीभुवनेश्वर्याद्यावाहितदेवताः प्रीयंतां ॥ इतिपूजांनिवेदयेत् ॥ ततोमध्यमकुंभेआचार्योष्टसहस्र १००८ मष्टोत्तरशतंवा १०८ गायत्रींजप्त्वातुष्टिकेतिश्रीसूक्तंपूर्वलिखितंजपेत् ॥ ततएकोऋत्विक्दक्षिणकुंभेरुद्रसूक्तंजपेत् ॥ तद्यथा ॥ ॐभवा शर्वाविदंब्रूमब्रह्मासोममानुष्टुभंरुद्रसूक्तजपेविनियोगः ॥ ॐभवाशर्वौमन्वेदांतस्यवित्तंययोर्वामिदंप्रदिशियद्विरोचंते ॥ यावस्पशाथेद्विपदोयश्चतुष्पदस्तेनोमुंचतमंहसः ॥ १ ॥ ययोरभ्यध्वऊतयेदुरेचिद्यौवि दिवि षुभृतामसिष्टौ ॥ २ ॥ सहस्राक्षौवृत्रहणाहुवेहंदूरेगव्यूतिस्तुवन्नेभ्युग्रौ ॥ ३ ॥ यावारेभाथेप्रहुसारिकमग्रेप्रचेदस्राष्टमिमांजनेषु ॥ ४ ॥ ययोर्वधांनापपद्यतेकश्चनांतर्देवेषुतपानुषेप ॥ ५ ॥ यःकृत्यातृन्मुलतूद्यातुधानोनितस्मिंनधत्तंवज्रमुग्रौ ॥ यावस्येशाथे द्विपदोयश्चतुष्पथस्तौनोमुंचतमंहसः ॥ ६ ॥ अधिनोब्रूतंब्रह्मणामुग्रौसंवत्रेणसृजतंयःकिंमिदि ॥ स्तौमिंभवाशर्वौनां थितोजोहविमितौनोमुंचतमंहसः ॥ ७ ॥ इतिरुद्रसूक्तंपठेत् ॥ अन्योऋत्विगुत्तरकुंभेएकादशावृत्तिभिर्रुद्रंजपेत् ॥ ततः कुंभपश्चिमदेशेस्थंडिलेऽग्निंविधाय ॥ अस्मिन्सग्रहमख० रजोदर्शनशांतिकर्मणिस्थंडिलेऽग्निप्रतिष्ठापनंचकरिष्ये ॥





वरदनामाग्निमुक्तमंत्रेणप्रतिष्ठाप्य ॥ तदीशान्यांवेद्यादौनवग्रहादीनतत्तन्मंत्रैरावाहयेत् ॥ विस्तृतप्रयोगस्तुग्रहयज्ञप्रकरणे प्रागुक्तः ॥ आधारावाज्यभागाभ्यातानादिपूर्वतंत्रं ॥ ततोसूर्यादीनुक्तक्रमेणसमिदाज्यचर्वाहुतिभिः भुवनेश्वरींसूर्य अष्टोत्तरशतसंख्याकाभिर्दूर्वाभि स्तिलमिश्रगोधूमाहुतिभिः पायसआहुतिभिश्चाज्याहुतिभिश्च इंद्राणिमिंद्रंप्रत्येकंअष्टा विंशत्संख्याकाभिर्दूर्वादिचतुर्विधाहुतिभिः छित्रादिवहुतरदोषेअष्टोत्तर सहस्रहोमोभुवनेश्वर्यास्तदाविंद्रेंद्राण्योः प्रत्येकं अष्टोत्तरशतहोमः ॥ इंद्रेंद्राण्योर्होमः कृताकृतः ॥ अकृतपक्षेस्थापनपूर्वकंपूजन मेवहोमस्तुनकार्यः ॥ प्रतिदैवतंसर्वत्र त्यागः ॥ स्थापितदेवतानांपूजनपूर्वकंदिक्पालेभ्योबलिदानं ॥ पूर्णाहुतिस्तुपूर्ववत् ॥ अभ्यात्तानाद्युत्तरतंत्रं ॥ अथा भिषेकः ॥ सपत्निकंयजमानंसर्त्विगुदङ्मुखआचार्यः स्थापितकलशचतुष्कात् पात्रांतरेजलंकृत्वा पंचपल्लवदूर्वाकुशादि भिरभिषेकंकुर्यात् ॥ आपोहिष्ठेतिनवऋग्भिः ॥ उषतीः कन्यलाइमाःपितृलोकात्पतिं यतीः ॥ अवदीक्षामसृक्षतस्वाहा ॥ २ ॥ बृहस्पतिनावसृष्टांविश्वेदेवाअधारयन ॥ वर्चोगोषुप्रविष्टंयत्तेनेमांसंसृजामसि ॥ ३ ॥ बृहस्पतिनावसृष्टांविश्वे देवाअधारयन ॥ तेजोगोषुप्रविष्टंयत्तेनेमांसंसृजामसि ॥ ४ ॥ बृहस्पतिनावसृष्टांविश्वेदेवाअधारयन् ॥ भगोगोषु प्रविष्टोयस्तेनेमांसंसृजामसि ॥ ५ ॥ बृहस्पतिनावसृष्टांविश्वेदेवाअधारयन् ॥ यशोगोषुप्रविष्टंयत्तेनेमांसंसृजामसि ॥ ६ ॥ बृहस्पतिनावसृष्टांविश्वेदेवाअधारयन् ॥ पयोगोषुप्रविष्टंयत्तेनेमांसंसृजामसि ॥ ७ ॥ बृहस्पतिनावसृष्टांविश्वे देवाअधारयन् ॥ रसोगोषुप्रविष्टोयस्तेनेमांसंसृजामसि ॥ ८ ॥ यदिमेकेशिनोजनागृहेतेसमनर्तिषुरोदेनकृण्वंत्योऽघं ॥ अग्निष्ट्वातस्मादेनसः सविताचप्रमुंचताम् ॥ ९ ॥ यदीयंदुहितातवविकेश्यरुदद्गृहे रोदनेनकृण्वइत्याऽघं अग्निष्ट्वातस्मा देनसः सविताचप्रमुंचताम् ॥ १० ॥ अक्षीभ्यामित्यथर्वाब्रह्मात्रिष्टुप्वरुणसूक्तजपेविनियोगः ॐअक्षीभ्यांतेनासि काभ्यांकर्णाभ्यांछुबुकादधि ॥ यक्ष्मंशीर्षण्यंमस्तिष्कांजिह्वायाविवृहामिते ॥ १ ॥ ग्रीवाभ्यस्तउष्णिहाभ्यः कीक

साभ्याः अनूक्यात्॥ यक्ष्मन्दोषण्यं१इमंसाभ्यांबाहुभ्यांविवृंहामिते ॥ २ ॥ हृदयात्तेपरिक्लोम्नोहलीक्ष्णात्पार्श्वाभ्यां ॥ यक्ष्मंमतस्नाभ्यांप्लीहोयन्कस्तेविवृंहामसि ॥ ३ ॥ आत्रेभ्यस्तेगुदाभ्योवनिष्ठोरुदरादधि॥ यक्ष्मंकुक्षीभ्यांप्लाशेनाभ्या विवृंहामिते ॥ ४ ॥ ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णीभ्यांप्रपदाभ्यां ॥ यक्ष्मंभसद्यं१श्रोणिभ्यांनासंदंभंससोविवृंहामिते ॥ ५ ॥ अस्थिभ्यस्तेमज्जभ्यः स्नावभ्योधमनिभ्यः ॥ यक्ष्मंपाणिभ्यामंगुलीभ्योनखेभ्योविवृंहामिते ॥ ६ ॥ अंगेअंगे लोम्निलोम्नीयस्तेपर्वणिपर्वणि ॥ यक्ष्मेंत्वचस्यंतवयंकश्यपस्यविवर्हेणविश्वंचंविवृंहामसि ॥ ७ ॥ अथपापहाविष्णु सूक्तम् ॥ ॐव्यांत्यापवमानोविशक्तः पापकृत्तया ॥ व्यं१हंसर्वेणपाप्मनावियक्ष्मेणसमायुषा ॥ १ ॥ विग्राम्याः पशव आरण्यैर्व्यापः स्तृष्टयासरन् ॥ व्यं१हंसर्वेणपाप्मनावियक्ष्मेणसमायुषा ॥ २ ॥ वो३मेद्यावापृथिवीइतोविपंथानोदिशं दिशं ॥ व्यं१हंसर्वेणपा० ॥ ३ ॥ त्वष्टादुहित्रेवहतुंयुनक्तीतीदंविश्वंभुवनंवियाति ॥ व्यं१हंसर्वेणपाप्मना० ॥ ४ ॥ अग्निः प्राणान्संदधातिचंद्रः प्राणोनसंहितः ॥ व्यं१हंसर्वेणपाप्मना० ॥ ५ ॥ प्राणोनंविश्वतोवीर्यंदेवाः सूर्यसमैरयन ॥ व्यं१हंसर्वेणपाप्मना० ॥ ६ ॥ आयुष्मतामायुष्कृतांप्राणेनजीवमामृथाः ॥ व्यं१हंसर्वेणपाप्मना० ॥७॥ प्राणेनप्राणतां प्राणेहैवभवमामृथाः व्यं१सर्वेणपाप्मना० ॥ ८ ॥ उदायुषासमायुषोदोषधीनांरसेन ॥ व्यं१हंसर्वेणपाप्मना० ॥ ९ ॥ अपर्जन्यस्यपृष्टयोदस्थामामृतावयं ॥ व्यं१हंसर्वेणपाप्मना० ॥ १० ॥ ततः पूर्वोक्तवरुणसूक्तसूर्यसूक्तेयथाविधि वियोगादिपठेत् ॥ सुरास्त्वामभिशिंचंतु ब्रह्माविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्च भवंतुविजयायते ॥ आखंडलोग्निर्भगवान् यमोवैनिर्ऋतिस्तथा ॥ २ ॥ वरणः पवनश्चैवधना ध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताः सर्वेदिक्पालाः पांतुपेसदा ॥ ३ ॥ कीर्तिर्लक्ष्मीधृतिर्मेधापुष्टिः श्रद्धाक्रि यामतिः ॥ बुद्धिर्लज्जावपुः शांतिकांतिस्तुष्टिश्चमातरः ॥ ४ ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यः समागताः ॥









आदित्यश्चंद्रमाभौमोबुधोजीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिशिंचंतुराहुः केतुश्चतर्पिताः ॥ देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयोमुनयोगावो देवमातरएवच ॥ देवदैत्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ ७ ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्ना निकालस्यावयवाश्चये ॥ ८ ॥ सरितः सागराश्चैवतीर्थानिजलदानव ॥ एतेस्त्वामभिसिंचंतुसर्वकामार्थसिद्धये ॥ ९ ॥ ततः ग्रहाणामादिरादित्योलोकरक्षण कारकः ॥ विषमस्थानसंभूतांपीडांदहतुतेरविः ॥ १ ॥ रोहिणीशः सुधामूर्तिअत्रिपुत्रः सुधाशनः ॥ विषमस्थानसं भूतांपीडांदहतुतेविधुः ॥ २ ॥ भूमिपुत्रोमहातेजाजगतांभयकृत्सदा ॥ वृष्टिकृद्वृष्टिहर्त्ताचपीडांदहतुतेकुजः ॥ ३ ॥ उत्पातरूपोजगतांचंद्रपुत्रोमहाद्युतिः । सूर्यप्रियकरोविद्वान्पीडांदहतुतेबुधः ॥ ४ ॥ देवमंत्रीविशालाक्षोसदालोकहि तेरतः ॥ अनेकशिष्यसंपूर्णः पीडांदहतुतेगुरुः ॥५॥ दैत्यमंत्रीगुरुस्तेषांप्राणदश्चमहाद्युतिः॥ प्रभुस्ताराग्रहाणांचपीडांद हतुतेभृगुः ॥ ६ ॥ सूर्यपुत्रोदीर्घदेहोविशालाक्षः शिवप्रियः ॥ मंदचारः प्रसन्नात्मापीडांदहतुतेशनिः ॥ ७ ॥ महा शनोमहावक्त्रोदीर्घदंष्ट्रोमहाबलः ॥ अतनुश्चोर्ध्वकेशश्चपीडांदहतुतेतमः ॥ ८ ॥ अनेकरूपवर्णैश्चशतशोथसहस्रशः ॥ उत्पातरूपोजगतांपीडांदहतुतेशिखी ॥ ९ ॥ ततः कलशोदकेनान्येनच जलेनतैलाभ्यंगसर्वौषध्यनुलेपनपूर्वकं सुस्नातौ दंपतीतैजसपात्रस्थ तैलेरूपमितिप्रतिबिंबमालोक्य॥ अभिशेककालीनवाससीपरित्यज्यअहत शुक्लवाससीपरिधायश्वेत चंदनपुष्पधारणंकुर्यात् ॥ त्यक्तवासांस्याचार्यस्य ॥ अग्नेः पश्चादुपविश्यदक्षिणतः पत्नीं ॥ ततोविभूतिधारणंकृत्वा ततोभुवनेश्वर्यादीनांउत्तरपूजनं कृत्वाविसर्जनंकुर्यात् ॥ ततः यजमानोआचार्यादीनांश्रेयोग्रहणंकुर्यात् ॥ वरणक्रमेण ऋत्विजउदङ्मुखयजमानहस्तेश्रेयः संपादनंकुयुः॥ अथवासर्वेऋत्विजः आचार्यद्वाराश्रेयोदानंकुर्युः॥ तद्यथा॥ सग्रहमख रजोदर्शनशांत्याख्येकर्मणि यजमानाज्ञयामयाएभिर्ब्राह्मणैः सहयत्कृतंआचार्यत्वंब्रह्मत्वादितदुत्पन्नश्रेयोदानंकरिष्ये ॥ यजमानः श्रेयोंगीकरणंकरिष्यइति ॥ शिवाआपः संतुसतुशिवाआपः॥ इतिप्रतिवचनं ॥ सौमनस्यमस्तुइतिपुष्पाणि ॥ अस्तुसौमनस्यम् ॥ अक्षतंचारिष्टंचास्तुइत्यक्षताः ॥ अस्त्वक्षतमरिष्टंच ॥ यत्पापमशुभंअकल्याणंतदूरेप्रतिहतमस्तु ॥

भवन्नियोगेनमयाअस्मिन्सग्रहमख रजोदर्शनशांत्याख्येकर्मणि यत्कृतमाचार्यत्वंतथाचएभिर्ब्राह्मणैः सहैयतोहामः तथा चयत्कृतोजपः तथाचयत्कृतंब्रह्मत्वं ,॥ आंचार्यत्वात्ब्रह्मत्वाद्धोमाज्जपात्यदुत्पंन्नं श्रेयस्तस्तुभ्यमहंसंप्रददे ॥ तेनश्रेय सात्वंश्रेयोवान्भव ॥ भवामीतितेनवाच्यं ॥ निर्मूलमिदंश्रेयः संपादनंतथापियजमानमनः प्रसन्नतायैउक्तं ॥ वस्तुतस्तु विद्वद्भिरुपेक्ष्यमिदंनिर्मूलत्वात् ॥ ततः आचार्यादीनांचरणक्षालनगंधाक्षत पुष्पवस्त्रालंकाादिभिः संपूज्यकृतस्यसनव ग्रहमखरजोदर्शनशांतिकर्मणः सांगतासिध्यर्थंआचार्याय धेनुप्रतिनिधिभूतं यथाशक्तिद्रव्यंदातुमहमुत्सृजे ॥ रुद्रजापिने सदक्षिणंकृष्णमनड्वाहंदातुमहमुत्सृजे ॥ ऋत्विग्भ्योयथाशक्ति यथाविभागंदक्षिणांदातुमहमुत्सृजे ॥ अथमूर्त्तिदानं ॥ इमांसोपस्करांभुवनेश्वरीप्रतिमांग्रह पीठंचतुभ्यमहंसंप्रददेइत्याचार्यहस्तेप्रतिपादयेत् ततोग्निंविसृज्य ॥ गच्छगच्छसुरश्रेष्ठ स्वस्थानंपरमेश्वर ॥ यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥ अर्चितोसिमयादेवशक्त्याश्रीयज्ञपूरुष ॥ अथगच्छमिहस्थान मिहत्वंलौकिकोभवेतिविसृजेत् ॥ ततः महाशांतिंपठेत् ॥ कृतस्यसनवग्रहमखरजोदर्शनशांतिकर्मणः सांगतासिध्यर्थं भुवनेश्वरीद्राणींद्रप्रीत्यर्थंग्रहप्रीत्यर्थं चप्रत्येकंत्रीनस्त्रीनब्राह्मणान्भोजयेत् ॥ नानागोत्रेभ्योब्राह्मणेभ्यः भूयसींदक्षिणां दातुमहमुत्सृजे ॥ मयायत्कृतंसग्रहमखरजोदर्शन शांत्याख्यंकर्मतत्कालहीनंभक्तिहीनंश्रद्धाहीनं ब्राह्मणानांवचनात् श्रीभुवनेश्वरीप्रसादात्तत्सर्वंपरिपूर्णममस्त्विनिभवंतोब्रुवंतु ॥ ॐअस्तुपरिपूर्णं ॥ यस्मात्कोशेतिमंत्रजपः ॥ अनेनसग्रह मखरजोदर्शनशांत्याख्येनकर्मणाश्रीभगवान्यज्ञरूपीपरमेश्वरः प्रीयतांनमम ॥ ततः विप्राशिषोगृहीत्वासुहृद्भिः समं भुंजीतेति ॥ एवंकृतेसर्वारिष्टशांतिर्भवतीति ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोग भानौषट्पन्नागरद्विवेदिरविशंकर कृतेशौनकोक्ताशयोद्घाटितसनिर्णयर्तुशांतिप्रयोगरश्मिस्त्रयोविंशः ॥ २३ ॥

अथसर्वसाधारणशांत्युपयोगिकर्मकर्त्तव्यक्रमः ॥ संकल्पस्वस्तिवाक्विप्रवरणंभूतिनिः सृतिः ॥ पंचगव्यैर्भूमि शुद्धिर्मुख्यदैवतपूजनं ॥ अग्निप्रतिष्ठासूर्यादिग्रहस्थापनपूजनं ॥ यथाक्रमंत्यागहोमाविति पूर्वांगकक्रामात् ॥ उत्तरांगं पुनः पूजाबलिपूर्णाहुतितथा ॥ श्रेयः ग्रहोदक्षिणादिदानंकर्मेश्वरार्पणम् ॥ अभिषेकश्चसर्वत्रचेतिशांतिक्रमः शुभः ॥





अथचंद्रसूर्योपरागकालेप्रथमरजोदर्शनशांतिर्विधिरयउच्यते ॥ शांतिरत्नेशौनकः ॥ ग्रहणेचंद्रसूर्यस्यप्रसूतिर्यदिजायते ॥ व्याधिपीडातदास्त्रीणामादौतुर्ऋतुदर्शनात् इत्थंसंजायतेयस्यतस्यमृत्युर्नसंशयः व्याधिपीडाचदारिद्र्यंशोकश्चकलहोभ वेत् ॥ शांतिस्तेषांप्रवक्ष्याभिनरीणांहितकाम्यया ॥ अत्रशिष्टमूलवाक्यानिशांतिरत्नेज्ञेयानि ॥ ॥ अथप्रयोगः ॥ सूर्यग्रहणेरजोदर्शने हेमनिर्मितनक्षत्राधीशप्रतिमां सूर्यप्रतिमांचकृत्वा ॥ ततः राहोः सीसेननागाकृतिंकृत्वाशुभदिने शांतिंकुर्यात् ॥ चंद्रग्रहेराजतचंद्रबिंबंकुर्यात् ॥ अन्यद्द्रव्यंपूर्ववत् ॥ कर्त्तासभार्योदेशकालौसंकीर्त्य ॥ ममपत्न्याः सूर्यो परागेप्रथमरजोदर्शन सूचितारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशौनकोक्तांशांतिंकरिष्ये ॥ चंद्रग्राहेतुमम पत्न्याः चंद्रोपरागेप्रथमरजोदर्शन सूचितारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थंसग्रहमखां शांतिंकरिष्ये ॥ अत्रग्रह मखस्यानवश्यकत्वमितिकेचित् ॥ तत्रादौतिर्विघ्नतासिध्यर्थं महागणपतिपूजनपूर्वकंस्वस्तिपुण्याह वाचनंनांदिश्राद्धं शांतिकलशकरणंआचार्यादिवरणंच करिष्येइतिसंकल्प्य ब्रह्मजज्ञानंअव्ययसश्चेत्यादिपठित्वाएतानि यथाविधिकृत्वा ॥ ततः वृताचार्यः सर्षपविकीरणादिप्रार्थनांतंविधायः ततः शुचिदेशेगोमयोपलीप्तभूमौपंचवर्ण रजोभिरष्टदलंविरच्य तदुपरिनवंश्वेतवस्त्रमुदग्दिशंसंस्थाप्यतत्र यथाशक्तिपूर्वनिर्मितहेमप्रतिमायां विषासहिमितिमंत्रेण सूर्यमावाह्यतदुत्तरेसीस निर्मितराहुप्रतिमां ॥ दिव्यंचित्रंकौशिकोराहुस्त्रिष्टुप् राहुस्थापनेविनियोगः ॥ दिव्यंचित्रमितिमंत्रेणराहुंस्थापयामि ॥ तदुत्तरेयन्नक्षत्रग्रहणंतत्तन्नक्षत्रदेवताप्रतिमांयथाशक्तिस्वर्णनिर्मितांतत्तन्मंत्रैनाममंत्रैर्वाआवाह्य॥ नक्षत्रसूक्तेननक्षत्रस्थापनं॥ चित्राणिसाकंइतिनक्षत्रसूक्तंग्रहयज्ञेज्ञेयं ॥ नक्षत्रदेवतानामानितु ॥ अश्विनौ० ॥ यमः ॥ अग्निः ॥ प्रजापतिः॥ सोमः रुद्रः॥ अदितिः॥ बृहस्पतिः ॥ सर्पाः ॥ पितरः ॥ भगः ॥ अर्यमाः ॥ सविता त्वष्टा ॥ वायुः ॥ इंद्राग्निः मित्रः॥ इंद्रः ॥ निर्ऋतिः ॥ अपः ॥ विश्वेदेवाः ॥ विधिः ॥ विष्णुः ॥ वसवः ॥ वरुणः ॥ अजैकपात् ॥ अहिबुध्न्यः पुरुषः ॥ इत्याष्टाविंशतिनक्षदेवतानामानि ॥ एवंदेवतात्रयमावाह्यस्थापनमंत्रैः षोडशोपचारैः संपूज्य ॥ पूजाकालेचंद्रंश्वेतवस्त्रादि गंधमाल्यैः पूजयेत् ॥ सूर्यंरक्तचंदनपुष्पादिभिः ॥ राहुंकृष्णवर्णवस्त्रकस्तूरिलेपन कृष्णपुष्पैश्चसंपूजयेदिति ॥ नक्षत्र

वतानांयथोक्तविधिनाश्वेतचंदनादिना पूजनंकार्यम् ॥ ततोग्निंसंस्थाप्यग्रहस्थापनंचकृत्वा ॥ आघारावाज्यभागाभ्याज्या
नादिपूर्वतंत्रंकृत्वासूर्यमष्टोत्तरशतसंख्याकाभिः॥ राहुंअष्टाविंशतिसंख्याकाभिः ॥ नक्षत्रदेवतांअष्टाविंशतिसंख्याकाभिः ॥
चरुघृततिलसमिधानियथाक्रमंहुत्वा ॥ एवंचंद्रग्रहेपि ॥ चंद्रमष्टोत्तरशतसंख्याकाभिः ॥ शेषंपूर्ववत् ॥ एवंहुत्वायजमाने
नत्यागः उदपात्रेसंपातश्चकार्यः ॥ तत्रायंक्रमः ॥ ॐविषासहिंसहमानंसासहानंसहीयांसं ॥ सहमानंसहोजितंस्वर्जितं
गो[illegible]संधनाजितं ॥ इड्यंनामह्वइंद्रमायुष्मान्भूयासं ॥ १ ॥ विषासहिंसहमानंसासहानंसहीयांसं ॥ सहमानंसहो
जितंस्वर्जितंगोजितंसंधनाजितं ॥ इड्यंनामह्वइंद्रंप्रियोदेवानांभूयासं ॥ २ ॥ विषासहिंसहमानंसासहानंसहीयांसं ॥
सहमानंसहोजितंस्वर्जितंगोजितंसंधनाजितं॥ इड्यंनामह्वइंद्रंप्रियः प्रजानांभूयासं॥३॥ विषासहिंसहमानंसासहानंसही
यासं ॥ सहमानंसहोजितंस्वर्जितंगोजितंसंधनाजितं॥ इड्यंनामह्वइंद्रंप्रियः पशुनांभूयासं ॥ ४ ॥ विषासहिंसहमानं
सासहानंसहीयांसं ॥ सहमानंसहोजितंस्वर्जितंगोजितंसंधनाजितम् ॥ इड्यंनामह्वइंद्रंप्रियः संभानानांभूयासम् ॥ ५ ॥
उदिह्युदिहिसूर्यवर्चसामाभ्युदिहि ॥ द्विषंश्चमह्यंरध्यतुमाचाहंद्विषतेरधंतवेद्विष्णोवहुधावीर्याणि ॥ त्वन्नःपृणीहिपशुभि
र्विश्वरूपैः सुधायांमाधेहिपरमेव्योमन ॥ ६ ॥ उदिह्युदिहिसूर्यवर्चसामाभ्युदिहि ॥ यांश्चपश्यामियांश्चनतेषुमासुमतिं
कृधितवेद्विष्णोवहुधावीर्याणि ॥ त्वन्नः पृणिहिपशुभिर्विश्वरूपैः सुधायांमाधेहिपरमेव्योमन् ॥ ७ ॥ मात्वांदभन्सलिले
अप्स्वं१तर्येपाशिनंउपतिष्ठंत्यत्र ॥ हित्वाशस्तिंदिवमारुक्षएतांसनोमृडसुमतौतेस्यामतवेद्विष्णोवहुधावीर्याणि ॥ त्वन्नः
पृणीहिपशुभिर्विश्वरूपैः सुधायांमाधेहिपरमेव्योमन् ॥ ८ ॥ त्वन्नइंद्रमहतेसौभगायदब्धेभिः परिपाह्यक्तुभिस्तवे
द्विष्णोवहुधावीर्याणि॥ त्वन्नःपृणीहिपशुभिर्विश्वरूपैः सुधायांमाधेहिपरमेव्योमन ॥ ९ ॥ त्वन्नइंद्रोतिभिः शिवाभिः









शंतमोभव ॥ आरोहंस्त्रिदिवंदिवोगृणानः ॥ सोमपीतयेप्रियधामास्वस्तयेतवेद्विष्णोवहुधावीर्याणित्वन्नः पृणीहिपशुभि
र्विश्वरूपैः सुधायांमाधेहिपरमेव्योमन् ॥ १० ॥ स्वाहेतिप्रतिऋचंवाच्यं ॥ ॐदिव्यंचित्रमृतूनायाकल्पयंतमृतूनामुग्रंभ्र
मंतुदेतितदादित्यः प्रतरंनेतुआपइमांल्लोकाननुसंचरंति ॥ ओषधीभिः संविदानाविंद्राग्नीत्वाभिरक्षतां ॥ ऋतेनसत्य
वाकेनतेनसर्वंतमोजह्यादित्यायस्वाहेति ॥ इतिमंत्रेणराहुंजुहुयात् ॥ इतिऋतुमत्याशिरसिसंपातान्दत्वा ॥ अभ्याज्या
नादिपूर्ववदुत्तरतंत्रंसमाप्यपूर्वोक्तरीत्या पूर्णाहुतिंकृत्वाब्राह्मणैश्चाभिषेकः कर्त्तव्यः ॥ शांताद्यौरितिशांतिसूक्तं पठित्वा
ब्राह्मणभोजनसंकल्पः ॥यस्मात्कोशेतिकृतंकर्मेश्वरार्पणंकुर्यादिति ॥ ॥ अथचंद्रग्रहणकालेऋतुप्राप्तौविशेषः ॥ राहु
राजानंस्वरति स्वरतिस्वरंतमेनमिहहंतिपूर्वः॥ सहस्रमस्यतन्वइहानात्याशतं तन्वोविनश्यतुचंद्राय स्वाहेतिहुत्वाशकधूमं
नक्षत्राणीत्यंतेनसूक्तेनजुहुयात्सातत्रप्रायश्चित्तिः ॥ इतिचंद्रग्रहणेविशेषःअन्यत्सर्वंपूर्ववदिति ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोग
भानौपट्पन्नागरद्विवेदिरविशंकरकृते सूर्यचंद्रोपरागकालेप्रथम रजोदर्शनशांतिक्रमप्रयोगरश्मिश्चतुर्विंशः ॥ २४ ॥

श्रीकृष्णायनमः ॥ श्री ॥ अथगर्भाधानम् ॥ तदुपयोगिप्रसंगात्किंचिच्छास्त्रार्थोनिर्णीयते ॥ प्राक्रजोदर्शना
त्पत्नीगमनेब्रह्महत्यादोषोक्तेः ॥ किंचित्प्राजापत्यंविधेयमितिभाति ॥ यत्रोक्तंयत्रवानोक्तंप्राजापत्यमुदीरयेदिति
वचनात् ॥ अत्यंताशक्तेनप्राजापत्यात्मकं प्रायश्चितंकार्यंनतन्न्यूनं ॥ देशकालावुच्चार्यममप्राक् रजोदर्शनात्पत्नीगमन
जनितब्रह्महत्यादिदोषपरिहारार्थमेकंप्राजात्यात्मकं प्रायश्चितंतत्प्रत्याम्नायेनगोनिष्क्रयभूतं यथासंभवद्रव्यदानेनाहमा
चरिष्येतिसंकल्प्य ॥ तद्रव्यंब्राह्मणायदत्वा ॥ ऋतौतुगमनमावश्यकं ॥ अन्यथाभ्रूणहत्यासंभवदोषः ॥ अयंचमनसि
कामेसति ॥ द्वेषादिनास्त्रियमनुपगच्छताज्ञेयः ॥ विरक्तस्यनकोपिदोषइति ॥ श्रीमद्भागवतेलोकेव्यवायेतिस्पष्टंकृतं ॥
ऋतुकालस्तुरजोदर्शन दिनमारभ्यषोडशदिनपर्यंतंज्ञेयः ॥ तत्रप्रथमदिनचतुष्टयैकादश त्रयोदशदिनेषुगमनंवर्ज्यं ॥
अवसिष्टदशदिनेषु पुत्रार्थिनासमदिनेकन्यार्थिना विषमदिनेगमनंकार्यं ॥ तत्राप्युत्तरोत्तररात्रीणांप्राशस्त्यं ॥ एकस्यां

रात्रौसकृदेवगमनंकार्यं ॥ सकृद्गमनंचयुग्मासुसार्वासुआवश्यकमितिकेचित् ॥ अन्यकालेप्रतिबंधादिनागमनासंभवेश्राद्धे
कादश्यादिदिनेपिऋतुगमनं कार्यमितिकेचित् ॥ स्त्रीणांवरमनुस्मरन पत्नीछयानृतावपिगछन्नदोषभाक् ॥ किंतुब्रह्म
चर्यहानिमात्रं ॥ ऋतौगछतियोभार्यामनृतौनैवगछति ॥ यावज्जीवंब्रह्मचारिमुनिभिः परिकीर्त्तितः ॥ अष्टमीचतुर्दशीपौ
र्णिमामावास्यासूर्यसंक्रांतिवैधृतव्यतिपातपरिघपरिघपूर्वदलंविष्टि संध्यासुमातापित्रोर्मृतदिनेश्राद्धतत्प्राक् दिनेजन्मनक्षत्रे
दिवाचस्त्रीगमनंवर्ज्यम् ॥ अथगर्भाधानकालः ॥चतुर्थीषष्ठीचतुर्दश्यष्टमी पंचदशीरहितास्तिथयः प्रशस्ताः ॥ चंद्रगुरुबुध
शुक्रवाराःशुभाः ॥ मूलमघारेवतीज्येष्टादिनि ऋक्षाणिवर्ज्यानि ॥ भरणीकृत्तिकाद्रार्श्लेषापूर्वात्रयवि शाखामध्यमानि ॥
शेषाणिशुभानि ॥ सर्वकर्मसुचंद्रबलंग्राह्यं ॥ चंद्रान्नप्रधानंसौख्यंरोगंकार्यंश्रियंक्षितिं ॥ स्त्रियंमृत्युंनृपभयंसुखमायुंव्यक्र
मात् ॥ स्छानेषुद्वादशस्वैतज्जन्मराशेः प्रयछति ॥ शुक्रपक्षेशशिश्रेष्टोद्विपंचनवमेष्वपि ॥ अनेकभार्यस्यऋतुयौगपद्ये
विवाहक्रमेणऋतुक्रमेणवागर्भाधानं ॥ऋतावप्यगमनदोषपवादः ॥ व्याधितोबंधनस्थोवाप्रवासेष्वथपर्वसुः वृद्धांवंध्याम
सद्वृत्तांमृतापत्यामपुष्पिणीं ॥ कन्यासुबहुपुत्राश्चअगछन्नैवदोषभाक् ॥ गर्भाधानस्यकर्त्ताभर्तैवनान्यः ॥ अयंगृह्याग्नौकार्य
इतिमुख्यःपक्षः ॥ तदभावेलौकिकाग्नावेवहोमःकार्यः ॥ येषांसूत्रेहोमोनोक्तस्तैर्होमवर्ज्यमंत्रपाठादिरूपःगर्भाधानसंस्कारः
कार्यः प्रथमगमनेइतिनिर्णयः ॥ ॥ अथगर्भाधानप्रयोगः ॥ दंपत्योः प्रातरभ्यंगंकृत्वामंगलवस्त्राभरणादि
धृत्वाजीवास्थेतिमंत्रेणविधिवदाचम्य ब्रह्मजज्ञानंअव्यसश्चेतिपठित्वा देशकालौस्मृत्वा ॥ ममभार्यायाः प्रतिगर्भ
संस्कारातिशयद्वाराऽस्यांजनिष्यमाण सर्वगर्भाणांबीजगर्भ समुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थंगर्भाधानाख्यं
कर्मकरिष्ये ॥ तत्रादौगणपत्यंबिकयोः पूजनपूर्वकंस्वस्तिपुण्याहवाचनंकृत्वा ॥ पुण्याहांतेपूर्वोक्तप्रकारेणाग्निंसंस्थाप्य
मारुतनामानमग्निंसंपूज्य ॥ आगमकृशरंचरुद्वयंश्रपयित्वाऽभ्यात्तानादि पूर्वतंत्रंकृत्वा ॥ पर्वतादिवेतिसूक्तेनप्रथमचरौ
संपातानदद्यात् ॥ तद्यथा ॥ पर्वतादिवेतित्रयोदशर्चस्यसूक्तस्याथर्वाधाताइंद्रादिदेवताः त्रिष्टुपादिछंदांसिचरुसंपाताज्य
होमेविनियोगः ॥ ॐपर्वतादिवोयोनेरंगादंगासमाभृतम् ॥ शेपोगर्भस्यरेतोधासरौपर्णमिवादधत्स्वाहा ॥ प्रजापतयइदंन









मम ॥ १ ॥ यथेयंपृथिवीमहिभूतानांगर्भमादधे ॥ एवादधामितेगर्भंतस्मैत्वामवसेहुवेस्वाहा ॥ २ ॥ गर्भंधेहिसिनी
वालीगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनोभाधत्तांपुष्करस्रजास्वाहा ॥ ३ ॥ गर्भंतेमित्रावरुणौगर्भंदेवोबृहस्पतिः ॥
गर्भंतइंद्रश्चाग्निश्चगर्भंधातादधातुतेस्वाहा ॥ ४ ॥ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु ॥ आसिंचतुप्रजातिर्धाता
गर्भंदधातुतेस्वाहा ॥ ५ ॥ यद्वेदराजावरुणोयद्वादेवीसरस्वति ॥ यदिंद्रोवृत्रहावेदतद्गर्भकरणंपिबत्स्वाहा ॥ ६ ॥
गर्भोअस्योषधीनांगर्भोवनस्पतीनां ॥ गर्भोविश्वस्यभूतस्यसोअग्नेगर्भमेहधाः स्वाहा ॥ ७ ॥ अधिस्कंदवीडयस्व
गर्भमाधेहियोन्यां ॥ वृषासिवृष्ट्यावान्प्रजायैत्वानयामसिस्वाहा ॥८॥ विजिहीष्वबार्हत्सामेगर्भस्तेयोनिमाशयाम् ॥
अदुष्टेदेवाः पुत्रंसोमपाउभयाविनंस्वाहा ॥९॥ धातश्रेष्ठेनरूपेणास्यानार्यागवीन्योः ॥ पुमांसंपुत्रमाधेहिदशमेमासिसूतवे
स्वाहा ॥ १० ॥ त्वष्टः श्रेष्ठेनरूपेणास्यानार्यागवीन्योः ॥ पुमांसंपुत्रमाधेहिदशमेमासिसूतयेस्वाहा ॥ ११ ॥ इदंधात्रे
नमम ॥ सवितः श्रेष्ठेनरूपेणास्यानार्याः गवीन्योः ॥ पुमांसंपुत्रमाधेहिदशमेमासिसूतयेस्वाहा ॥ इदंधात्रे० ॥ १२ ॥
प्रजापतेश्रेष्ठेनरूपेणास्यानार्याः गवीन्योः ॥ पुमांसंपुत्रमाधेहिदशमेमासिसूतयेस्वाहा ॥ इदंधात्रेनमम ॥ १३ ॥ इति
सूक्तेनसंपात्यद्वितीयाहुत्या तेनैवसूक्तेनाभिमंत्र्यततोतृतीया हुत्याद्वितीयंचरुंयुगछीद्रेणपुनस्ते नैवसूक्तेनसंपात्यपुनस्ते
नैवाभिमंत्र्यपर्वतादिवेतिसूक्तेनप्रत्यृचंभार्यायैप्राशयेत् ॥ ततोभ्यात्तानाद्युत्तरतंत्रंसमाप्य ॥ अस्यगर्भाधानाख्यकर्मणः
सांगतासिध्यर्थंइदंगोदानंनिष्क्रयद्रव्यंआचार्यायतुभ्यम० ॥ अस्यकर्मणः [illegible]यथोत्साहाभूयसींनानागोत्रेभ्यो
ब्राह्मणेभ्यः० ॥ अस्यकर्मणः सांगतासिध्यर्थंयथाशक्तिस्मृत्युक्तान्ब्राह्मणान्भोजयिष्ये ततः शांताद्यौरितिशांतिसूक्तं
जपेत् ॥ एवंदिवसकर्मपरिसमाप्यततःरात्रौवक्षमाणंकर्मकुर्यात् ॥ केलूनांपलाशंखदिरघृष्ट्यानिघृष्ट्यपर्वतादिवेतिसूक्तेनाभि
मंत्र्यशिश्नेसंलिप्यमैथुनंकुर्यात् ॥ सिक्तेरेतसिस्त्रीमुखेभूर्भुवः स्वर्जनदो[illegible]निश्वासंमुमुचेत् ॥ ऋतौगमनेतु

प्रयोग
१२०

स्नानंअनृतातुस्नानाभावः ॥ अनृतौतुयदागलेच्छौचंमूत्रपुरीषवदिसूक्तेः ॥ इतिगर्भाधानविषयोयंसूत्रोक्तएकः पक्षः ॥
अथचद्वितीयपक्षमाश्रित्यगर्भाधानमुच्यते ॥ ॥ गणपतिपूजनाद्यारभ्यात्तानादिपूर्वतंत्रस्तुपूर्ववत् ॥ अभ्यात्तानांते
मधुमंथेशमिमश्वत्थेतिसूक्तेनाग्निनिक्षिप्य ॥ तद्यथा ॥ शमीमश्वत्थेतिषर्डचसूक्तस्याथर्वाप्रजापतिरनुष्टुप् ॥ मधुमंथेऽग्नि
निक्षेपणेविनियोगः ॥ ॐशमीमंश्वत्थाआरूढस्तत्रपुंसवनंकृतं ॥ तद्वैपुत्रस्यवेदनंतत्स्त्रीष्वाभरामसि ॥ १ ॥ पुंसिवैरेतो
भवतितत्स्त्रीयामानुषिच्यते ॥ तद्वैपुत्रस्यवेदनंतत्प्रजापतिरब्रवीत ॥ २ ॥ प्रजापतिरनुमतिसिनीवाल्यचीक्लृपत् ॥
स्त्रैषूयमन्यत्रदधत्पुमांसमुदधदिह ॥ ३ ॥ परिद्यामिवम्) हस्तावर्त्तकंकणादिकंयंतासीति सूक्तनसंपात्याभिमंत्र्य
बध्नाति ॥ तद्यथा ॥ यंतासोतिसूक्तस्याथर्वालिंगोक्तादेवता त्रिष्टुवादिनिच्छंदांसिगर्भाधानकर्मणि हस्तकंकणसंपाताज्य
होमेविनियोगः ॥ ॐयंतासियच्छसेहस्तावपरक्षांसिसेधसि ॥ प्रजांजनंवगृह्णनः परिहस्तोअभूदयं ॥ १ ॥
परिहस्त विधारययोनिंगर्भ.यधातवे ॥ मर्यादेः पुत्रमाधेहित्वंतमागमयागमे ॥ २ ॥ यंपरिहस्तमविभरदितिः
पुत्रकाम्या ॥ त्वष्टातमस्याआबध्नायथापुत्रंजनादिति ॥ ३ ॥ आगछंतआगतस्यनामगृह्णाम्यागतः ॥ इंद्रस्यवृत्रघ्नोवन्वे
वासवस्यशतक्रतोः ॥ ४ ॥ येनसूर्यांसावित्रिमश्विनोहतुः पथा ॥ तेनमामब्रवीद्भगोजायामावहतादिति ॥ ५ ॥ यस्ते
कुशोवसुदानोबृहन्निंद्रहिरण्ययः ॥ तेनाजनियतेजायांमह्यंवे.हिशचिपतेस्वाहा ॥ ६ ॥ इंद्रायनममेतित्यागः संपातश्च
भार्यायाहस्तकंकणेपुनस्तेनैवसूक्तेनकंकणमभिमंत्र्यबंधयेत् अभ्यात्तानाद्युत्तरतंत्रस्तुपूर्ववत् ॥ पूर्वोक्तंरात्रिकर्मापितद्वत् ॥
यस्मात्कोशे.तिकर्मसमापनं ॥ शांताद्यौरितिसूक्तपाठः ॥ कृतंकर्मेश्वरार्पणंकुर्यादिति ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोग
भानौषट्पन्नागरद्विवेदिर.विशंकरकृतेगर्भाधानसंस्कारा प्रयोगरश्मिपंचविंशः ॥ २५ ॥

भानु

अथर्व

वेद
१२०

प्रयोग
१२१

॥ अथपुंसवनप्रयोगरश्मिप्रारंभः ॥ तच्चव्यक्तेगर्भेद्वितीये तृतीयेमासिचतुर्थे षष्ठेऽष्टमेवामासिसीमंतेनवा
सहकार्यम् ॥ शुक्लपंचम्यारभ्यकृष्णपंचमीपर्यंतं चतुर्दशीचतुर्थीनवमी पंचदशीवर्जितेतिथौसूर्यभौमगुरुवासरेषुप्रसिद्धं ॥
केचिच्चंद्रबुधशुक्रवाराःकथ्यंते ॥ नक्षत्राणितुपुंनामकानिप्रशस्तानीतिकथ्यंते ॥ पुष्यश्रवणहस्तपुनर्वसुमृगाभिजित्
मूलानुराधाश्विनीति ॥ अत्रपुष्योमुख्यः तदभावेश्रवणंतदभावेहस्तादि ॥ गर्भाधानसीमंतोन्नयनेतुस्त्रीसंस्काराः प्रति
गर्भनावर्त्तते ॥ किंतुप्रथमगर्भेएवकार्याः ॥ प्रथमगर्भालाभेतुप्रतिगर्भेतेषांप्रायश्चित्तमावश्यकम् ॥ नचप्रथमापत्येतयोः
प्रायश्चित्तेनद्वितीयादिगर्भाणांसंस्कारसिद्धिर्भवति ॥ प्रायश्चित्तेनपरिहारमात्रंनत्वपूर्वाख्यातिशयोत्पादनं ॥ ततुसंस्कार
विधिनैवेतियुक्तंप्रतिगर्भंप्रायश्चित्तं ॥ प्रतिसंस्कारंपादकृच्छ्रंबुद्धिकृतलोपेद्विगुणम् ॥ पुंसवनेप्रतिरेवकर्त्तानान्यइति ॥
अथप्रयोगः ॥ अथज्योतिर्विदुपदिष्टेसुमुहूर्त्ते कृतनित्याक्रियोयजमानः श्रीपर्ण्यादिप्रशस्तदारुमयेपीठेसपत्नीकः प्राङ्
मुखोपवीश्यजीवास्थेति मंत्रेणविधिवदाचम्यब्रह्मजज्ञानंअव्यसश्चेतिपठीत्वा विघ्नत्यंतंसंकृत्यंविधायदेशकालौसंकीर्त्य
ममास्याःभार्यायाः प्रतिगर्भबीजसमुद्भवैनोनिवर्हणद्वारा प्रतिगर्भसंस्कारार्थं क्षेत्रशुध्यर्थंचपुंसवनाख्यं कर्माहंकरिष्ये
इतिसंकल्पः ॥ ततः गणेशांबिकयोःपूजनंमातृपूजानांदी श्राद्धस्वस्तिपुण्याहवाचनांतंकर्मकृत्वा ॥ ॥ अव्यसश्चेतिवेद्या
मग्निंसंस्थाप्याभ्यात्तानादिपूर्वतंत्रंकृत्वा ॥ रजउद्रासायाभार्यायाःशरमणिंसंपात्याभिमंत्र्यबंधयेत् ॥ तद्यथा ॥ येनवेह
दितिसूक्तस्याथर्वाब्रह्मात्रिष्टुप्शरमणिसंपाताज्यहोमेविनियोगः॥ ॐयेनवेहद्बभूविथनाशयामसितत्वत ॥ इदंतदन्यत्रत्व
दपदुपनिदध्मसि ॥ १ ॥ आतेयोनिंगर्भएतुपुमान्बाणइवेषुधिं ॥ आविरोत्रजायतांपुत्रस्तेदशमास्यः ॥ २ ॥ पुमांसं
पुत्रंजनयंतपुमाननुजायंतां ॥ भवासिपुत्राणां माताजातानाजनयाश्चयां ॥३॥ यानिभद्राणिबीजान्यृषभाजनयंतिच ॥
तैस्त्वंपुत्रंविंदस्वसाप्रसूर्धेनुकाभव ॥ ४ ॥ कृणोमितेप्राजापत्यमायोनिंगर्भएतुते ॥ विंदस्वत्वं पुत्रंनारीयस्तुभ्यंशमस
च्छमुतस्मैत्वंभव ॥ ५ ॥ यासांद्यौःपितापृथिवीमातासमुद्रामूलंवीरुधांबभूव ॥ नास्त्वापुत्रविद्यायदेवाःप्रावंत्वोषधयः

भानु

अथर्व

वेद
१२१

॥ ६ ॥ इतिसंपात्यपुनस्तेनैवसूक्तेनाभिमंत्र्यभार्यायाशिरसिबंधयेत् ॥ अभ्यात्तांनाद्युत्तर तंत्रंसमाप्य ॥ आचार्यायगां दत्वा ॥ अन्येभ्यःभूयसींदद्यात् ॥ स्मृत्युक्तान्ब्राह्मणान्भोजयेत् ॥ यस्मात्कोशेति कर्मसमापनीयंमंत्रंजप्त्वाकृतंकर्मेश्वरार्पणंकुर्यात् ॥ कर्मसमाप्तौशांताघौरिशांतिसूक्तंजपेत् ॥ इत्येकंपुंसवनम् ॥ अथवागणपतिपूजनादि पुण्याहांतंकर्मकृत्वा येनवेहदितिसूक्तेनकेवलं बाणमभिमंत्र्यस्त्रीमूर्द्धिन् बंधयेन्नात्राग्नि स्थापनादिकर्मभवतीति द्वितीयंपुंसवनं ॥ अथतृतीयं पुंसवनं ॥ तत्रगणपत्यंबिकांपूजनादि पुण्याहांतपुर्ववत्कृत्वा ॥ फाल्गुनमसेसरूपवत्सायादुग्धं निक्षिप्यतत्रव्रीहियवा वधायमूर्छयित्वा तत्राध्यांडावृहतीवापलाशविदारीयेनवेहदिति सूक्तेनपिष्ट्वांपुनस्तेनैवसूक्तेनाभि मंत्र्यभर्त्तास्वदक्षणांगुष्टेनभार्याया दक्षिणस्यांनासिकायांतेनैवसूक्तेननिषिंचेत् ॥ नात्राग्निस्थापनादि ॥ शेषंपूर्ववत् ॥ इतितृतीयंपुंसवनं ॥ अथचतुर्थंपुंसवनम् ॥ गणपत्यंबिकापूजनादिसर्वंपूर्ववत् ॥ मधुमंथे अग्निंनिक्षिप्यशमिमश्वत्थेतिसूक्तेनाभिमंत्र्यभार्यायै भर्त्तापाययतियद्वास्त्री ॥ शमीमश्वत्थेतिषडर्चस्सूक्तस्याथर्वाप्रजापतिरनुष्टुप् पुंसवनमधुमंथपानेविनियोगः ॥ ॐशमीमश्वत्थ आरूढस्तत्रपुंसवनंकृतं । तद्वैपुत्रस्यवेदनंतत् स्त्रीष्वाभरामसि ॥ १ ॥ पुंसिवैरेतोभवति तत्स्त्रियामनुषिच्यते ॥ तद्वैपुत्रस्यवेदनं तत्प्रजापतिरब्रवीत् ॥ २ ॥ प्रजापतिरनुमतिसिनीवाल्यचीकॢपत् ॥ स्त्रैषूयमन्यत्रदधत्पुमांसमुदधदिह ॥ ३ ॥ परिद्याभिवसूर्योहिनांजनिमागमं ॥ रात्रिजगदिवान्यद्धंसातेनातेवारयेविषं ॥ ४ ॥ यद्ब्रह्मभिर्यदृषिभिर्यद्देवैर्विदितंपुरा ॥ यद्भूतंभव्यमासन्वतेनातेवारयेविषं ॥ ५ ॥ मध्वोपृंचेनद्यः१पर्वतागिरयोमधु ॥ मधुपरुष्णीशीपालाशमास्तेअस्तुशंहृदे ॥ ६ ॥ इत्यभीमंत्र्यपाययेत्तेनैवसूक्तेन ॥ नात्राग्निस्थापनादिकंकर्मशेषंपूर्ववत् ॥ इतिचतुर्थं पुंसवनं ॥ अथपंचमंपुंसवनं ॥ गणेशांबिकयोःपूजनादिसर्वंपूर्ववत् ॥ अव्यसश्चेत्यग्निंप्रतिष्ठाप्य ॥ शमीगर्भाश्वत्थस्य अग्निंकृष्णोरणयावेष्टयोत्वा पूर्वोक्तेनशमीमश्वत्थेतिसूक्तेनसंपातान्दत्वा पुनस्तेनैवाभिमंत्र्यभर्त्ताभार्यायाः कंठेबंधयेत्॥ अभ्यात्तानाद्युत्तरतंत्रंसमाप्यसर्वंपूर्ववत् ॥ इतिपंचमपुंसवनं ॥ अत्रपक्षपंचकानांपुसवनानांकरणेफलाधिक्यंसकृत्करणे









संस्कारमात्रंनतुफलाधिक्यं ॥ इदंपक्षपंचकं पुंसवनंकर्मसग्रहमस्वंकार्यंदुष्टस्थानस्थित सूर्यादिग्रहजनितपोडोपशांतये लोकाचाराश्चेति ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागर द्विवेदिरविशंकरकृतेपुंसवनपंचकसंस्कारप्रयोग रश्मिःषड्विंशः ॥ २६ ॥

॥ अथगर्भरक्षणप्रयोगरश्मिः ॥ तत्रादौकृतनित्यक्रियोयजमानो श्रीपर्ण्यादिप्रशस्तदारुमयेपीठेउपविश्य जीवास्थेतिविधिवदाचम्यत्यमूषुइति स्वस्त्ययनसूक्तेनमंगलतिलकादिकंकृत्वा शांतयेब्रह्मजज्ञानंअव्यसश्चेतिपठित्वा ॥ सुमुखश्चेत्पादि प्रयोगंपठित्वा देशकालौसंकीर्त्यममास्याभार्या याउदरस्थगर्भरक्षणार्थं कर्माहंकरिष्ये इतिसंकल्पः ॥ गणेशांबिकयोःपूजनादिपुण्याहवाचनांतं कर्मकृत्वा अव्यश्चेत्पारभ्याग्नि प्रतिष्ठापनांतंचकृत्वाऽभ्यात्तानादि पूर्वतंत्रं विधाय ॥ ततःधनुर्ज्यांत्रि रुद्रंजुह्वयब्रह्माग्रेसंस्थाप्य ऋधङ्मंत्रेत्यंगिराब्रह्मानुष्टुप् गर्भरक्षणकर्मणि धनुर्ज्यासंपाताज्य होमेविनियोगः ॥ ऋधङ्मंत्रः ॥ अष्टोत्तरसहस्रंवाष्टोत्तरशतं वाष्टाविंशतिअष्टौवासंपात्याभिमंत्र्यते नैवमंत्रेणबंधयेत् ॥ अभ्यात्तानाद्युत्तरतंत्रंसमाप्य ॥ आचार्यायगां ॥ अन्येभ्योब्राह्मणेभ्यो भूयसींयथाशक्ति ॥ स्मृत्युक्तान्ब्राह्मणान् भोजयेत् ॥ व्रतेभ्योब्राह्मणेभ्योयथाविधि दक्षणांदत्वायस्मात्कोशेति कर्मसमापनीयमंत्रंजप्त्वा शांताघौरितिशांतिसूक्तं पठित्वाकृतंकर्मेश्वरार्पणंकुर्यादिति ॥ इत्येकंगर्भरक्षणम् ॥ अथद्वितीयंगर्भरक्षणं ॥ गणपत्यंबिकापूजनसंकल्पादिसर्वं पूर्ववत् ॥ पूर्ववदग्निंसंस्थाप्य ॥ धनुर्ज्यांत्रिरुद्रंध्यब्रह्माग्रेसंस्थाप्य ॥ यथेयंपृथिवीतिचतुर्चसूक्तस्यब्रह्मापृथिव्यनुष्टुप्॥ धनुर्ज्यासपाताज्यहोमेविनियोगः ॥ ॐयथेयंपृथिवीमहिदाधारेमान्वनस्पतीन् ॥ एवातेध्रीयतां गर्भोअनुसूतुंसवितये ॥ १ ॥ यथेयंपृथिवीमहिदाधारपर्वतान्गिरीन् ॥ एवातेध्रीयतांगर्भोअनुसूतुंसवितये ॥ २ ॥ स्वाहा ॥ पृथिव्यैइदंन ममयथेयंपृथिवीमहिदाधारविष्ठितंजगत् ॥ एवातेध्रीयतां० ॥ स्वाहाइदंपृथिव्यै ॥ ३ ॥ ययंपृथिवीमहिभूतानांगर्भमादधे ॥ एवातेध्रियतांगर्भोअनुसूतुंसवितयेस्वाहा ॥ पृथिव्यैइदंनमम ॥ ४ ॥ इतिसूक्तं ॥ तथाचअच्युताघौरेतिसूक्तेन

संपात्याभ्यांसूक्ताभ्यामभिमंत्र्यकट्यांबंधयेत् ॥ अभ्यात्तानाद्युत्तरतंत्रस्तुपूर्वस्तुपूर्ववत् ॥ इतिद्वितीयंगर्भरक्षणं ॥ अथ
तृतीयं ॥ संकल्पादिपुण्याहांतंसर्वंपूर्ववत् ॥ ऋधङ्मंत्रेतिएकाऋक् ॥ यथेयंपृथिवीतिसूक्त० ॥ अच्युताद्यौरितिसूक्तं० ॥
एतैःक्षेत्रलोष्टमृत्तिकामभिमंत्र्यगर्भिणींप्राशयेत्प्रत्यृचं ॥ शेषंपूर्ववत् ॥ नात्राग्निस्थापनंकार्यं ॥ इतितृतीयंगर्भरक्षणंकर्म ॥
अथचतुर्थं ॥ संकल्पादिपुण्याहांतंसर्वंपूर्ववत्कृत्वा ॥ ऋधङ्मंत्रमित्येकयर्चा१कृष्णसिकतामभिमंत्र्य गर्भिण्याःशयनं
परितिरतिभर्त्ता ॥ अन्यत्सर्वंपूर्ववत् ॥ इतीचतुर्थंगर्भरक्षं ॥ अथपंचमं ॥ संकल्पादिकंपूर्ववत् ॥ पूर्वोक्ताभ्यांयथेयं
पृथिवी अच्युताद्यौरितिसूक्ताभ्यांश्यामसिकतामभिमंत्र्यगर्भिण्याःशयने प्रत्यृचंपरिकरति ॥ इतरत्सर्वंपूर्ववत् ॥ एषु
सर्वेषुगर्भाधानादिसंस्कारेषु पुण्याहहोमोकर्त्तव्यः ॥ तदग्रेसीमंतप्रकरणेवक्ष्यामः ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोग
भानौषट्पत्रागरद्विवेदिरविशंकरकृतेगर्भरक्षणपंचकप्रयोगरश्मिःसप्तविंशः ॥ २७ ॥ श्रीरस्तु ॥

॥ अथवीरकर्मप्रयोगरश्मिः ॥ कृतनित्यक्रियोयजमानःकृत स्वस्त्ययनतिलकोआचांत आसनेउपविश्य
सुमुखश्चेदितिमनत्यंतंविधाय ॥ हस्तेजलमादायममास्यां भार्यायाजनिष्यमाणगर्भस्यवीर्यत्वादिप्राप्तये वीरकर्माहं
करिष्येइतिसंकल्प गणपतिस्मरणं ॥ अत्रगणपतिपूजनादि नांदिश्राद्धांतंकर्म कृताकृतं ॥ ततोभार्याया उदरं अभिमृशति
भर्त्ता ॥ धाताद्धातित्विति नतस्राभिर्मंत्रैर्गर्भिण्या उदराभिमर्शनंकुर्यात् ॥ अनेनकर्मणाब्राह्मणक्षत्रियवैश्यशूद्राणांपुत्राः
स्वधर्मबलवीर्यादियुक्ताभवंतीतिभाष्यात् ॥ यस्मात्कोशेतिकृतंकर्मेश्वरार्पणंकुर्यात् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोग
भानौरविशंकरकृतेवीरकर्मप्रयोगरश्मिरष्टाविंशः ॥ २८ ॥

॥ अथप्रजननकर्मप्रयोगः ॥ संकल्पादिकंसर्वंपूर्ववत् ॥ प्रजापतिर्जनयत्वितिसूक्तेनप्रजाकामायाःस्त्रियउत्संगे
आज्यंजुहोतिभर्त्ता ॥ अन्येपक्षास्तुभाष्येद्रष्टव्याः ॥ शेषंपूर्ववत् ॥ कृतंकर्मेश्वरार्पणंकुर्यादिति ॥ ॥ इतिश्रीमदथर्वगृह्य
सूत्रप्रयोगभानौरविशंकरकृतेप्रजननकर्मप्रयोगरश्मिरेकोनत्रिंशः ॥ २९ ॥





॥ श्रीगणेशायनमः ॥ अथसीमंतोन्नयनं ॥ तत्रकालः ॥ तच्चगर्भधारणदिनादारभ्यसावनेसौरेवासप्तमेमासि
पुंनक्षत्रयुक्तेचंद्रतारानुकूलेशुभेऽह्निकुर्यादिति ॥ तदुक्तंमूहूर्त्तचिंतामणौ ॥ जीवार्कारदिनेमृगेज्यनिहृतिचित्रादितिबुध्नभै
रिक्तामार्करसाष्टवर्ज्यतिथिभिमासाधिपेपीवरे ॥ सीमंतोषष्ठमष्ठमासिशुभदैकेंद्रत्रिकोणेखिलेलाभारित्रिषुवाध्रुवात्यसदहे
लग्नेचपुंभांशके ॥ १ ॥ मासेश्वरासितकुजेज्यरवींदुसौरी चंद्रात्मजास्तनुपचंद्रदिवाकरास्युः ॥ स्त्रीणांविधोर्बलमुशंति
विवाहगर्भसंस्कारयोरितरकर्मसुभर्त्तुरेव ॥ २ ॥ पूर्वोदितैःपुंसवनंविधेयं मासेतृतीयेत्वथविष्णुपूजा ॥ मासेष्टमेविष्णु
विधात्रजीवैलग्नेशुभेमृत्युगृहेचशुभ्रे ॥ ३ ॥ ग्रंथांतरेपि ॥ मार्त्तंडः ॥ पुंभेर्केज्यारवारेविमिथुनविशमांगाशयापुंसवंस्यात्
सीमंतास्यंसत्सुव्यय१२सुनग्रहयोपर्वरिक्तेनतिथ्यां ॥ मासेद्वित्रिप्रसंख्येप्रथमकमपरंतूर्य४षष्टाष्टमेषुप्रोक्तंपुंगर्भलग्नंग्र६बल
मुनयोयोज्यमाद्यश्चपक्षः ॥ ॥ अगथर्भधारणात्सौरेसावनेवासप्तमेमासिचंद्रतारानुकूलेपुंनक्षत्रे ज्योतिर्विदुपदिष्टेशुभेह्नि
स्वयंनित्यक्रियोनिवर्त्य वैश्वदेवंविधाय मंडपप्रतिष्ठादिग्रहयज्ञांतंकृत्वा श्रीपर्ण्यादिप्रशस्तदारुमयेपीठे प्राङ्मुखउपविश्य
स्वदक्षिणतमांगल्यद्रव्यैःसुस्नातांपरिहिताहतवसनां सालंकृतांभार्याचोपवेश्याचम्यसुमुखश्चेत्यादिविमनत्यंतंकृत्वासंकल्प
येत् ॥ देशकालौस्मृत्वा ममास्यांभार्यायांजनिष्यमाण सर्वगर्भाणांतनुरुधिरप्रियराक्षसी गणदूरनिरसनक्षम सकल
सौभाग्यनिदानभूतमहालक्ष्मो समावेशद्वारा प्रतिगर्भबीजगर्भसमुद्भवैनोनिबर्हणद्वाराचक्षेत्र शुध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं
सीमंतोन्नयनाख्यं कर्माहंकरिष्येइतिसंकल्प्य ॥ सग्रहमखेत्यूहःकार्यः ॥ गणेशांबिकयोःपूजनादिसर्वंपूर्ववत् ॥ ततः
स्वयंभर्त्तावाआचार्यःअग्निस्थापनादिपूर्वतंत्रंकृत्वा मंगलनामानमग्निंसंपूज्य अभ्यात्तानानिहुत्वा ॥ येनवेहदितिसूक्त
स्याथर्वाब्रह्मात्रिष्टुप् सीमंतिन्याभार्यायासिरशिबाणबंधनेनिनियोगः ॥ ॐयेनवेहदितिसूक्तं ॥ अनेनाभिमंत्रितंबाणं
सीमंतिन्यामूर्ध्निबंधयेत् ॥ ततोब्रह्माग्रेश्वेतपीतसर्षपानसंस्थाप्य ॥ तथाचअन्यस्मिन्पात्रेलिबुजवृक्षयोःशकलौतगरांजन
कुष्टांतरालपूरितौकृत्वासंस्थाप्य ॥ स्वस्त्ययनहोमंकृत्वासंपातानदध्यान् ॥ तद्यथा ॥ यौतेमातेतिसूक्तस्यांगिराथर्वेंद्रोऽनुष्टू
सीमंतप्रधानश्वेतपीतसर्षपलिबुजशकलसंपाताज्यहोमेविनियोगः ॥ ॐयौतेमातोन्ममार्जजातायाःपतिवेदनौ ॥ दुर्णा-

मातत्रमागृधदलिंश उतवत्सपःस्वाहा मात्रनाम्नेइदंनममेतिसर्वत्रत्यागः ॥ १॥ संपातश्च ॥ पलालातुपलालौशर्कुकोकं
मलिम्लुचंपलीजकं ॥ आश्रेषंवत्रिवासमक्षग्रींवप्रमीलिनम् ॥ २ ॥ स्वाहांमात्रनाम्ने० ॥ मासंवृतोमोपसृपउरूमावं
सृपोतन्रा॥ कृणोम्यस्मैभेषजंबजंदूर्णामचातनं ॥ ३ ॥ स्वाहामात्रनाम्ने० ॥ दुर्णामांवसुनामांचोभासंवृतमिछतः ॥
अरायानपहन्मःसुनामास्त्रैणमिछताम् ॥ ४ ॥ स्वहामात्रनाम्ने० यःकृष्णकेश्यसुरस्तंवजउततुंडिकः ॥ अरायानस्या
मुष्काभ्थांभससोपहन्महि ॥ ५ ॥ स्वाहामात्रनाम्ने०॥ अनुजिघ्रंपृमृशंतक्रव्यादमुत्तरे रिहं ॥ अरायान्वाकिष्किणोबजः
पिंगोअंनीनशत् ॥ ६ ॥ स्वाहामात्रनाम्ने ॥ स्यवास्वप्नेनिपद्यंतेभ्रातांभूत्बापितेवच ॥ वजस्ताअंहितामितः क्लीव
रूपांस्तिरिटिनः ॥ ७ ॥ स्वाहामात्रनाम्ने० ॥ यस्त्वांखपंतितत्सरंतियस्त्वादिप्संतिजाग्रंतीम् ॥ छायामि वप्रतात्सूर्यः
परिक्रामंननीनशत् ॥ ८ ॥ स्वाहामात्रनाम्ने०॥ यःकृष्णोतिमृतवत्साःमवंतोकामिमास्त्रियं ॥ तमोषधेत्वन्नांशयास्वा
कमलंमंजिवं ॥ ९ ॥ स्वाहामात्रनाम्ने० ॥ येशालाःपरिनृत्यंतिसायंगंर्धभनादिनाः ॥ कुसुलायेचकुक्षिलाःकुंकुभःकुरु
मास्त्रिमाः ॥ ननोषधेत्वंगंधेनविशूचीनाविनाशय ॥ १० ॥ स्वाहामात्रनाम्ने इदंनमम ॥ एवंसंपात्यपुनस्तेनैवसूक्ते
नाभिमंत्र्यभार्यायैबंधयेत् ॥ ततोतगरादिकंस्त्रियवृक्षत्वकूसराखंडं तगरंअंजनंकुष्ठंजेष्टिमधुएतानि द्रव्याण्याज्यमध्येपेष
यित्वा यथेदंभूम्याइतिसूक्तेनाभिमंत्र्य अंगंसमालभेत् ॥ ततःपूर्वोक्तद्रव्याणिलिबुजवृक्षखंडंचआज्वेनालोडय ॥ यथावृक्ष
लिबुजस्यांगिराथर्वानुष्टुप्प्रलेपनेविनियोगः॥ तथाचकलकाभिमंत्रणेविनियोगः॥ ॐयथावृक्षंलिबुजासमंतंपरिसष्वजे॥
एवापरिष्वजस्वमांयथामांकामिन्यसोयथामन्न.पगाअसः ॥१ ॥ यथासुपर्णःप्रपतन्पक्षौनिहंतिभूम्यां ॥ एवानिहन्मिते
मनोयथामांकामिंन्यसोयथामन्नापगाअसः ॥ २ ॥ यथेमेद्यावांपृथिवीसद्यःपर्येतिसूर्यः ॥ एवापर्येमितेमनोयथा० ॥३॥







तथाचत्वांछामइतिसूक्तं०॥ इतिद्वाभ्यांसूक्ताभ्यांअभिमंत्र्यलिंपयेत् ॥ ततोआचारात्उदुंबरफलादिरचितामालांकठेआरो
पयेत् ॥ ततोश्वतरीयमूत्रमस्तखंडाभ्यांसंघर्ष्य ॥ ॐअग्नेजातान्प्रणुदामेसपत्नात्प्रत्यजातान्जातवेदोनुदस्व ॥ अधस्पदं
कृणुष्वयेप्रतन्यवोनांगसस्तेवयमदितयेस्याम इतिमंत्रेणसीमंतंअभ्युक्ष्य ततोभर्त्तातृष्टिकेति पूर्वोक्तसूक्तेनभार्यायासीमंतं
आचारात्रिशलल्याउन्नयेदिति ॥ ततोभार्यायाउदराभिमर्शनंकुर्यात् ॥ ॐयदुदरंवरुणस्यानुप्रविषयावशे ॥ ततस्त्वा
ब्रह्मोदंकयत्सहिनेत्रमबेत्तवं ॥१॥ सर्वेगर्भादवेपंतजायमानादसूखः ॥ ससूवहितामाहुर्वशेतिब्रह्मभिः क्लृप्तःसह्यस्याबंधुः
॥ २ ॥ इतिमंत्रद्वयेनगर्भिण्याउदरमभिमृशेत् ॥ ततः अभ्युत्तानाद्युत्तरतंत्रंपरिसमाप्य ॥ आचाराल्लौकिकाच्चयत्प्राप्तं
तत्सर्वंकुर्यात् ॥ ततोभोजनसंकल्पंविधाय आचार्यायगांदत्वा ब्राह्मणेभ्योभूयसींदत्वा अद्येत्युत्तरंसंकल्पंविधाय ॥ शांता
द्यौरितिशांतिसूक्तंजप्त्वा ॥ तिलकंचाशिर्वादः ॥ यस्मात्कोशेतिकृतं कर्मेश्वरार्पणंकुर्यादिति ॥ ॥ इतीश्रीमदथर्वगृह्य
सूत्रप्रयोगभानौषट्पन्नागर द्विवेदिरविशंकरकृते सीमंतोन्नयनाख्यकर्मप्रयोगरश्मिस्त्रिंशः ॥ ३० ॥

॥ अथसर्वकर्मोपयोगित्वात् भाष्योक्तस्वस्ययनहोमः ॥ जीवास्थेत्याचम्यप्राणानायम्येतिकृतनित्यक्रियो
यजमानःब्रह्मजज्ञानंअव्यसश्चेतिपठित्वा देशकालौसंकीर्त्य शांतिकपौष्टिकनित्यनैमित्तिककाम्यकर्मसुतथातथोहकार्यः॥
॥ तद्यथा ॥ असुककर्मणेस्वस्ययनहोमंकरिष्यइतिसंकल्प ॥ फलतांबुलानिविप्रहस्तेदत्वायजमानः पृछतिकिमद्याह
इतितथाचतेब्रूयुः ॥ शोभनमद्याहःमंगलमद्याहइति ॥ ततोपाकयज्ञविधानेनअग्निस्थापनादि पूर्वतंत्रंकृत्वा ब्रह्माग्रेशांत
वृक्षस्यचतुरस्रमणिसंस्छाप्य ॥ तदुक्तंभाष्ये ॥ चतुरस्रोमणिप्रोक्तोअंगुष्टपर्वमात्रकः ॥ सूत्रेप्रोत्यचसपात्यबध्यः पुण्याह
वाचने ॥ १ ॥ शक्रधूमेतिचतसृणांमंत्राणांब्रह्मात्रिष्टुप् पुण्याहबाचनप्रधानचतुरस्रमणि संपाताज्यहोमेविनियोगः ॥
ॐशक्रधूमंनक्षत्राणियद्राजानमकुर्वत ॥ भद्राहमस्मैप्रायंछन्निदंराष्ट्रमसादिति ॥ १ ॥ भद्राहंन्नोमध्यंदिनेभद्राहंसाय

मंस्तुनः ॥ भद्राहन्नोअह्नां प्रातारात्रींभद्राहमस्तुनः ॥ २ ॥ अहोरात्राभ्यांनक्षत्रेभ्यः सूर्याचंद्रमसांभ्यां ॥ भद्राहमस्मभ्यं राजन्छकधूमत्वंकृधि ॥ ३ ॥ योनोभद्राहमकरःसायंनक्तमथोदिवा ॥ तस्मैतेनक्षत्रराजशकधूमसदानमः ॥ ४ ॥ स्वाहाइदंसूर्यचंद्रमोभ्यांनममेतिप्रत्यृचंत्यागः चतुरस्रमणौसंपातश्च ॥ भवाशर्वौइतिसूक्तं० ॥ शर्वायनममेतित्यागः संपातश्च ॥ ततयेस्यांस्थेतिसूक्तस्याथमंत्रोक्तादित्रिष्टुबादिछंदांसिपुण्याह वाचनप्रधानचतुरस्रमणि संपाताज्यहोमेविनियोगः ॥ ॐये१स्यांस्थप्राच्यांदिशिहेतयोनामदेवास्तेषांवोअग्निरिषवः ॥ तेनोमृडततेनोधि ब्रूततेभ्योवोनमस्तेभ्योवः स्वाहा ॥ १ ॥ ये१स्यांस्थदक्षिणायांदिश्यविष्यवोनामदेवातेषांवःकामइषवः ॥ तेनोमृडतनोधिब्रूततेभ्योवोनमस्ते भ्योवःस्वाहा ॥ २ ॥ ये१स्यांस्थप्रतीच्यांदिशिवैराजानामदेवास्तेषांवआपइषवः ॥ तेनोमृडततेनोधि ब्रूततेभ्योवो नमस्तेभ्योवःस्वाहा ॥ ३ ॥ ये१स्यांस्थोदीच्यांदिशिप्रविध्यंतोनामदेवास्तेषांवोवातइषवः ॥ तेनोमृडततेनोधि ब्रूत तेभ्योवोनमस्तेभ्योवःस्वाहा ॥ ४ ॥ ये१स्यांस्थध्रुवायांदिशिनिलिंपानामदेवास्तेषावओषधीरिषवः ॥ तेनोमृडतते नोधि ब्रूततेभ्योवोनमस्तेभ्योवःस्वाहा ॥ ५ ॥ ये१स्यांस्थोर्ध्वायांदिश्यवस्वंतोनामदेवास्तेषांवोबृहस्पतिरिषवः ॥ तेनोमृडततेमोधि ब्रूततेभ्योवोनमस्तेभ्योवःस्वाहा ॥ ६ ॥ स्वाहाइदंमंत्रोक्तनानादेवताभ्योनममेतित्यागः चतुरस्रमणौ संपातश्च ॥ ततःअभ्यात्तानाद्युत्तरतंत्रपरिसमाप्य ॥ चतुरस्रमणिंबंधयेत् ॥ तद्यथा ॥ आयमगन्निति अष्टर्चसूक्तस्याथर्वा ब्रह्मात्रिष्टुप्पर्णमणिबंधेविनियोगः ॥ ॐआयमगन्पर्णमणिर्बलीबलेनंप्रमृणन्सपत्नान ॥ ओजोदेवानांपयओषधीनांवर्च सामाजिन्वत्वप्रयावान् ॥ १ ॥ मयिक्षत्रंपर्णमणेमयिधारयतांद्रयिं ॥ अहंराष्ट्रस्याभीवर्गेनिजोभूयासमुत्तमः ॥ २ ॥ यन्निंदधुर्वनस्पतौ गुह्यंदेवाःप्रियंमणिं ॥ तमस्मभ्यंसहायुषादेवादंदतुभर्तवे ॥ ३ ॥ सोमस्यपर्णःसहउग्रमागदिंद्रेणदत्तो









वरुणेन शिष्टः ॥ तंप्रियासंबहुरोचमानोदीर्घायुत्वायशतशारदाय ॥ ४ ॥ आमारुक्षत्पर्णमणिर्मह्या अरिष्टतातये ॥ यथाह मुत्तरोसान्यर्यम्णउत संविदः ॥ ५ ॥ यधीवानोरथकाराःकर्मारायेमनीषिणः ॥ उपस्तीन्पर्णमह्यंत्वं सर्वान्कृण्वभितो जनान् ॥ ६ ॥ येराजानोराजकृतःसूताग्रामण्यश्चये ॥ उपस्तीन्पर्णमह्यंत्वंसर्वान्कृण्वभितोजनान् ॥ ७ ॥ यःपर्णोसितनूपानः सयोनिवीरोवीरेणमया ॥ संवत्सरस्यतेजसातेनबध्नामित्वामणे ॥ ८ ॥ इतिसूक्तंपठित्वामणिबंधनंकुर्यात् ॥ ततःकृत तिलकःविप्राशिषोगृहीत्वा ब्राह्मणायपलंपक्वंद्वंवासुवर्णंदद्यात् अनेनश्रीकर्मांगदेवताःप्रीयंतांनमम ॥ आचार्यायगां अन्येभ्योब्राह्मणेभ्योयथाशक्तिभूयसीदद्यात् ब्राह्मणभोजनसंकल्पः ॥ यस्मात्कोशेतिकर्मसमापनीयमंत्रंजप्त्वा शांता द्यौरिति शांतिसूक्तंपठित्वा कृतंकर्मेश्वरार्पणंकुर्यादिति ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौवटपत्रनागर द्विवेदि रविशंकरकृतेस्वस्त्ययनहोमप्रयोगरश्मिःरेकत्रिंशः ॥ ३१ ॥

॥ अथसूतकप्रायश्चित्तरश्मिः ॥ ॥ अथयदिदैवान्मानुषाद्वास्वस्वकालेऽननुष्ठितानि गर्भाधानादीनिसोमंतेन सहवाकार्याणि ॥ गर्भाधानस्यप्रायश्चित्तं ॥ तदुक्तं ॥ गर्भाधानस्याकरणात्तस्यांजातस्तुदुष्यति ॥ अकृत्वागांद्विजेदत्वा कुर्यात्पुंसवनंपतिरिति ॥ अन्येतु ॥ आरभ्याधानमाचौलात्कालेऽतीतेतुकर्मणां ॥ व्याहृत्याज्यंतुसंस्कृत्यहुत्वाकर्मयथा क्रममिति ॥ शौनकवचनात् ॥ अतीतानिकर्माणीकार्याणीत्याहुः ॥ तत्रसंकल्पोयथा ॥ देशकालौसंकीर्त्यममास्याभार्याया गर्भाधानाकरणजनितप्रत्यवायापनोदार्थंइमांगां अथवातन्निष्क्रयभूतंद्रव्यं ब्राह्मणायतुभ्यमहंसंप्रददेतेन गर्भाधाना करणप्रत्यवायपरिहारोस्तु ॥ अशक्तौत्रीनष्टवाप्रतिसंस्कारब्राह्मणभोजनसंकल्पइतिरघुनाथः ॥ ममास्याभार्यायाः गर्भाधानादिसंस्कारकालातिक्रमजनितप्रत्यवाय परिहारार्थंप्रायश्चित्तमहंकरिष्ये ॥ अग्निस्थापनं ॥ व्याहृतिहोमः ॥ अयाश्चाग्ने० प्रजंस्वाहा ॥ इतिजुहुयात् ॥ कात्यायनोपि ॥ कालातिक्रमेनियतवदितिव्याख्यातं ॥ गर्भाधानादिनियत कालानांकर्मणांनियतकालव्यतिक्रमेसतिप्रायश्चित्तं नियतवदितिगदाधरभाष्येप्युक्तं ॥ अतीतानांकर्मणांप्रायश्चित्तेकृते

पुनःकरणमकरणंवेतिपक्षद्वयं ॥ तत्रोभयपक्षेपिहोमकृच्छ्रयोः समुच्चयार्थइतिवह्वचः ॥ रघुनाथस्तुपुनःकरणपक्षेहोममात्रम्॥ अकरणपक्षेद्वैकृच्छ्रमित्याह ॥ ॥ इतिश्रीमदथर्ववेदगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकरकृतेकालातिक्रांतप्रायश्चित्तनिर्णयरश्मिर्द्वात्रिंशः ॥ ३२ ॥

॥ अथजननोत्तरंसीमंतकरणेविशेषः ॥ यद्वादैवान्मानुषाद्वाऽकृतेसीमंतोनयनेप्रसवोभवेत्तदाजातकर्मनकार्यं ॥ ततएकादशेऽह्निकालातिक्रांतनिमित्तं महाव्याहृतिहोमात्मकंप्रायश्चित्तंकृत्वा मातुरुत्संगेबालकंस्थापयित्वा सीमंतोन्नयन जातकर्म नामकर्म कुर्यात् ॥ ॥ इतिश्रीमदथर्ववेदगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकरकृते जननोत्तरंसीमंतोन्नयनकरणनिर्णयरश्मिस्त्रयस्त्रिंशः ॥ ३३ ॥

॥ अथसूतिगृहप्रवेशः ॥ ॥ निर्णयसिंधौगर्गः ॥ रोहिण्यैंदवपौष्णेषुस्वातिवारुणयोरपि ॥ पुनर्वसौपुष्य हस्तध निष्ठात्र्युत्तर श्रुत ॥ मैत्रेत्वाष्ट्रेतथाश्विन्यांसूतिकागारवेशनं ॥ एतच्चसतिसंभवे ॥ प्रसूतिसंभवेकालेसद्यएवप्रवेशये दितिवशिष्टः ॥ विष्णुधर्मे ॥ दशाहंसूतिकागारमायुधैश्चविशेषतः ॥ बृहतीतिंदुडीलीतैःपूर्णकुंभैः प्रदीपकैः ॥ मुशलेन तथावारिरावकैश्चिह्नितेनच ॥ काकजंघाश्वेतगुंजेतिवैद्यकोशे ॥ पंपाटीबृहतीकंटकारी ॥ एतासांमूलानिपेषयित्वा सूतिकागारंराक्षसोपद्रवशांतयेसुपलेपयेत् ॥ ॥ इतिश्रीमदथर्ववेदगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकरकृते सूतिगृहप्रवेशनिर्णयरश्मिःश्चतुस्त्रिंशः ॥ ३४ ॥

॥ कृष्णायनमः । अथगर्भिणीधर्माः ॥ भूम्यांनैवोच्चनीचायामारोहणावरोहणेनदीसंतारणेचैवशकटारोहणंतथा ॥ उग्रौषधंतथाक्षारंमैथुनंभारवाहनं ॥ कृतेपुंसवनेचैवगर्भिणीपरिवर्जयेत् ॥ हरिद्राकुंकुमंचैवसींदूरंकज्जलं तथा ॥ केशसंस्कारतांबूलंमांगल्याभरणंशुभं ॥ चतुर्थेमासिषष्ठेवाप्यष्टमे गर्भिणीवधुः ॥ यांत्रांविसर्जयेन्नित्यंमाषाढेतु



विशेषतः ॥ इत्यपक्षेपतोगर्भिणीधर्माः ॥ अथगर्भिणीपतिधर्माः ॥ गर्भिणीवांछितंद्रव्यंतस्यैदद्याद्यथोचितं ॥ सूते चिरायुषंपुत्रमन्यथादोषमर्हति ॥ सिंधुस्नानंद्रुमच्छेदंवपनंप्रेतवाहनं ॥ विदेशगमनंचैवनकुर्याद्गर्भिणीपतिः ॥ वपनंमैथुनं तीर्थंश्राद्धभोजनमेवच ॥ वर्जयेत्सप्तमान्मासात्पर्वतारोहणं तथामुंडनंपिंडदानंचप्रेतकर्मचसर्वशः ॥ नजीवत्पितृकःकुर्याद् गुर्विणीपतिरेवच ॥ अत्रकर्तनमपिनिषिध्यते ॥ एतद्वादः ॥ क्षौरंनिमित्तकंकुर्यान्निषेधेसत्यपिध्रुवम् ॥ पित्रोःप्रेत विधानंचगर्भिणीपतिराचरेत् ॥ अन्वष्टक्याष्टकयोर्गर्भिणीपतिःपिंडदानंकुर्यात् ॥ केचित्पित्रोःप्रतिवत्सरिकेपिंडदानं कुर्वंति॥ दर्शमहालयादिषुनैवकार्यं इतिगर्भिणीपतिधर्माः॥ अथगर्भस्रावहरंकांचनयज्ञोपवीतदानंतद्विकौस्तुभेदृष्टव्यम् ॥ ॥ अथपुनःप्रसवसमयेसूतिकागृहप्रवेशः ॥ गृहंनैर्ऋत्यांसूतिकागृहंकृत्वा तत्राश्विनीरोहिणीमृग पुनर्वसुपुष्यत्र्युत्तराहस्त चित्रास्वात्यनुराधाधनिष्ठाशततारिकानक्षत्रेषुरिक्तादिवर्जतिथौचंद्रानुकूल्येशुभलग्ने सूतिकागारेशोगोविंदेवपूजनंकृत्वा मंत्रवाद्यघोषेणसापत्यस्त्रीभिःसहकार्यः ॥ उक्तमुहूर्तासंभवेसद्योवा ॥ इतीसूतिकागृहप्रवेशः ॥ अथशीघ्रप्रसवोपायः ॥ ग्रंथांतरोक्तः ॥ प्रसवप्रतिबंधेऋग्विधाने ॥ प्रमंदिनेइत्यृचंविजहीष्वेतिसूक्तंवाजपेत् ॥ एताभ्यामभिमंत्रितंजलंवापाययेत्तेनसुखप्रसवः ॥ शीघ्रप्रसवमंत्रस्तु ॥ हिमवत्युत्तरेपार्श्वेसुरतानामयक्षिणी ॥ तस्याःस्मरणमात्रेणविशल्यागर्भिणी भवेत् ॥ ॐश्रींॐस्वाहा इतिमंत्रेणयवांकुरेणतिलतैलंशतसहस्रंशाभि मंत्र्यकिंचित्पाययेत्किंचिन्मात्रस्यगर्भेलेपश्चसम्यक् लेपेशीघ्रंसुखप्रसवः ॥ अस्थिमात्रावशिष्टगोमस्तकस्यसूतिगृहोपरिनिधानेनसुखप्रसवः ॥ वंशनींबयोस्त्वक्तुलसीमूलं कपित्थपत्रकरवीरबीजंच समभागंमहिषीदुग्धेनपेषयीत्वातेनसतैलयोनिलेपेसद्यःप्रसवः ॥ अथविनियोगमालायामुक्तो ब्रह्मणादीनांमंत्रशीघ्रप्रसवोपायः ॥ अग्निस्थापनंकृत्वा इदंजनासेतिसूक्तेनचरुंसंपात्य सोष्यंतींस्त्रियंप्राशयेच्छीघ्रंप्रसवो भवतितत्रसूक्तं ॥ इदंजनासेतिसूक्तस्याथर्वाप्रजापतिरनुष्टुप् चरुसंपाताज्यहोमेविनियोगः ॥ ॐइदंजनासोविदथंमहद् ब्रह्मवदिष्यति नतत्पृथिव्यांनोदिवियेनप्राणंतिवीरुधः ॥ १ ॥ अंतरिक्षआसांस्थामश्रांतसदामिव ॥ आस्थानमस्य भूतस्यविदुष्टद्वेधसोनवा ॥ २ ॥ यद्रोदसीरेजमाने भूमिश्चनिरतक्षतं ॥ आर्द्रंतदद्यसर्वदासमुद्रस्येवस्रोत्याः ॥ ३ ॥

विश्वंमन्यामभि शारतदन्यस्यामधि श्रितं दिवेचं विश्ववेदसेपृथिव्यैचाकरन्नमः ॥ ४ ॥ इतिसूक्तं ॥ ॥ द्वितीयोपायः॥
शीघ्रपसवोपाये काकजंघामूलंवषट्तेपूषमितिसूक्तेनाभिमंत्र्यशिरसिबध्नाति॥ ॐवषट्तेपूषन्नस्मिन्सूत्वावर्यमाहोताक्रुणोतु
वेधाः ॥ सिस्रंतान्नार्युतप्रजाताविपर्वाणि जिहतांसूतवाउ ॥ १ ॥ चतस्रोदिवः प्रदिशश्चतस्रोभूम्यांउत ॥ देवागर्भसमै
रयन्नांव्यूर्णुवंतुसूतवे ॥ २ ॥ सूषाव्यूर्णोतुवियोनिहापयामसि ॥ श्रथयासूषणेत्वमवत्वंबिष्कलेसृज ॥ ३ ॥ नेवमांसे
नपीवसिनेवमज्जस्वाहतं ॥ अवैतुपृश्निशेवलं शुनेजराय्वत्तवेवजरायुपद्यताम् ॥ ४ ॥ वितेभिनद्मिमेहनंवियोनिंवि
गवीनिके ॥ विमातरंचपुत्रंचविकुमारंजरायुणावंजरायुपद्यतां ॥ ५ ॥ यथावातोयथामनोयथापतंतिपक्षिणः ॥ एवात्वं
दशमास्यसाकंजरायुणापतावजरायुपद्यताम् ॥ ६ ॥ इतिसूक्तेनाभिमंत्र्यशिरसिबंधयेत् ॥ इत्युपायांतरंविनियोगमालो
क्तम् ॥ ॥ इतीश्रीमदथर्वगुह्यसूत्रप्रयोगभानौषट्पन्नागर द्विजातिरविशंकरकृतेगर्भिणीधर्मतत्पतिधर्मसूतिकाग्रहप्रवेश
शीघ्रप्रसवोपायगुंफितनिर्णयरश्मिःपंचत्रिंशः ॥ ३५ ॥

॥ श्रीगणेशायनमः ॥ अथजातकर्मप्रारंभः ॥ जातमात्रेपुत्रेपितातस्यमुखंनिरीक्ष्यनद्यादावुदङ्मुखस्नात्वा
असंभवेदिवाहताभिःसीताभिःसुवर्णयुक्ताभिर्गृहेएवस्नात्वा चम्यजीवास्येतिविधिवत् ॥ सितचंदनमालादिभिरलंकृतो
नालछेदनात्पूर्वंसूतिकादिव्यति रिक्तैरस्पृष्टमकृतस्तनपान प्रक्षालितमलंकुमारंमातुरुत्संगेप्राङ्मुख मवस्थाप्यब्राह्मणैःसह
पुण्याहवाचनंकृत्वा ब्रह्मजज्ञानं० अव्यसश्चेतिमंत्रौपठित्वा देशकालौस्मृत्वाममास्यकुमारस्य गर्भाम्बुपानजनितसकलदोष
निबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनो निबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थंजातकर्माहंकरिष्येतिसंकल्पः ॥ तदंगस्वस्ति
पुण्याहवाचनंमातृकापूजनं हिरण्येननांदिश्राद्धंचकरिष्ये आदौनिर्विघ्नतासिध्यर्थं गणपतिपूजनंचकरिष्ये ॥ नांदिश्राद्धंच
कृत्वाशंखपुष्पिकांअथोपुष्पिकांच अथवाशंखनाभिपिप्पलीचउपलेनद्दशदे सम्यक्पिष्ट्वाअहंरुद्रेभिरिति सूक्तेनअभिमंत्र्य
हिरण्यशकलेनकुमारंप्राशयेत् ॥ प्राक्स्तनग्रहात ॥ अहंरुद्रेत्यष्टर्चस्यसूक्तस्याथर्वादेवतात्रिष्टुप्षष्ठीजगतीशंखपिष्पिका









धोपुष्पिकाकल्कोभिमंत्रणेथवाशंखनाभिपिप्पलीकल्काभि मंत्रणेविनियोगः ॥ अहंरुद्रेभि० ॥ त्वक् अहंरुद्रेभिरितिशुक्र
पुष्पेत्यादिपंचकर्माणिआयुष्कामोपिकरोति ॥ वार्शंवतिकंकर्मेतिवचनात् ॥ अथवार्षशतिककर्मप्रयोगः ॥ जीवास्थेति
विधिवदाचम्यप्राणानायम्यदेशकालौसंकीर्त्य ममअस्यशिशोःसम्यक्वचनमेधायुष्याभिवृध्यर्थं श्रीपरमेश्वरप्रीत्यर्थंवार्ष
शतिककर्मकरिष्ये ॥ ब्रह्मजज्ञानंअव्यसश्चेत्यारभ्याग्निप्रतिष्ठापनांतंकृत्वा अभ्यात्तानादिपूर्वतंत्रंविधाय बलवर्द्धननामान
मग्निंप्रतिष्ठाप्य ॥ मातुरुत्संगस्थशिशोः तालिनिसंपातानानयनं ॥ अहंरुद्रेत्यष्टर्चस्यसूक्तस्याथर्वावाक्देवतात्रिष्टुप्षष्ठि
जगतीतालुसंपातकर्मणिवार्षशतिकप्रधानाज्यहोमेविनियोगः ॥ ॐअहंरुद्रेभिरितिऋक्८वाग्देवतायै इदंनममेतिप्रत्यृचं
त्यागःसंपातश्च ॥ अभ्यात्तानाद्युत्तरतंत्रंकृत्वा ॥ यस्मात्कोशेतिकृतंकर्मेश्वरार्पणंकुर्यादिति ॥ ॥ आचम्यप्राणानायम्य
देशकालौस्मृत्वा ममास्यशिशोःसम्यक्वचनमेधायुष्यभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं द्वितीयंवार्षशतीककर्मकरिष्ये ॥
ब्रह्मजज्ञानंअव्यसश्चेत्यारभ्याग्निप्रतिष्ठापनांतंकृत्वा बलवर्द्धननामानमग्निंप्रतिष्ठापयामित्यग्निंप्रतिष्ठाप्य ॥ अभ्यात्तानांतं
कृत्वादधिमधुनिएकस्मिन्पात्रे अग्नेर्दक्षिणतआसाद्य अहंरुद्रेभिरितिसूक्तेनाज्यंजुह्वन् ॥ दधिमधुनिसंपात्यप्राशयेत् ॥तद्यथा॥
अहंरुद्रेत्यष्टर्चस्यसूक्तस्याथर्वा वाग्देवतात्रिष्टुप्षष्ठि जगतिवार्षशतिककर्मप्रधानाज्यहोमेविनियोगः ॥ अहंरुद्रेभिरिति
ऋक्८वाग्देवतायैइदंनममेतित्यागः पुनस्तेनैवसूक्तेनदधिमधुनिअभिमंत्र्यतेनैवसूक्तेनबालकंप्राशयेत् ॥ अभ्यात्तानाद्युत्तर
तंत्रंयस्मात्कोशेतिकृतं कर्मेश्वरार्पणंकुर्यात् ॥ इतिचतुर्थप्रयोगः ॥ यदिउपनयनेनसहतंत्रेण जातकर्मकरोति तदासूक्तमपि
पठेत्कुमारायसंकल्पंवाचयेत् ॥ तद्यथा ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यशिशोः प्रथमप्रवदस्यसम्यक्
वचनाकामाद्यायुष्याभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वार्शैवतिककर्मांगतयामाणवकमहंरुद्रेभिरिति सूक्तवाचनंकरिष्ये ॥
माणवकंअहंरुद्रेतिसूक्तंपच्छःवाचयति ॥ अहंरुद्रेत्यष्टर्चस्यसूक्तस्याथर्वावाग्देवतात्रिष्टुप्षष्ठिजगति माणवकस्यवाचने
विनियोगः ॥ ॐअहंरुद्रेभिर्वसुभिश्चरामि ॥ ॐअहमादित्यैरुतविश्वदेवैः ॥ एवंपच्छःवाचयति ॥ यस्मात्कोशेतिमंत्रपाठः॥
कृतंकर्मेश्वरार्पणंकुर्यात् ॥ इतिवार्षशतिकपंचमप्रयोगः ॥ ॥ इतीश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागर द्विवेदिरविशंकर
कृतेजातकर्मप्रयोगरश्मिषट्त्रिंशः ॥ ३६ ॥

॥ अथकुमार्याअपिजातकर्मादिसंस्काराः चौलांताःसर्वेऽमंत्रकाःकार्याः ॥ विवाहस्तुसमंत्रकः ॥ अतःकन्या
याजातकार्मादिसंस्कारलोपेतत्तत्कालेविवाहकालेप्रायश्चित्तंविधायविवाहःकार्यः ॥ अथसर्वत्रजातकर्मनामकर्मादौमुख्य
कालातिक्रमेगुर्वाद्यस्तादौरहिते शुभनक्षत्रादौजातकर्मादिकंकार्यम् ॥ तत्रजातकर्मणिनक्षत्राणि ॥ रोहिणीत्र्युत्तराअश्विनि
हस्तपुष्यानुराधारेवतीमृगचित्राश्रवणादित्रयस्वातिपुनर्वसवः ॥ रिक्तापर्वरहितास्तिथयः ॥ भौमशनिवारभिन्नावाराः॥
भद्रावैधृत्यादिशून्येशुर्केंद्रलग्नेशुभं ॥ अथपंचमषष्ठमदिनयोर्जन्मदानांपूजनं ॥ रात्रौप्रथमेयामेपित्रादिनास्नात्वाचम्यदेश
कालौसंकोर्त्य ॥ अस्यशिशोःसमातृकस्यायुरारोग्यप्राप्ति सकलारिष्टशांतिद्वारा श्रीपरमेश्वरप्रीत्यर्थंविघ्नेशस्यजन्मदानां
जीवंत्यपरनाम्नांषष्ठिदेव्याः शस्त्रगर्भेभगवत्यापूजनंकरिष्ये ॥ इतिसंकल्प्यः तंदुलपुंजेषुपूगिफलेषुवाआवाहनंकुर्यात् ॥
तद्यथा ॥ विघ्नेशायनमः विघ्नेशंआवाहयामि ॥ जन्मदायैनमः जन्मदांआवाहयामि ॥ आयाहिवरदेदेवीमहाषष्ठीति
विश्रुते ॥ शक्तिभिःसहबालंमेरक्षजागरवासरे ॥ इतिमंत्रेणषष्ठिदेव्यैनमः षष्ठिदेवींआवाहयामि ॥ ॐभगवत्यैनमः
भगवतींआवाहयामि ॥ इतिदेवताचतुष्टयंआवाह्य ॥ विघ्नेशाद्यावाहितदेवताभ्योनमः आसनंसमर्पयामि ॥ एवंशोडषो
पचारैःसंपूज्य ॥ प्रार्थनांकुर्यात् ॥ शक्तिस्त्वंसर्वदेवानांलोकानांहितकारिणी ॥ मातर्बालमिमंरक्षमहाषष्ठिनमोस्तुते ॥
लंबोदरमहाभागसर्वोपद्रवनाशन ॥ त्वत्प्रसादाद्विघ्नेशचिरंजीवतुबालकः ॥२॥ जननीसर्वदुखानांबालानांचविशेषतः
नारायणिस्वरूपेणबालंमेरक्षसर्वदा ॥३॥ प्रेतभूतपिशाचेभ्योडाकिनीयोगिनीतथा॥ मातेवरक्षबालंमेश्वापदेपन्नगेषुवा॥
॥४॥ गौरिपुत्रोयथास्कंदः शिशुत्वेरक्षितःपुरा ॥ तथाममाप्ययेबालषष्ठिकेरक्षतांनमः ॥५॥ विप्रेभ्यःतांबूलदक्षिणादि
दद्यात् ॥ रात्रौजागरणंकुर्यात् ॥ पंचमषष्ठमदिनयोर्दानप्रतिग्रहयोर्नदोषः ॥ दशमदिनेबलिदानंस्वीयेभ्योऽन्नदानंच
कार्यम् ॥ तदुक्तंभागवतश्रीधर्य्या ॥ पुत्रजन्मव्यतीपातेदत्तंभवतिवाक्षयमितिवचनात् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्र
प्रयोगभानौषट्पन्नागर द्विवेदीरविशंकरकृते कुमारीसंस्कारनिर्णयसहित पंचमषष्ठदिनयोर्जन्मदानांपूजनप्रयोगरश्मिः
सप्तत्रिंशः ॥ ३७ ॥





अथाशौचेकर्त्तव्याकर्त्तव्यनिर्णयः ॥ सूतकेमृतकेकुर्यात्प्राणायाममसंत्रकं ॥ तथामार्जनमंत्रांश्चमनसोच्चार्य्य
मार्जयेत् ॥ गायत्रींसम्यगुच्चार्य्य सूर्यायार्घ्यंनिवेदयेत्॥ उपस्थानंनैवकार्यंमार्जनंतुकृताकृतं ॥ सूर्यंध्यात्वनमस्कुर्यात् ॥
गायत्रीजपोनकार्यः ॥ अधीतामानसीसंध्याइत्युक्तेः ॥ केचिन्मनसागायत्रीजपःकार्यइत्याहुः ॥ वैश्वदेवब्रह्मयज्ञादयः
पंचमहायज्ञानकार्याः ॥ वेदाभ्यासोपिनकार्यः ॥ औपासनहोमपिंडपितृयज्ञावसगोत्रेणकारयेत् ॥ केचिच्छौतकर्मणि
सद्यःशुध्युक्तेरग्निहोत्रेहोमः स्नात्वाचम्यस्वयंकार्यइत्याहुः ॥ अपरेतुसर्वथाप्याशौचापवादस्यानन्यगतिकत्वात्सति
ब्राह्मणद्वारैवकार्यः ॥ ब्राह्मणाभावेस्वयंकार्यइत्याहुः स्थालीपाकोनकार्यः ॥ सर्वथालोपप्रसक्तौस्थालीपाकोपिब्राह्मण
द्वाराकार्यः ॥ अन्वाधानोत्तरमृतकप्राप्तौब्राह्मणद्वाराश्रौतेष्टिस्थालीपाकौकार्याविति ॥ होमादौत्यागः स्नात्वास्वयं
कार्यः ॥ दर्शादिश्राद्धस्यलोपएव ॥ प्रतिसांवत्सरिकश्राद्धमाशौचांतेएकादशाहेकार्यं.तत्रासंभवेदर्शव्यतिपातादिपर्वणि॥
आशौचेऽन्यस्यान्नंनाश्नीयात् ॥ पितृयज्ञस्थालीपाकश्रपणाकर्मादिसंस्थानांप्रथमारंभोब्राह्मणद्वाराप्याशौचयोर्नभवति॥
प्रथमारंभोत्तरंश्रवणाकर्मादिकंविप्रद्वाराः शौचेपिपत्न्यार्त्तवेपिकार्यं ॥ आग्रयणंतुनभवति अग्निसमारोपप्रत्यवहारौआ
शौचेनभवतः ॥ तेनसमारोपोत्तरमाशौचेतैत्तरीयादीनांत्रिदिनं ॥ होमलोपेबहुहृचानांद्वादशदिनंहोमलोपेग्निनाशादा
शौचेपुनराधानमेव ॥ समारोपप्रत्यवरोहयोइत्यकर्तृकत्वाभावात् ॥ अग्न्युनुगमनेप्रायश्चित्तपूर्वकपुनरुत्पत्तिरन्यद्वारा
भवति ॥ भोजनकालेआशौचेप्राप्तौमुखस्थग्रासं त्यक्त्वास्नायात् ॥ तद्ग्रासभक्षणेएकोपवासः ॥ सर्वान्नभक्षणेत्रिरा
त्रमुपवासः ॥ ग्रहणसंक्रांतौचश्राद्धदानजपादिकर्माशौचेपिकार्यं व्रतेषुनाशौचं ॥ अनंतव्रतादिकमन्यैःकारयित्वासूतकांते
द्विजभोजनं॥ उदकदुग्धदधिघृतलवणफलमूलभर्जितापन्नानांसूतकीग्रहस्थितानां स्वयंग्रहणेदोषाभावः ॥ सूतकीहस्ता
न्नंतुग्राह्यम् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकरकृते कर्त्तव्याकर्त्तव्यसंक्षेपनिर्णयरश्मि
रष्टत्रिंशः ॥ ३८ ॥

॥ अथसूतकीशुद्धिः ॥ ॥ दशाहांतेसूतकायाअस्पृश्यनिवृत्तिर्नामजातकर्मादिप्राप्तधर्माधिकारश्च ॥ जातेष्टि

विवाहोपनयनादिषुतत्पुत्रप्रसूतानांविंशतिरात्रांतेधिकारः ॥ कन्याप्रसूतानांमासांतेधिकारः ॥ अथजन्मनिदुष्टकालाच्छां तयश्चनीर्णीयंते ॥ तत्रादौसर्वशांत्युपयोगिशुभदिननिर्णयमाह ॥ कौस्तुभे ॥ मुख्यकालंप्रवक्ष्यामिशांतिहोमस्ययत्नतः॥ जातस्यद्वादशाहेतुजन्मर्क्षेवाशुभेदिने ॥ जननाद्द्वादशाहेशांतिकरणेशांत्युक्त नक्षत्राहुतिवह्निचक्राद्यवलोकनादिकंनावश्यकं ॥ कालांतरेआवश्यकं ॥ एवंमूलादिसर्वत्रशांतिष्वपिज्ञेयं ॥ तद्यथा ॥ शुक्लादितिस्तिथिःसैकावारयुक्ताब्धिशेषिता ॥ खे०गुणेदश्रुविवासोग्नयेध्यौ२घु१योःस्यादधोदिवि ॥ भुष्वाद्यग्निशुभः अन्यत्राशुभाः ॥ होमाहुतिःसूर्यभतःस्त्रिभगस्यंमुहुस्तत्रचंद्रभाद्यधिसूर्यज्ञंशुक्रार्कजचंद्रभूमिजाजीवस्तमः केतुरसत्यसन्मुखे ॥ ज्ञंबुधःअर्कजःशनिःभूमिजोभौमः जीवःगुरुःतमःराहुः ॥ आदित्येचभयेच्छोकंबुधेसंपत्तिरुत्तमा ॥ शुक्रेणचधनप्राप्तिशनौपीडाचजायते ॥ चंद्रेभवति लाभश्चभौमेचैवधनक्षयम् ॥ गुरौपश्यतिकल्याणंराहुहानिश्चजायते ॥ केतौसुप्राक्संदेहोवह्निचक्रमुदाहृतं ॥ संस्कार नित्यकर्मसुनिमित्ताप्यवहितनैमित्तिकेषुरोगातुरेचवह्निचक्रादिकंनापेक्षितं ॥ अग्नेस्थापनवेलायांपूर्णाहुत्यामथापिवा ॥ आहुतिवह्निवासश्चत्रिलोक्यो शांतिकर्मणि त्र्युत्तरारोहिणी श्रवणधनिष्ठाशततारिका पुनर्वसुस्वातिमघाश्विनी हस्तपुष्यानुराधारेवतीनक्षत्रेषुगुरुशुक्रास्तमलमासरहितेषु शुभवारतिथ्यादौशांतिःकार्या ॥ निमित्ताप्यवहितनैमित्तकंरोगशांतौच अस्ताविचारणानास्ति ॥ ॥ इतिश्रीमदथर्ववेदगृह्यसूत्रप्रयोगभानौ षट्पञ्चागरद्विवेदिरविशंकरकृतेमूतकीशुद्धिकर्त्तव्याकर्त्तव्यनिर्णयरश्मिरेकोनचत्वारिंशत् ॥ ३९ ॥

॥ अथतत्रादौगोमुखप्रसवशांतिरुच्यते ॥ तत्रगर्गः ॥ प्रणिपत्यारविंदाक्षंप्रायश्चित्तमनुस्मरन् ॥ सर्वारिष्टविनाशाययदुक्तंज्योतिषार्णवे ॥ पुत्ररिष्टेसुतारिष्टेमातृरिष्टेतथैवच ॥ पौष्णाश्विन्योर्गुरौसार्प्यमघाचंद्रेंद्रमूलभे॥ एषुऋक्षेषु जातस्यकुर्याद्गोजननंशुभं ॥ अथगोप्रसवः ॥ यत्रजन्मकाले पितुर्मातुःसुतस्यचारिष्टमुक्तंतत्रगोप्रसवशांति तन्नक्षत्रादिशांतिश्चकार्या ॥ धनाद्यरिष्टेपुनकार्यामूलाश्लेषाज्येष्ठामघानक्षत्रेषु जननेचतुर्थपादादिषुपित्राद्यरिष्टाभावेषुगोप्रसवः ॥ अश्विनीरेवतीपुष्यचित्रासुनक्षत्रशांत्यभावेपिगोमुखप्रसवशांतिरेवकार्या ॥ ॥ अथप्रयोगः ॥ देशकालौस्मृत्वाअस्य





बालकस्यामुकदुष्टकालोत्पत्तिसूचितारिष्टनिवृत्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थं गोमुखप्रसवाख्यांशांतिंकरिष्ये इतिसंकल्प्य ॥ तत्रादौनिर्विघ्नतासिध्यर्थं गणेशांबिकयोःपूजनंचकरिष्ये ॥ गणेशांबिकयोःपूजनमात्रंकृत्वा ब्रह्मजज्ञानंअन्यसश्चेति पठित्वा ॥ ततःशिशुमूर्ध्न्यवघ्राणांतेप्रयोग मध्यएवपुण्याहवाचनमितिकौस्तुभमयूखौ ॥ नांदिश्राद्धंनकार्यं॥ ततोआचार्यं वरयेत् ॥ यजमानप्रवरमुच्चार्य ॥ अमुकप्रवरान्वितोअमुकगोत्रोत्पन्नःअमुकशर्माहं ॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नममुकशर्माणंब्राह्मणंअस्मिन्गोप्रसवशांत्याख्येकर्मणिआचार्यत्वामहंवृणे ॥ वृतोस्मीतितेनवाच्यं ॥ ततोआचार्यंसंपूज्य आचार्येरक्षोहणंवाजिनमितिसर्षपविकिरणंपंचगव्यंच संपाद्यआपोहिष्ठेतिअद्भिश्चदेशप्रोक्षणं स्वस्त्ययनंत्यमूषुवाजिनमितिप्रार्थनंविधाय ॥ ग्रहस्येशानभागे गोमयेनोपलिप्यश्वेतरजोभिः कर्णिकायुक्तपंकजंकृत्वा तत्रयथाशक्तिव्रीहीन्निक्षिप्यतेषुशूर्पंतस्मिन्रक्तवस्त्रं प्रसारितंतत्रतिलविकीरणंचकृत्वा तत्रप्राङ्मुखदक्षिणदिक्पादंशिशुंनिधायसशिशुशूर्पंसूत्रेण वेष्टयित्वातद्गोमुखप्रांनिःयंकृत्वामूकपठेत् ॥ ॐ यथेयंपृथिवीयोनिमेतिमूकेनपूर्वोक्तेनजन्मविंतनंकृत्वा ॥ तेनैवावृत्त्या पंचगव्येनशिशुंस्नापयित्वा ॥ गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ इतिमंत्रेण गोःसर्वांगेषुवामांगेष्वेववास्पृशेत् ॥ ततःआचार्योबालकमादायविष्णोश्रेष्ठेनरूपेणइतिमंत्रेणमात्रेदद्यात् ततःपितामात्रेण दद्यात् ॥ ततोमातावस्त्रंप्रसार्यसूर्पेसंस्थापयेत् अथपितातस्यमुखमीक्षते ॥ ततःपंचगव्येनाचार्यःशिशुंप्रोक्षयेत् ॥ आपोहिष्ठेतिसूक्तेनतथाचकौशिकसूत्रभाष्योक्तसूक्तैः सिंहव्याघ्रंयशोहविरितिप्रातरग्निं गिरावरगराटेषुदिवस्पृथिव्याइतिसूक्तैः ऋग्भिरभिषेकंकुर्यात् ॥ ततोभिषेकांतेपिताहस्तद्वयेनपरिग्रहपूर्वकंशिशोर्मूर्द्धनित्रिरवघ्रायतत्रमंत्रः ॥ अंगादंगात्संभवसि हृदयादधिजायसे ॥ आत्मावैपुत्रनामासिसंजीवशरदःशतम् ॥ इतिमंत्रेणवघ्राणंकृत्वा पूर्वप्रसारितवस्त्रयुग्मेनाच्छाद्यगंध पुष्पादिभिःकलशमभ्यर्च्य कृताग्न्युत्तारणौविष्णुवरुणौसंपूज्यौ ॥ प्रतिमात्रयेषुविष्णुवरुणयक्ष्मग्रहणश्चपूज्या इतिमयूखे॥ यक्ष्मग्रहणस्थापनपक्षेअक्षीभ्यामितिसप्तभिर्ऋतुशांतिप्रकरणोमंत्रैःस्थापनंकुर्यात् ॥ अथपूजाक्रमः ॥ ॐतद्विष्णोःपरमं०॥ विष्णवेनमः विष्णुंआवाहयामि ॥ ॐयेपश्चाज्जुहोतिइतिमंत्रेणवरुणमावाहयामि ॥ एवमग्रेपिषोडशोपचारैःसंपूज्य ॥

पूजांतेकुंभंस्पृष्ट्वाऽभिमंत्रयेत् ॥ तत्रमंत्राः ॥ ॐमानोविदनविव्याधिनोमोअभिव्याधिनोविदन् ॥ आराच्छरव्याअस्मद्वि
शूचीरिंद्रपातय ॥ १ ॥ ॐविश्वंचोअस्मच्छरवःपतंतुयेअस्तायेचास्याः ॥ दैवीर्मनुष्येशवोममामित्रान्विविध्यत ॥ २ ॥
ॐयोनःस्वायोअरणःसजातउतविष्ट्योयोअस्मान् अभिदासति ॥ इंद्रःशरव्ययैतान ममामित्रान्विविध्यतु ॥ ३ ॥ ॐयः
सपत्नोयोसंपत्नोयश्चद्विषंच्छपातिनः ॥ देवास्तंससर्वधूर्वंतुब्रह्मवर्ममांतरं ॥ ४ ॥ ॐअदारसृद्भवतुदेवसोमास्मिन्यज्ञे
मरुतोमृडतानः ॥ मानोविददभिभामोअशस्तिर्मानोविदवृजिनाद्वेष्याय ॥ ५ ॥ ॐयोअद्यसेन्योवधोघायूनामुदीरते॥
युवंतंमित्रावरुणाअस्मद्यावयतंपरि ॥ ६ ॥ ॐइतश्चयदमुतश्चयद्वधंवरुणायावय ॥ विमहच्छर्मयच्छवरीयोयावयावधम्
॥ ७ ॥ ॐशासइत्यामहांअस्यमित्रसाहोअस्तुनः ॥ नयस्यंहन्यतेसखानजीयतेकदाचन॥ ८ ॥ ॐस्वस्तिदाविशांपति
र्वृत्रहाविमृधोवशी ॥ वृषेंद्रःपुरएंतुनःसोमपाअभयंकरः । ९ ॥ ॐ विनइंद्रमृधोजहिनीचायंछपृतन्यतः ॥ अधमंगमया
तमोयोअस्मांअभिदासति ॥ १० ॥ ॐविरक्षोविमृधोजहिविवृत्रस्यहनुरुज ॥ विमन्युमिंद्रवृत्रहन्नमित्रस्याभिदासतः ॥
॥११॥ ॐअपेंद्रद्विषतोमनोपजिज्यासतोवधं ॥ विमहषर्मयच्छवरोयोयावयावधं ॥ १२ ॥ ॥ इतिसूक्तंजप्त्वाअभ्यात्ता
नादिपूर्ववतंत्रंकृत्वा मूंजरज्वाशिशुंकंठपादेचबध्वा ॥ पत्नोहीतिसूक्तेनसजलंकुंभंसंस्थाप्य ततोहोमकालेयजमानस्त्यागं
कुर्यात् ॥ मंत्रोक्तदेवताभ्यःपत्नाहीतित्रिरावृत्त्याज्यंनमम ॥ द्वात्रिंशदाहुतिपर्याप्तं मिलितदधिमध्वाज्यद्रव्यंअद्भ्योन
मम ॥ अष्टसंख्याहुतिपर्याप्तंतद्रव्यंविष्णवेनमम ॥ अष्टचत्वारिंशत्संख्याहुति पर्याप्तंमिलितदधिमध्वाज्यद्रव्यंयक्ष्मघ्ने
नमम ॥ अष्टअष्टाहुतिपर्याप्तंमिलितदधिमध्वाज्यद्रव्यं आदित्यादिनवग्रहेभ्योनमम ॥ एवंत्यागेकृतेआचार्यःस्रुवेणजुहु
यात् ॥ पत्नोहीतित्रिरावृत्तिराज्यहोमोदकुंभेसंपतः ॥ अथकेवलाचार्येणहोमकरणपक्षेप्रधानहोमः ॥ आपोहिष्ठेति
तिसृणांसिंधुद्वीपअंबरीषआपोगायत्री गोप्रसवप्रधानहोमेविनियोगः ॥ आपोहिष्ठा० ॥ स्वाहाअद्भ्यइदंनमम ॥





ॐयोवःशिवस ॥ स्वाहाअद्भ्यइदंनमम ॥ ॐतस्माअरंग ॥ स्वाहाअद्भ्यइदंनमम ॥ ३ ॥ ॐअप्सुमेधातिथिरापो
ऽनुष्टुप् ॥ गोप्रसवप्रधानहोमेविनियोगः ॥ ॐअप्सुमे०षजा ॥ अग्निंचवि०षजीस्वाहाअद्भ्यइदंनमम ॥४॥ तद्विष्णो
र्मेधातिथिगायत्रीगोप्रसवप्रधानहोमेविनियोगः ॥ ॐतद्विष्णोःपरमंपदं०स्वाहाविष्णवइदंनममः ॥ ५ ॥ अक्षीभ्या
मितित्रयाणांविवृहायक्ष्मघ्नानुष्टुप् ॥ गोप्रसवप्रधानहोममिलितदधिमध्वाज्यहोमेविनियोगः ॥ ॐअक्षीभ्यांतेनासिकाभ्यां
कर्णाभ्यांछुबुकादधि ॥ यक्ष्मंशीर्षण्यंमस्तिष्का जिह्वयाविवृहामितेस्वाहा यक्ष्मघ्नइदंनममैवंसर्वत्र ॥ ॐग्रीवाभ्यस्त
उष्णिहाभ्यःकीकसाभ्योअनूक्यात् यक्ष्मंदोषण्या ॥१॥ मंशाभ्यांबाहुभ्यां विवृहामितेस्वाहा ॥२॥ हृदयात्तेपरिक्लोम्नो
हलीक्ष्णात्पार्श्वाभ्यांयक्ष्मंमतस्नाभ्यांप्लीन्होयत्कस्तेविवृहामसि ॥ ३ ॥ ॐआंत्रेभ्यस्तेगुदाभ्योवनिष्ठोहृदयादधि ॥
यक्ष्मंकुक्षोभ्यांप्लाशेर्नाभ्याविवृहामिते ॥४॥ ॐउरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां ॥ यक्ष्मंभसद्यंश्रोणिभ्यां
भासदंभंससोविवृहामितेस्वाहा ॥ ५॥ सिंहनाद्वंकरणाल्लोमभ्यस्तेनखेभ्यः ॥ यक्ष्मंसर्वस्वात्मनअस्थिभ्यं स्तंमज्जभ्य
स्नावभ्योधमनिभ्यः ॥ यक्ष्मंपाणिभ्यामङ्गुलिभ्योनखेभ्योविवृहामिते ॥ ६ ॥ ॐअंगेअंगेल्लोम्निलोम्नियस्तेपर्वणि
पर्वणि ॥ यक्ष्मंत्ववस्यंतेवयंकश्यपस्यवीवर्हेणविष्वंचंविवृहामसि ॥ ७ ॥ यक्ष्मघ्नइदंनमम ॥ इतिऋचंअष्टाविंशति
मष्टौवाहुत्वा ॥ नवग्रहाणांतत्तन्मंत्रैर्मिलितदधिमध्वाज्यद्रव्यैः प्रत्यकमष्टाविंशतिमष्टौवाएकैकाहुतिभिर्वाजुहुयात् ॥
सवित्रेसोमायेत्यादित्यागः स्विष्टकृदादिहोमः ॥ ततोभ्यात्तानाद्युत्तरतंत्रंशेषंपरिसमाप्य ॥ पत्नोहीत्यभिमंत्र्यसपत्नीकं
सशिशुंयजमानंसिंहव्याघ्रादिवेति पूर्वोक्तैःसूक्तैःस्नापयेत् ॥ ततःगच्छगच्छेतिविसृज्यतिलकंचाशिर्वादः ॥ दशवात्रीन्
ब्राह्मणानभोजयेत् ॥ आचार्यायगामन्येभ्योवृतेभ्यो सुवर्णादियथाशक्तिदानंदत्वाऽन्येभ्यो भूयसींदत्वायस्मात्कोशेति
कर्मणःसंपूर्णतांवाचयित्वाकृतं कर्मेश्वरार्पणंकुर्यात् ॥ मुंजरज्वादिकमुन्मुच्यंनदीफेनेषुनिक्षिपेदिति ॥ ॥ इतिश्रीमदथर्व
गृह्यसूत्रप्रयोगभानौपदूपन्नागर द्विवेदिरविशंकरकृतेगोमुखप्रसवशांतिप्रयोगरश्मिश्चत्वारिंशत् ॥ ४० ॥

॥ अथगोमुखप्रसवोपयोगिगोदानप्रयोगरश्मिरारभ्यते ॥ देशकालौस्मृत्वा श्रीकर्मांगदेवतास्वरूपीपरमेश्वर
प्रीत्यर्थं आचार्यायगोदानंकरिष्ये ॥ तदंगभूतंब्राह्मणवरणंब्राह्मणपूजनं गोपूजनंकरिष्येइतिसंकल्प्य ॥ पूगिफलंगृहीत्वा
अमुकप्रवरान्वितोमुकगोत्रोत्पन्नः अमुकशर्माहंयजमानः ॥ अमुकप्रवरात्विताममुकगोत्रोत्पन्नंअमुकशर्माणंब्राह्मणंअस्मद्गो
प्रतिग्रहीतारंत्वामहंवृणे ॥ वृतोस्मिइतितेनवाच्यं ॥ ततोद्विजंयथाविभवैःसंपूज्य ॥ गवामंगेआदौदेवतान्यासंकुर्यात् ॥
शृंगमूलयोः ब्रह्माणंविष्णुंचन्यसामि ॥ एवमग्रेपि ॥ ललाटेमहादेवंन्यसामि ॥ नासाग्रेषण्मुखंन्यसामि ॥ कर्णयोः
अश्विनौदेवौन्यसामि ॥ चक्षुषोःशशिभास्करौन्यसामि ॥ दंतेषुवायूंन्यसामि ॥ जिह्वायांवरुणंन्यसामि ॥ हुंकारे
सरस्वतींन्यसामि ॥ गंडयोःयमजौन्यसामि ॥ ओष्ठयोःसंध्याद्वयंन्यसामि ॥ कुक्षिदेशेरक्षोन्यसामि ॥ पृष्ठेएकादश
रुद्रान्न्यसामि ॥ सर्वसंधीषुवसून्न्यसामि ॥ श्रोणितटेपितॄन्न्यसामि ॥ लांगूलेसोमंन्यसामि ॥ वालेषुसूर्यकोटिरश्मीन्
न्यसामि ॥ गोमुत्रेगंगांन्यसामि ॥ गोमयेनर्मदांन्यसामि ॥ क्षीरेसरस्वतींन्यसामि ॥ दध्निनर्मदांन्यसामि ॥ सर्पिषु
हुताशंन्यसामि ॥ रोमेषुदेवानांत्रयस्त्रिंशत्कोटिन्न्यसामि ॥ उदरेपृथ्वींन्यसामि ॥ पयोधरेषुचतुःसागरान्न्यसामि ॥
एवंन्यासविधिंकृत्वा उपह्वयेतिध्यायेत् ॥ सौरभेयोसर्वहितेपवित्रेपापनाशिनी ॥ प्रतिगृह्यमयादत्तंपाद्यंत्रैलोक्यरक्षिते॥
ॐभूर्भुवःस्वर्जनदेवित्रिष्णुरूपिण्यैधेन्वैनमः पाद्यंसमर्पयामि ॥ सर्वदेवमयेदेविसर्वदेवमयेशुभे॥ गृहाणार्घ्यंमयादत्तंसौरभे
यिनमोस्तुते॥ गव्येनमःअर्घ्यंसमर्पयामि॥ देहस्थितानरुद्राणिशंकरस्यसदाप्रिये ॥ धेनुरूपेणसादेविममपापंव्यपोहतु॥
ॐभूर्भुवःस्वर्जनदेगव्येनमः आचमनीयंसमर्पयामि ॥ यालक्ष्मीसर्वलोकेषुयाचदेवेष्वस्थिता ॥ धेनुरूपेणसादेवीममम
पापंव्यपोहतु॥ ॐभू०॥ स्नानंस०॥ आच्छादंगवेदत्वा सम्यक्शुद्धंसुशोभनम् ॥ सुरभिर्वस्त्रदानेनप्रीयतांपरमेश्वरी ॥
गवेनमःवस्त्रं०॥ श्रीखंडमितिगंधं॥ अक्षताः॥ पुष्पाणि॥ सौभाग्यंद्रव्यं॥ ततःगवेअलंकारान्दत्वा ॥ अंगभूषणार्थंसुवर्णं॥
चरणभूषणार्थंरजतं॥ भालभूषणार्थमादर्शं॥ नेत्रभूषणार्थंरत्नद्वयं॥ कंठभूषणार्थंघंटांपुष्पस्रजंच॥ सर्वावयवभूषणार्थंपट्टकूलं
पृष्ठभूषणार्थंताम्रं॥ पुच्छभूषणार्थंमुक्ताफलानि॥ दोहनार्थंकांस्यं॥ कुंकुमकर्पूरकस्तूरिकासुगंधिद्रव्याणि॥ सप्तधान्यानिपरितः









प्रकल्पयेत् ॥ घृतपूर्णंकुंभः॥ ततःवनस्पति०धूपं०॥ दीपं०॥ धान्यनैवेद्यं०॥ फलं०॥ तांबूलं०॥ दक्षिणां०॥ एतैरुपचारैः
संपूज्य ॥ पंचगावः समुत्पन्नामथ्यमानेमहार्णवे ॥ तासांमध्येतुयानंदातस्यैधेन्वैनमोनमइतिमंत्रपुष्पांजलिः ॥ नमस्कारं
चकृत्वा ॥ गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेसंतुगवांमध्येवसाम्यहं प इतिप्रार्थयेत् ॥ ततोयजमानः
सजलतिलकुशंगृहीतगोपुच्छंधृताक्तंकृत्वा ब्राह्मणहस्तेगोपुच्छंदत्वा ॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नः अमुकशर्माहं ॥
अमुकगोत्रोत्पन्नाय अमुकशर्मणेब्राह्मणाय इमांगांसवत्सांतरुणींघटोध्नींपयः पूर्णांयथाशक्तिभूषितागोप्रसव सांगतसिद्धि
द्वाराकर्मांगदेवतास्वरूपीपरमेश्वरप्रीत्यर्थंतुभ्यमहंसंप्रददेनमम ॥ गौस्तारयतु ॥ पुण्यंवर्द्धतां ॥ शांतिःपुष्टिस्तुष्टिश्चास्तु॥
यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवप्रीयतामनयागवा ॥ ॐदेवस्यत्वासवितु० ॥ प्रतिगृह्यतां॥
प्रतिगृह्णामीतिपुनर्मेत्विंद्रियेतिपठित्वा ॥ दानसांगतासिध्यर्थंमिमांरजतमयींदक्षिणांतुभ्यमहंसंप्रददे ॥ आगावोअग्मंतु०
प्रदक्षिणीकृत्य ॥ यस्यस्मृत्या० अनेनगोप्रदानाख्येनकर्मणा श्रीभगवानकर्मांगदेवतारूपी परमेश्वरःप्रीयतांनमम ॥
यस्मात्कोशतिकृतंकर्मेश्वरार्पणंकुर्यात् ॥ ॥इतीश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागर द्विवेदिरविशंकरकृतेगोप्रसव
शांत्युपयोगिगोदानप्रयोगरश्मिःरेकचत्वारिंशत् ॥ ४१ ॥

॥ श्रीकर्माधीश्वरायनमः ॥ अथकृष्णचतुर्दशीजननशांतिप्रयोगरश्मिप्रारंभः ॥ कृष्णचतुर्दशीचषट्भागं
कुर्यादादौशुभंस्मृतं ॥ द्वितीयेपितरंहंतितृतीयेमातरंतथा ॥ चतुर्थेमातुलंहंतिपंचमेवंशनाशनं ॥ षष्ठेतुधनहानिस्यादात्मनो
वंशनाशनं ॥ तत्रचतुर्दश्याःषडंशानांमध्येद्वितीयतृतीयषष्ठांशेषुजनने गोमुखप्रसवपूर्वकंचतुर्दशीशांतिः अन्यभागेकेवल
चतुर्दशीशांतिःकार्या ॥ ॥ अथप्रयोगः ॥ ॥ देशकालौस्मृत्वाऽस्यशिशोःकृष्णचतुर्दश्यां अमुकांशजन्मजनितसर्वा
रिष्टतिरसवद्वाराश्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशांतिंकरिष्येइतिसंकल्प्य ॥ तदंगगणपतिपूजनस्वस्तिपुण्याहवाचनमातृका
पूजनंनांदिश्राद्धंआचार्यऋत्विग्वरणंचकरिष्ये ॥ एतानिकृत्वा ॥ पूर्वोक्तरीत्याशांत्युदकंसंपाद्य ॥ मूर्त्तीनामग्न्युत्तारण
मपिपूर्ववत्कृत्वा ॥ स्थंडिलेग्निस्थापनादिहविर्ग्रहणांतावाज्यभागादिपूर्वतंत्रपरिसमाप्य ॥ स्थंडिलपूर्वभागेस्वस्तिवाचनो

क्तरीत्याकलशपंचकंसंस्थाप्य ॥ तदुपरिस्वर्णनिर्मितांवृषारूढां श्रीरुद्रप्रतिमांसंस्थाप्य रुद्रंजलाशेतिमंत्रेणावाह्यैकादशा भिशेकपूर्वकंसंपूज्य ॥ अन्येषुकलशेषुयेपश्चाज्जुह्वतीतिवरुणमावाह्यपूजयेद्वारुणमंत्रैः ॥ ततोसर्वेसमुद्राःसरितस्तीर्थानि जलदानदारितिकलशेषुतीर्थान्यावाह्य आसनादिदक्षिणान्तैरुपचारैः यथाविभवंकांडानुसमयेन पदार्थानुसमयेनवापूजये दिति ॥ पूजांतेदेवदानव० ॥ इतिकलशेषुवरुणप्रार्थनांकृत्वा ॥ कलशचतुष्टयेसूक्तजपः ॥ आग्नेयकलशेस्वस्त्ययन सूक्तजपार्थं एकंऋत्विजमुपवेश्यतेनजपःकार्यः ॥ त्यमूषुवाजिनमितिसूक्तं० ॥ नैर्ऋत्यकलशेवरुणसूक्तजपार्थमेकऋत्विजं उपवेश्यतेनसूक्तजपःकार्यः ॥ अपनःशोशुचदघमिति० ॥ एवमेववायव्यांसहस्रबाहुरितिपुरुषसूक्तजपःकार्यः ॥ एव मेवैशान्यांरुद्रसूक्तजपः ॥ शांतिसूक्तंचमध्यमेकलशेजपेदिति ॥ एवंसूक्तानिजप्त्वा ॥ ततोग्नेरीशान्यांगृहांश्चसंस्थाप्य ॥ अग्नेर्दक्षिणतः उदकुंभंसदर्भंसंस्थाप्य मुंजरज्वाशिशुंवध्वाप्रत्नोहितिसूक्तेनाज्यहोमंकुर्यात् ॥ ततोहोमःग्रहहोमंविधाय ॥ रुद्रंप्रत्येकंअष्टोत्तरशतसंख्याकाभिरश्वत्थपलाशखादिरसमिद्भिश्चर्वाहुतिभिर्होमंविधाय ॥ तिलद्रव्येणसमस्ताभिर्व्याहृति भिरष्टोत्तरशतंहोमः ॥ सर्वासांशांतीनांहोमेषुउदकुंभेसंपातश्च ॥ तेनैवसूक्तेनांभिमंत्र्यतेनोदकेनाभिशेकः कार्यइति सर्वत्रज्ञेयं ॥ सर्वत्रतत्तद्देवतोद्देशेनत्यागः ॥ पुनःपूजनं ॥ बलिदानं ॥ पूर्णाहुतिः ॥ अभ्यात्तानाद्युत्तरतंत्रंसमाप्य ॥ पूर्वोक्तैःसूक्तैःसपत्नीकंसबालकंयजमानंकुंभोदकैःसिहव्याग्नेत्यादिभिः सूक्तैःरभिषिंचेयुः ॥ ततस्तद्वस्त्रपरित्यागः॥ यज- मानोविभूतिंधृत्वाकांस्यपात्रेसकुटुंबोस्वमुखमवलोक्य ॥ सदक्षिणंतत्पात्रंविप्रायदत्वाश्रेयोग्रहणंदक्षिणादिदानंआचार्याय कृतकर्मणःसांगतासिध्यर्थं गोदानंनिष्क्रयद्रव्यं आचार्यायाहंसंप्रददे ॥ ब्राह्मणभोजनसंकल्पः ॥ ऋत्विग्भ्योदक्षिणांदत्वा न्येभ्योभूयसींदद्यात् ॥ शांताद्योरितिशांतिसूक्तंजप्त्वायस्मात्केोशेति कर्मसमापनीयमंत्रंपठित्वा कृतंकर्मेश्वरार्पणंकुर्यादिति मुंजरज्यादिकंनदीफेनेषुनिक्षिपेत् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदीरविशंकरकृते कृष्णचतुर्दशी जननशांतिप्रयोगरश्मिर्द्विचत्वारिंशत् ॥ ४२ ॥ श्रीकृष्णार्पणमस्तु ॥

॥ अथसिनीवालीकुहुजननशांतिप्रयोगरश्मिः ॥ तत्रामावास्यायाः प्रथमोयामोसिनीवाली ॥ अंत्योपांत्य





यामौकुहुः ॥ मध्यवर्त्तिपंचयामादर्शइतिकेचित् ॥ अपरेतुचतुर्दशीमात्रयुतेहोरात्रेवर्त्तमानामावास्यासिनीवाली ॥ प्रतिपन्मात्रयुतेहोरात्रेवर्त्तमानाकुहुः ॥ तेनअमायावासरत्रयस्यक्षयाभावेचदर्शोनास्त्येव ॥ उदयात्पूर्वाहोरात्रवर्त्तमाना यासिनिवालित्वात् ॥ उत्तरोत्तरंवर्त्तमानायाकुहुत्वात् ॥ दिनक्षयेसर्वाप्यमादर्शसंज्ञानतत्रशिनीवालीकुहुभागौ ॥ केवल चतुर्दशींकेवलप्रतिपद्युक्तत्वाभावात् ॥ एवंदिनवृद्धौत्रिदिनस्पर्शे मध्यदिनस्थाषष्टीनाडिमितामावाभावास्यादर्शसंज्ञा ॥ चतुर्दश्यादियोगाभावात् ॥ पूर्वोत्तरदिनस्थौभागौसिनीवालीकुहुसंज्ञावित्याहुः ॥ इदंमयूखेस्पष्टम् ॥ सिनीवाल्यां प्रसूतास्याद्यस्यभार्यापशुस्तथा ॥ गजाश्वमहिषीचैवशक्रस्यापिश्रियंहरेत् ॥ गोपक्षीमृगदासीनांप्रसूतिरपितद्वत् ॥ कुहुप्रसूतिरत्यर्थंसर्वदोषकरीस्मृता ॥ यस्यप्रसूतिरेतेषांतयायुर्धननाशनं ॥ शांत्यभावेऽर्हतिपाठमात्रजातोनसंशयः ॥ अत्यागेनाशयेत्किंचित्स्वयंवानाशमाप्नुयात् ॥ ॥ अथप्रयोगः ॥ कर्त्ताऽस्यकुमारस्यसिनीवालीजननसूचितसर्वारिष्ट परिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं ग्रहमखपुरःसरंसिनीवालीजननशांतिंकरिष्ये ॥ तदंगगणपतिपूजनपूर्वकंस्वस्तिपुण्याह वाचनंमातृकापूजनंनांदिश्राद्धं शांतिकलशकरणंआचार्यादीनांवरणंचकरिष्ये ॥ एतानिकृत्वां ॥ कुहुजननेतुआदौगोतुख प्रसवकरणमितिकेचित् ॥ देशकालौस्मृत्वा अस्यकुमारस्यकुहुजननसूचितसकलारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांगगोक्तांकुहुजननशांतिंकरिष्ये ॥ तदंगगणपतिपूजनादि सर्वंपूर्ववत्संकल्प्य ॥ ततःआचार्यादिवरणं ॥ तेषां क्रमेणपूजनं ॥ ततोमूर्त्तित्रयस्याग्न्युत्तारणं ॥ ततःआचार्यःसपवित्रपाणिःदेशकालौसंकीर्त्य यजमानव्रतोहमाचार्यकर्म करिष्येइतिसंकल्प्य यदत्रसंस्थितमितिसर्षपविकीरणादिकंकृत्वा ॥ ततःस्वस्तिवाचनोक्तरीत्याकलशस्थापनं ॥ मध्य कलशेरुद्रंजलाशेतिरुद्रंसंस्थाप्यपूजयेत् ॥ चतुर्दिक्षुकलशेषुदक्षिणतः यतइंद्रेतिभर्गःत्रिष्टुप् ॥ इंद्रस्त्रिष्टुप्स्थाप० ॥ यतइंद्र भयामहेततोनोइतिइंद्रंस्थाप्यावाह्य पूजयेत् ॥ येपश्चाज्जुह्वतीतिमंत्रेणवरुणंपृथक्१ आवाह्य ॥ सर्वेसमुद्राइतितीर्थान्यावाह्य पूजयेत्तद्यथा ॥ आसनादिदक्षिणादानांतैपूजवंकृत्वा देवदानवइतिसंप्रार्थ्य ॥ चतुर्षुकलशेषुसूक्तजपः ॥ सूक्तानितु पूर्वोक्तानि ॥ तत्राग्नेयकलशेस्वस्त्ययनं ॥ वायव्यकलशेपुरुषसूक्तं ॥ नैर्ऋत्येशांतिसूक्तं ॥ इशानेरुद्रसूक्तं ॥ अथाचार्योग्नि

स्थापयित्वावरदानामानमग्निंप्रतिष्ठाप्य ॥ ईशान्यांगृहान्संस्थाप्य ॥ तत्रेशान्यांकलशंसंस्थाप्य ॥ तत्रवरुणमावाह्य संपूज्य ॥ तदुत्तरे आयंतुनइतिपितृन्संस्थाप्यपूजयेत् ॥ उदकुंभंअग्नेदक्षिणतःसंस्थाप्य पत्नोहीतिसंपातःपूर्ववत् ॥ उक्त रीत्याग्रहहोमविधाय ॥ रुद्रंअश्वत्थप्लक्षपलाशखादिरसमिदाहुतिभिर्हुत्वा प्रत्येकमष्टोत्तरशतहोमः ॥ आज्याहुतिभि स्तिलमात्रमाषाहुतिभिश्चसर्षपाहुतिभिर्हुत्वा ॥ इंद्रंपितॄनप्रत्येकमष्टाविंशतिसंख्याकाभिः पूर्वोक्तद्रव्याहुतिभिर्हुत्वा ॥ स्थापितदेवतानांपुनःपूजनं ॥ श्रीसूक्तहोमश्चबलिदानंइंद्रादिदिक्पालेभ्योदत्वा ॥ पूर्णाहूतिर्जुहुयात् ॥ तत्रपूर्णाहुति सूक्तंगृहमखप्रकरणेपूर्वमुक्तंज्ञेयं ॥ तत्रगृहकुंभसहितचतुःकलशजलंगृहीत्वा शतछिद्रकुंभेनिक्षिप्यतेनोदकेनशूर्पादिना सपत्निकंसमौंजपाशबद्धबालकंयजमानं परिधत्तैकनूतनवसनंऋतुशांत्युक्ताभिशेकमंत्रैर्ब्राह्मणाअभिशेकंकुर्युरिति ॥ तत आचार्यादिऋत्विग्भ्योगवादिदानानिदद्यात् ॥ तेनांतेपृथक्दक्षिणादानंनकार्यं ॥ अतएवात्रगवादेर्दक्षिणारूपत्वात्स दक्षिणंदानंनभवति ॥ अन्यत्रदशदानादीनांसदक्षिणंदानंकार्यम् ॥ दानानितु ॥ गोदानंवस्त्रदानंचसुवर्णंचोर्वरांशुभां ॥ दशदानानिचोक्तानिक्षीरमाज्यंगुडस्तथा ॥ आज्यावेक्षणमेतानितत्तन्मंत्रैश्चकारयेत् ॥ क्रमेणदानानिदद्यात् ॥ देशकालौ स्मृत्वामयाकृतस्यकर्मणः साद्गुण्यार्थंआचार्यादिऋत्विग्भ्यो दक्षिणात्वेनगवादिविहितदानानिकरिष्ये ॥ आचार्यादीन् संपूज्य दानवाक्यं ॥ गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ इमांगांदक्षिणात्वेन आचार्यायतुभ्यमहंसंप्रददे ॥ एवंसर्वत्र ॥ अथवस्त्रदानं ॥ शरण्येसर्वलोकानांलज्जायारक्षणंपरं ॥ सुवेषधारिवस्त्रत्वमतः शांतिंप्रयच्छमे ॥ इदंवस्त्रत्रयंदक्षिणात्वेन अमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ अथसुवर्णं ॥ हिरण्यगर्भगर्भस्थंइति हिरण्यंदत्वा ॥ अथभूमिदानम् ॥ सर्वभूताश्रया भूमिर्वराहेणसमुद्धृता ॥ अनंतसस्यफलदाह्यतःशांतिंप्रयच्छमे ॥ इमांभूमिं दक्षिणात्वेनअमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ अथदशदानानि ॥ तत्रमंत्रः यज्ञसाधनभूतायाविश्वस्यौघप्रणाशिनि ॥ विश्वरूपा० ॥ अथभूमिं० ॥ सर्वस्या० ॥२॥ अथतिलाः ॥ महर्षेर्गोत्रसंभूताकश्यपस्यतिलास्मृताः ॥ तस्मादेषांप्रदाने नममपापंव्यपोहतु ॥ अथहिरण्यंहिरण्यगर्भ० ॥ अथआज्यं ॥ कामधेनुषुसंभूतंसर्वक्रतुषुसंस्थितं ॥ देवानामाज्यमाहार





मतःशांतिंप्रयच्छमे ॥ अथवस्त्रं ॥ शरण्ये० प्रयच्छमे ॥६॥ अथधान्यं ॥ सर्वदेवमयंधान्यं सर्वोत्पत्तिकरंमहत् ॥ प्राणीनां जीवनोपायमतःशांतिंप्रयच्छमे ॥७॥ अथगुडदानम् ॥ यथादेवेषुविश्वात्माप्रवरश्चजनार्दनः ॥ सामवेदस्तुवेदानांमहादेव स्तुयोगिनां ॥ प्रणवःसर्वमंत्राणांस्त्रीणांचपार्वतीयथा तथारसानांप्रवरसदेवेक्षुरसोत्तमः ॥ ममतस्मात्परांलक्ष्मींददस्वगुड सर्वदा ॥८॥ अथरौप्यं ॥ प्रीतीयतःपितॄणांचविष्णुशंकरयोःसदा ॥ शिवनेत्रोद्भवंरूप्यमतःशांतिंप्रयच्छमे ॥ ९ ॥ अथलवणं ॥ यस्मादन्नरसाःसर्वेनोत्कृष्टालवणंविनाशंभोः प्रीतिकरंनित्यमतः शांतिंप्रयच्छमे ॥१०॥ इतिदशदानानि ॥ ततःक्षीरंदद्यात् ॥ क्षीरजातस्तथाशंखःक्षीरादमृतसंभवः ॥ क्षीरात्क्षीरोदवत्कीर्त्तिःक्षीरेप्राणस्यसंभवः ॥ तस्मात्क्षीरप्रदाने नह्यतःशांतिंप्रयच्छमे ॥ अथाज्यकामधेनु० ॥ २ ॥ अथगुडं ॥ यथादेवे० ॥ सामवे० ॥ प्रणव० ॥ यथा० ॥ तथा० ॥ सर्वदा० ॥ ततआज्यपूर्णंकांस्यपात्रेस्वरूपंपश्यतिसकुटुंबः प्रतिरूपंनिरीक्ष्यदद्यात् ॥ आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंपरं ॥ आज्यंसुराणामाहारआज्येदेवाःप्रतिष्ठिता ॥ इदंआज्यपात्रंदक्षिणात्वेनअमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ एतानि दक्षिणात्वेनदेयानि ॥ अथतेषांमानं ॥ सुवर्णमानंगोचर्मगोचर्मनामहस्ता २९००० ॥ आज्यस्यचत्वारिंशत्पलानि ॥ वासःसहितत्वम् ॥ धान्यस्यपंचद्रोणाः ॥ एवंगुडलवणयोः ॥ एतावत्प्रमाणाशक्तौनित्यनैमित्तिकेयथाशक्तिदेयानि ॥ यथाशक्तिहिरण्यंवातत्प्रतिनिधित्वेनहिरण्यगर्भेतिमंत्रेणदेयं ॥ नैमित्तिकादेरकरणेप्रत्यवायात् ॥ अभ्युदयादिफलार्थंतु दशदानानिशांतिंविनानकार्याणीतेभाति ॥ अत्रप्रधानदेवतापूजोत्तरंपाठक्रमात् ॥ ऋत्विग्भ्योगवादिनंदक्षिणारूपत्वा दानानिकेचित्कुर्वंते ॥ ममतुइदकविषये अर्थक्रमेणअंतेदक्षिणादानमितिभाति ॥ कमलाकरेप्याशयएवमेव ॥ ततःपूर्ण पात्रादिकंदत्वा अभ्यात्तानाद्युत्तरतंत्रंपरिसमाप्य अग्न्यर्चनांतेविभूतिंधृत्वास्थापितदेवतानामुत्तरपूजनंविसर्जनं श्रेयोग्रहणं प्रतिमादानंच कृत्वा यथाशक्तिद्विजानुज्ञयाब्राह्मणानन्यांश्चांधपंग्वादीन्भोजयेत् यत्मात्क्रोशेतिपठित्वा ॥ शांताद्यौरिति शांतिंपठित्वा कृतकर्मेश्वरार्पणंकुर्यात् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौ रविशंकरकृतेसिनीवालीकुहुजननशांति प्रयोगरश्मिःद्विचत्वारिंशत् ॥ ४२ ॥

॥ ॐ श्रीगणेशायनमः ॥ अथदर्शशांतिप्रयोगरश्मिप्रारंभः ॥ अथातोदर्शजातानांमातापित्रोर्दरिद्रता ॥ तद्दोषपरिहारार्थंशांतिरुच्यामितेसदा ॥ १ ॥ ॥ अथप्रयोगः ॥ अथकर्त्तादेशकालौसंकीर्त्य अस्यबालकस्यदर्शजननजनितसर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थंदर्शजननशांतिंकरिष्ये ॥ तत्रादौब्रह्मजज्ञानंअव्यसश्चेतिपठित्वा गणेशांबिकयोःपूजनादिब्राह्मणवरणांतंकृत्वा ॥ अथाचार्यःत्यमूषुवाजिनमितिस्वस्त्ययनसूक्तपठित्वा ॥ स्थंडिलात्पूर्वभागेसर्वतोभद्रपर्याप्तंस्थलंत्यक्त्वातदग्रात्पूर्वेकलश स्थापनक्रमेणकलशंस्थापयेत् ॥ तत्रतीर्थोदकंपूरयित्वा पंचगव्यमंत्रैःपृथक्पृथक्पंचगव्यानिनिक्षिप्य ॥ वटोदुंबराश्वत्थाम्रनिंबमूलानांत्वचरौषधी मंत्रेणनिक्षिप्य ॥ एवंक्रमेणपूर्णपात्रादिस्थापनम् ॥ आयांत्वितिसमुद्रादितीर्थान्यावाह्य आसनादिदक्षिणा दानांतैरुपचारैःसंपूज्य ॥ अत्रकेचित्पूर्णपात्रस्थापनंनकुर्वंतिएतैर्मंत्रैरभिमंत्रयति ॥ आपोहिष्ठासूक्त ॥ अपनःशोशुचदघमितिसूक्तं० ॥ हिरण्यवर्णाइतिसूक्तं० ॥ इत्यभिमंत्र्य ॥ कलशाग्नयोर्मध्ये सर्वतोभद्रंविरच्यब्रह्मादि मंडलदेवतास्वस्वमंत्रैर्नाममंत्रैर्वाआवाह्यसंस्थाप्य ॥ ॐ तदस्त्वितिप्रतिष्ठाप्यसंपूज्यतदुपरिआचारात् धान्यराशिंकृत्वा तत्रकृताग्न्युत्तारणपूर्वकं मूर्त्तित्रयंस्थापयेत् ॥ मध्येसुवर्णप्रतिमां ॥ येबोदेवोत्यथर्वापितॄन्जगती तीतॄन्स्थापनेविनियोगः ॥ ॐ येबोंदेवाःपितरोयेचंपुत्रासचेंतसोमेश्रृणुतेदमुक्तं ॥ सर्वेंभ्योवःपरिददाम्येतंस्वस्त्येनंजरसेवहाथ ॥ इतिपितॄन् ॥ तद्दक्षिणेरजतप्रतिमायांशंकधूममितिमंत्रेणसोमंस्थापयेत् ॥ तदुत्तरतस्ताम्रप्रतिमायांविषासहीतिमंत्रेणसूर्यंस्थापयेत् ॥ ततःषोडशोपचारैःपूजयेच ॥ ततोवरदनामानमग्निंप्रतिष्ठाप्य ॥ सर्वतोभद्रमंडला दीशान्यांग्रहपीठदेवतास्थापनं पूजनांतंकृत्वा अभ्याताधानादिपूर्ववंतंत्राज्यभागौहुत्वा ॥ त्यागेकृते ॥ आयुरारोग्यसिध्यर्थं सर्वारिष्टप्रशांतये ॥ तेषामायुः श्रियेचैवशांतिहोमं करोम्यहम् ॥ आदावुदकुंभं पत्नोहीतिसंपात्याभिमंत्र्य ॥ पूर्वोक्तरीत्याग्रहहोमंकृत्वा पितॄन्अष्टोत्तरशतचर्वाहुतिभिः समिदाहुतिभिराज्याहुतिभिर्वा ॥ एवमेवसूर्यसोमयोरपिहोमंविदध्यात् ॥ ततोपुनःपूजनं ॥ बलिदानंपूर्णाहुतिश्चस्विष्टकृदादिउत्तरतंत्रंसमाप्य अभिशेकःकार्यइत्येकःपक्षः ॥ अपरेतुपूर्वंमातापितृशिशूनांपूर्ववदभिशेकः ॥ मौंजीपाशबंधनंच ॥ पक्षयोर्मध्येएकपक्षांगींकृत्यअभिशेकः









कार्यः ॥ तत्रलक्ष्मीसूक्तेनाभिषेकेतिविशेषः ॥ शेषंपूर्ववत् ॥ कृष्णांधेनुमाचार्यायदत्वा ॥ स्थापितदेवतोत्थापनंकृत्वाप्रतिमादिकंसर्वद्रव्यमाचार्यायदत्वा ॥ ब्राह्मणान्भोजयित्वा अन्येभ्यःभूयसीदत्वा स्वस्तिवाचनंकारयित्वा यस्मात्कोशेतिकर्मसमापनीयमंत्रंपठित्वा कृतंकर्मेश्वरार्पणंकृत्वासुरुद्भिःसहसंभुंजीतनदीफेनेषु मौंजीपाशमोचनंकुर्यात्कर्मणानेनभगवानकर्मांगदेवताप्रीयतांनममेति ॥ ॥ इतिश्रीमदथर्ववेगृह्यसूत्रप्रयोगभानौषद्पन्नागर द्विवेदिरविशंकरकृतेदर्शजननशांतिप्रयोगरश्मिश्चतुश्चत्वारिंशत् ॥४४॥

॥अथनक्षत्रशांतयः ॥ ॥ तत्रादौमूलशांतिप्रयोगरश्मिप्रारंभ ॥ तत्रादौमूलनक्षत्रफलं ॥ पिताम्रियतेमूलाद्येकन्यापुत्रजनिर्यदि ॥ द्वितीयेजननीनाशोधननाशस्तृतीयके ॥ चतुर्थेकुलशोनःस्याच्छांतिःकार्याप्रयत्नतः ॥ क्वचिच्चतुर्थचरणःशुभउक्तोमनीषिभिः ॥ एवंचदुहितुर्ज्ञेयंमूलजातफलंबुधैः ॥ केचित्तुकन्याहंतिमूलर्क्षेपितरंमातरंतथा ॥ मूलजाश्वसुरंहंतिश्वश्रूमाश्लेषयासुता ॥ ज्येष्ठायांतुयातिज्येष्ठंविशाखोत्थातुदेवरं ॥ शांतिर्वापुष्कलास्याच्चेत्तहिदोषोनविद्यते इत्याहुः ॥ अभुक्तमूलसंभावंपरित्यजेत्तुबालकं ॥ समाष्टकंपिताथवानतन्मुखंविलोकयेत् ॥ तदाद्यपादकेपिताविपद्यतेजनन्यथतृतीयकेधनक्षयश्चतुर्थकेशुभावहः ॥ अथअभुक्तमूललक्षणं ॥ ज्येष्ठांतेघटिकाद्वयं ॥ अभुक्तमूलमथवासंधिनाडिचतुष्टयं ॥ वृषालिसिंहेचघटेचमूलंदिविस्थितं युग्मतुलांगनात्ये ॥ पातालगंमेषधनुःकुलिरनक्रेषुमर्त्येष्वितिसंस्मरंति ॥ वृषभवृश्चिकसिंहकुंभलग्नस्थितमूलस्वर्गस्थितं ॥ मिथुनतुलकन्यामीनलग्नस्थितमूलंपाताललोकेस्थितम् ॥ मेषधनकर्कमकरलग्नस्थितमूलंमृत्युलोकेस्थितं ॥ एतत्लग्नफलं ॥ स्वर्गेमूलेभवद्राज्यंपातालेचधनागमः ॥ मृत्युलोकेयदामूलंतदाशून्यंसमादिशेत् ॥ नवमासंसव्यदोषोमूलदोषोष्टवर्षकं ॥ ज्येष्ठामासान्पंचदशतस्यदर्शनवर्जनं ॥ व्यतिपातेंगहानिःस्यात्परिघोमृत्युमादिशेत ॥ वैधृतौपितृहानिःस्यान्नष्टेभावंधतांव्रजेत् ॥ मूलेसमूलनाशःस्यात्कुलनाशोधृतौभवेत् ॥ विलतांगैवहीनेचसंध्ययोरुभयोरपि ॥ तद्वत्सदंतजातस्तुपादजातस्तथैवच ॥ तस्माच्छांतिंप्रकुर्वीतग्रहाणांक्रूरचेतसां ॥ व्यतीपातादौग्रहमखसहितातत्रशांतिरावश्यंकार्या इतरशांतिषुग्रहमखोनावश्यकइत्यर्थः ॥ अभुक्तमूलोत्पन्नोवर्षाष्टकंशिशुत्यागः ॥

तदनंतरंशांतिः ॥ तदन्यमूलोत्पत्तौविधिनामूलशांतिंकरिष्ये ॥ द्वितीयादिपादोत्पन्नोसंकल्पेतथोहः ॥ देशकालौस्मृत्वा
ममास्यकुमारस्यमूल प्रथमचरणोत्पत्तौसूचितारिष्ट निरसनार्थंग्रहमखां शौनकोक्तद्वादशाहे अन्यविहितागामिमूलयुते
शुभदिनेवागोप्रसवशांतिंकृत्वा ॥ कन्याजननेतुममास्याकुमार्याः मूलप्रथमचरणोत्पत्तौइतिविशेषः ॥ तत्रादौनिर्विघ्नता
सिध्यर्थंमहागणपतिपूजनपूर्वकंस्वस्तिपुण्याहवाचनं नांदिश्राद्धंआचार्यादिकर्मकरिष्येइतिसंकल्प्य ॥ नांदिश्राद्धांतंकृत्वा ॥
आचार्यंब्रह्माणं ॥ तदस्यमृत्विजश्चाष्टौचतुरोवावृत्वा ॥ मधुपर्कवस्त्रालंकारादिभिर्यथाविभवमर्चयेत् ॥ ततःआचार्यः ॥
पवित्रपाणिर्जीवास्थेतिविधिवदाचम्य अस्मीन्सग्रहमखमूलशांत्याख्ये कर्मणिआचार्यकर्मकरिष्ये ॥ ॐयदत्रसंस्थित
मितिमंत्रेणसर्षपविकीरणादियागभूमौकृत्वा ॥ एतोन्विंद्रंस्तवामेतितिसृभि ऋग्भिर्जलमभिमंत्र्यतेनापोहिष्ठेतितृचेनतां
भूमिंप्रोक्ष्य ॥ ततःप्रतिमाग्न्युत्तारणंकृत्वा ॥ स्थंडिलादीशान्यांस्वस्तिकंविरच्य ॥ ततःस्वस्तिवाचनोक्तरीत्यातत्रोक्त
मंत्रैश्चतुरःकलशान्गंधादिना पूजयित्वाचतुर्दिक्षुयथाक्रमंसंस्थाप्याः ॥ प्रतिकलशंमंत्रावृत्तिः ततःमध्यकलशस्थपूर्णपात्रो
परिसाष्टदलरक्तवस्त्रे सुवर्णनिर्मितप्रतिमायां रुद्रंजलाशभेषजमिति पूर्वोक्तमंत्रेणरुद्रमावाह्य तेनैवमंत्रेणशोडषोपचारैः
संपूज्य ॥ चतुर्षुकुंभेषुयेपश्चाज्जुहतीतिमंत्रेणवरुणमावाह्यपंचोपचारैःसंपूज्य ॥ ततोमध्यमकुंभेजपः ॥ एकऋत्विक्रुद्र
कुंभंस्पृष्ट्वाचत्वारिरुद्रसूक्तानिजपेत् ॥ रुद्रंजलाषभेषजमितिमंत्रमष्टोत्तरशतंसहस्रंजपेत् ॥ अथपूर्वादिदिक्षुचतुर्षुवरुणकुंभेषु
सूक्तजपःतानि ॥ ततःपूर्वकुंभे ॥ इन्द्रस्यबाहूस्थविरौवृषाणौचित्राइमावृषभौ पारयिष्णू तौयेक्षेप्रथमोयोग आगतेयाभ्यां
जितमसुराणांस्व१र्यत ॥ ॐआशुःशिशानोवृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनां ॥ संक्रंदनोनिमिष एकवीरःशतं
सेनाअजयत्साकमिंद्रः ॥ १ ॥ संक्रंदनेनानिमिषेणजिष्णुनायोध्येनदुश्च्यवनेनधृष्णुना ॥ तदिंद्रेणजयततत्सहध्वंयुधोनर
इषुहस्तेनधृष्णा ॥ २ ॥ सइषुहस्तैः सनिषंगिभिर्वशीसंस्रष्टा सयुधइंद्रोगणेन ॥ संसृष्टजित्सोमपाबाहुशर्ध्यु१ग्रधन्वा
प्रतिहिताभिरस्ता ॥ ३ ॥ बलविज्ञायस्थविरःप्रवीरः सहस्वान्वाजिसहमानउग्रः ॥ अभिवीरोअभिसत्वासहोजि





ज्जैत्रमिंद्ररथमातिष्ठगोविदं ॥ ४ ॥ इमंवीरमित्येका० ॥ ५ ॥ अभिगोत्राणिसहसागाहमानोदायउग्रःशतमन्युरिंद्रः ॥
दुश्च्यवनःपृतनाषाडयोध्यो३स्माकंसेनाअवतुप्रयुत्सु ॥ ६ ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँअपबाधमानः ॥ प्रभंजन
छत्रून्प्रमृणंनमित्रानस्माकमेध्यविताततूनाम् ॥ ७ ॥ इंद्रएषांनेताबृहस्पतिर्दक्षिणायज्ञः पुरएतुसोमः ॥ देवसेनानामभि
भंजतीनांजयंतीनांमरुतोयंतुमध्ये ॥ ८ ॥ इंद्रस्यवृष्णोवरुणस्यराज्ञआदित्यानांमरुतांशर्धउग्रम् ॥ महामनसांभुवन
च्यवानांघोषोदेवानांजयतामुदस्थात् ॥ ९ ॥ अस्माकमिंद्रःसमृतेषुध्वजेष्वस्माकंयाइषवस्ताजयंतु ॥ अस्माकंवीरा
उत्तरेभवंत्वस्मांउदेवाअवताहवेषु ॥ १० ॥ ॥ अथदक्षिणदिक्स्थितवरुणकुंभे ॥ ॐपुनंतुमादेवजनाःपुनंतुमनवोधिया ॥
पुनंतुविश्वाभूतानिपवमानःपुनातुमाम् ॥ १ ॥ पवमानःपुनातुमांक्रत्वेदक्षायजीवसे ॥ अथोअरिष्टतातये ॥२॥ उभाभ्यां
देवसवितःपवित्रेणसवेनच ॥ अस्मान्पुनीहिचक्षसे ॥ ३ ॥ अग्नेरिवास्यदहतएतिशुष्मिणउतेवमत्तोविलपन्नपायति ॥
अन्यमस्मदिछतुकंचिदव्रतस्तपुर्वधायनमोअस्तुतक्मने ॥ ४ ॥ नमोरुद्रायनमोअस्तुतक्मने नमोराज्ञेवरुणायत्विषीमते ॥
नमोदिवेनमःपृथिव्यैनम ओषधीभ्यः ॥ ५ ॥ अयंयोअभिशोचयिष्णुर्विश्वारूपाणिहरिताकृणोषि ॥ तस्यैतेवरुणाय
बभ्रवेनमःकृणोमिवन्यायतक्मने ॥ ६ ॥ ॥ अथपश्चिमस्थवरुणकुंभे ॥ उपप्रागाद्देवोअग्नीरक्षोहामीवचातनः ॥ दहन्न
पद्वयाविनोयातुधानान्किमीदिनः ॥ १ ॥ प्रतिदहयातुधानान्प्रति देवकिमीदिनः ॥ प्रतीचीकृष्णवर्तनेसंदहयातुधान्यः
॥२॥ याशशापशपनेनयाघंमूरमादधे ॥ यारसस्यहरणायजातमारेभेतोकमत्तुसा ॥ ३ ॥ पुत्रमत्तुयातुधानीःस्वसारमुत
नप्त्यम् ॥ अधामिथोविकेश्यो३विघ्नंतांयातुधान्यो३वितृह्यंतामराय्यः ॥ ४ ॥ ॥ ततउत्तरकुंभे ॥ रक्षोहणंवाजिन
माजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्म ॥ शिशोनोअग्निः क्रतुभिःसमिद्धःसनोदिवासरिषःपातुनक्तम् ॥ १ ॥ अयोदंष्ट्रो

अर्चिषायातुधानानुपस्पृश जातवेदः समिद्धः ॥ आजिह्वया मूरदेवान्रभस्व क्रव्यादो वृष्ट्वापिधत्स्वासन् ॥ २ ॥ उभोभयां
विन्नुपधेहि दंष्ट्रौ हिंस्रः शिशानोवरंपरंच ॥ उतान्तरिक्षे परियाह्यग्ने जंभैः संधेह्यभियातुधानान् ॥ ३ ॥ अग्नेत्वचंयातुधान
स्यभिंधिहिंस्राशनिर्हरसाहंत्वेनं ॥ प्रपर्वाणिजातवेदः शृणीहिक्रव्याक्रविष्णुर्विचिनोत्वेनम् ॥ ४ ॥ यत्रेदानींपश्यसि
जातवेदस्तिष्ठंतमग्नउतवाचरंतं ॥ उतान्तरिक्षेपतंतंयातुधानंतमस्ताविध्यशर्वाशिशानः ॥ ५ ॥ यज्ञैरिषूःसंनममानोअग्ने
वाचाशल्यांअशनिभिर्दिहानः ॥ ताभिर्विध्यहृदयेयातुधानान्प्रतीचोबाहून्प्रतिभङ्ध्येषाम् ॥ ६ ॥ उतारब्धानस्पृणुहि
जातवेदउतारेभाणांऋष्टिभिर्यातुधानान् ॥ अग्नेपूर्वोजंनिहिषोशुचानआमादःक्ष्विंकास्तमदंत्वेनीः ॥ ७ ॥ इहप्रब्रूहि
यतमःसोअग्नेयातुधानोयइदंकृणोति ॥ तमारभस्वसमिधायविष्ठनृचक्षसश्चक्षुषेरंधयेनम् ॥ ८ ॥ तीक्ष्णेनाग्नेचक्षुषारक्ष
यज्ञंप्रांचंवसुभ्यःप्रणयप्रचेतः हिंस्रंरक्षांस्यभिशोशुचानंमात्वादभन्यातुधानान्नृचक्षसः ॥ ९ ॥ नृचक्षारक्षःपरिपश्यविक्षुत
स्यत्रिणिप्रतिशृणीह्यग्रा ॥ तस्याग्नेःपृष्टीर्हरसाशृणीहित्रेधामूलंयातुधानस्यवृश्च ॥ १० ॥ त्रिर्यातुधानःप्रसितिंतएत्वृतंयो
अग्नेअनृतेनहंति ॥ तमर्चिषास्फूर्जयन् जातवेदसमक्षमेनंगृणतेनियुंग्धि ॥ १ ॥ यदग्नेअद्यमिथुनाशपातोयद्वाच
स्तृष्टंजनयंतरेभाः ॥ मन्योर्मनसःशरव्या३जायतेयातयाविध्यहृदयेयातुधानान् ॥ २ ॥ पराशृणीहितपसायातुधानान्
पराग्नेरक्षोहरसाशृणीहि ॥ परार्चिषामूरदेवान्शृणीहि परासुतृपःशोशुचतःशृणीहि ॥ ३ ॥ पराद्यदेवावृजिनंशृणंतु
प्रत्यगेनंशपथायंतुसृष्टाः ॥ वाचास्तेनंशरवऋच्छंतुमर्मन् विश्वस्यैतुप्रसितिंयातुधानः ॥ ४ ॥ यःपौरुषेयेणक्रविषासमंक्ते
योअश्व्येनपशुनायातुधानः योअघ्न्यायाभरतीक्षीरमग्नेतेषांजीर्षाणिहरसापिवृश्च ॥ ५ ॥ विषंगवांयातुधानाभरंतामावृश्चं
तामदितयेदुरेवाःपरैणान्देवःसवितादंदातुपराभागमोषधीनांजयंताम् ॥ ६ ॥ संवत्सरीणंपयउस्रियायास्तस्यमाशीद्यातुधानो





नृचक्षः ॥ पीयूषमग्नेयतमस्तितृप्सात्प्रत्यंचमर्चिषाविध्यमर्मणि ॥ ७ ॥ सनादग्नेमृणासियातुधानान्नत्वारक्षांसिपृतनासु
जिग्युः सहमूराननुदहक्रव्यादोमातेहेत्यामुक्षतदैव्यायाः इत्येकां ॥ ८ ॥ त्वन्नोअग्नेअधरादुदक्तस्त्वंपश्चादुत्तरक्षापुर
स्तात् ॥ प्रतितेतेअजरासस्तपिष्ठाअघशंसंशोशुचतोदहंतु ॥ ९ ॥ पश्चात्पुरस्तादधरादुतोत्तरात्कविःकाव्येनपरि
पाह्यग्ने ॥ सखासखायमजरोजरिम्णेअग्नेमर्ता१अमर्त्यस्त्वन्नः ॥ १० ॥ ॥इतिसूक्तानिपठेत् ततःस्थापितंभोत्तर
तश्चतुर्विंशतिदलंपंचकंपंचवर्णैःकृत्वातत्रव्रीहयः निक्षिप्यतत्रव्रीहिषुसौवर्णरजतंताम्रंमृन्मयंवाकुंभंविधिनास्थापयित्वा ॥
तत्रइमंगंगेतिजलमापूर्य ॥ गंधद्वारामितिगंधंक्षिप्त्वा ॥ तत्रशतमूलानिनिक्षिपेत् ॥ तदभावेविष्णुक्रांतासहदेवी ॥
तुलसी ॥ सतावरी ॥ प्रक्षिप्य ॥ कुशान् ॥ कुंकुमंचनिक्षिप्य ततःपूर्णपात्रांतंकृत्वोपरिवस्त्रे अष्टदलंकृत्वाकर्णिकायां ॥
अभितंनिर्ऋतिमित्यथर्वकिण्वोनिर्ऋतिर्गायत्रीनिर्ऋतिस्थापनेविनियोगः ॥ ॐअभितंनिर्ऋतिर्धत्तामश्वमिवाश्वाभिधान्या ॥
मल्वोयोमह्यंक्रुध्यतिसउपाशान्नमुच्यते ॥ १ ॥ निर्ऋतिंसांगंसपरिवारंसायुधंसशक्तिकंआवाहयामि ॥ तद्दक्षिणेत्वातार
मिंद्रमितिइंद्रंआवाहयामि ॥ उत्तरेयेपश्चाज्जुह्वतीत्यपःआवाहयामि ॥ ततःप्रागादितश्चतुर्विंशतिषुभूमिस्थदलेषुउत्तराषाढा
धनुराधांतानिनक्षत्राणितद्देवतावास्थापयेत् ॥ देवताश्चपूगिफलेषु अक्षतपुंजेषुवाआवाहयेत् ॥ सयथा ॥ ॐविश्वेभ्यो
देवेभ्योनमः ॥ विश्वान्देवानावाहयामि ॥ एवंसर्वत्र ॥ ॐविष्णवेनमः ॥ ॐवसुभ्योनमः ॥ ॐवरुणायनमः ॥ ॐ
अजैकपदेनमः ॥ ॐअहिर्बुध्न्यायनमः ॥ ॐपूष्णेनमः ॥ ॐअश्विभ्यांनमः ॥ ॐयमायनमः ॥ ॐअग्नयेनमः ॥
ॐप्रजापतयेनमः ॥ ॐसोमायनमः ॥ ॐरुद्रायनमः ॥ ॐआदित्यायनमः । ॐबृहस्पतयेनमः ॥ ॐसर्वेभ्योनमः ॥
ॐपितृभ्योनमः ॥ ॐभगायनमः ॥ ॐअर्यम्णेनमः ॥ ॐसवित्रेनमः ॥ ॐत्वष्ट्रेनमः ॥ ॐवायवेनमः ॥ ॐइंद्राग्निभ्यां
नमः ॥ ॐमित्राभ्यांनमः ॥ २४ ॥ इत्यावाहनांतेपूर्वादिक्रमेणलोकपालान् तत्तन्मंत्रेणनाममंत्रेणवास्थापयेत् ॥ तद्यथा ॥ पूर्वे
इंद्रायनमः इंद्रंआवाहयामि ॥ एवमग्रेपि ॥ आग्नेय्यांअग्नयेनमः अग्निंआवाहयामि ॥ दक्षिणेयमायनमः यमंआवाहयामि ॥

नैर्ऋत्येनैर्ऋतयेनमः नैर्ऋतिंआवाहयामि ॥ ४ ॥ पश्चिमेवरुणायनमः वरुणंआवाहयामि ॥ ५ ॥ वायव्यांवायवेनमः वायुंआवाहयामि ॥ ६ ॥ उत्तरेसोमायनमः सोमंआवाहयामि ॥ ७ ॥ ईशान्यांइशानायनमः इशानंआवाहयामि ॥ ॥८॥ ततःतदस्त्विति प्रतिष्ठाप्य सुप्रतिष्ठितमस्तु ॥ इतिवदेत् ॥ अत्रावसरेपूजनंनकार्यं ॥ उदकुंभस्थापनांतेपूजनं ॥ ततोनैर्ऋतिप्रदेशेस्थंडिलेवरदनामान मग्निंस्थापयित्वातदीशान्यां ग्रहानस्थापयित्वा संपूज्यतदीशान्यांकलशंसंपूज्य ॥ देवदानवेतिप्रार्थयेच्च ॥ ततोभ्यात्तानादिपूर्वतंत्रंकृत्वोक्तरीत्या प्रत्नोहोत्युदकुंभंसंपात्याभिमंत्र्यग्रहहोमंविधाय प्रधान होमंकुर्यात् ॥ तत्रप्रतिदैवतंत्यागपूर्वकंहोमः ॥ ततोअभितंनिर्ऋतिमंत्रेणघृतमिश्रपायससमिच्चर्वाज्यैरष्टोत्तरसहस्रमष्टोत्तर शतंवाजुहुयात् ॥ त्रातारमिंद्रमितिमंत्रेणतदेवद्रव्यैरिंद्रप्रीतयेऽष्टोत्तर शताष्टाविंशतिवाजुहुयात् ॥ येपथ्यादितिमंत्रेणएतै रेवद्रव्यैः पूर्वोक्तसंख्ययावरुणप्रीतयेजुहुयात् ॥ चतुरवदानविधिनाहविर्गृहीत्वा चतुर्विंशतिनक्षत्रदेवता अष्टाष्टचर्वाहुति भिर्होमः । ततोरक्षोघ्नसूक्तेनप्रत्यृचमष्टाष्टसंख्ययापायसहोमः ॥ रुद्रंजलाशमितिहोमः ॥ वास्तोष्पतइतिहोमः ॥ पूर्वोक्त क्षेत्राधिपतिमंत्रेणहोमः श्रीसूक्तेनप्रतिमंत्रंहोमः ॥ सर्वत्रसमिदाज्यचरून् अष्टाष्टसंख्ययाहोमंकुर्यात् ॥ सर्वत्रतत्तद्देवता प्रीतयेत्यागश्च ॥ सर्वत्रशांत्युदकेसंपातश्च ॥ एवंहोमंसमाप्य ॥ स्थापितदेवतानांपुनःपूजनं ॥ बलिदानंचकार्यं ॥ ततो पूर्णाहुतिः ॥ तच्छमाप्नौस्विष्टकृदाद्यभ्यात्तानाद्युत्तरतंत्रम् ॥ ततोयजमानः रुद्रकलशंदक्षिणतःस्पृशन् ॥ रुद्रंजलाषभेषज मितिमंत्रंशतवारंजपेत् ॥ ततोरुद्रसूक्तानिपूर्वं रजपेत् ॥ अथरुद्रकुंभनिर्ऋतिकुंभःगतदेवताः पंचोपचारैःसंपूज्यअभिषे कार्थंप्रार्थयेत् ॥ भगवत्प्रसादेनयजमानाभिषेकंकरिष्ये ॥ अस्मिन्समयेग्रहपीठदेवतानांपंचोपचारैःपूजनं ॥ सर्वकलशो दकंपात्रांतरंगृहीत्वा सपत्नीकेयजमानेसापत्ये अभिषेकःकार्यः ॥ अभिषेकमंत्राः ॥ प्रत्नोहोतिसूक्तं ॥ १ ॥ अक्षीभ्या मितिसूक्तं ॥ २ ॥ शांताद्यौरितिसूक्तं ॥३॥ अपनःशोशुचदघमितिसूक्तं ॥४॥ अभित्वेतिसूक्तं ॥ ५ ॥ रक्षोहणमितिसूक्तं ॥६॥ आपोहिष्ठेतिसूक्तं ॥७॥ सुरास्त्वेतिपौराणश्लोकाः ॥ योसौवज्रधरोदेवोमहेंद्रोगजवाहनः ॥ मूलशांतंशिशोदोषं मातापित्रोर्व्यपोहतु ॥ योसौशक्तिधरोदेवो हुतभुग्मेषवाहनः ॥ सप्तजिह्वश्चदेवो मूलदोषंव्यपोहतु ॥ योसौदंडधरोदेवो





धर्मोमहिषवाहनः ॥ मूलशांतिंशिशोर्दोषंमातापित्रोर्व्यपोहतु ॥ योसौदंडधरोदेवोनिर्ऋतिराक्षसाधिपः ॥ प्रशामयतु मूलोत्थंदोषंगंडांतसंभवम् ॥ योसौपाशधरोदेवोवरुणश्चजलेश्वरः ॥ नरवाहःप्रचेतानेदोषंबालस्यशांतिदः ॥ योसौ निधिपतिर्देवःखड्गभृद्वाजिवाहनः ॥ मातृपित्रोःशिशोश्चैवमूलदोषंव्यपोहतु ॥ योसौपशुपतिर्देवःपिनाकीवृषवाहनः ॥ आश्लेषामूलगंडांतदोषमाशुव्यपोहतु ॥ विघ्नेशःक्षेत्रपोदुर्गालोकपालानवग्रहाः ॥ सर्वदोषप्रशमनंसर्वेकुर्वंतिशांतिदा ॥ इतिमंत्रैश्चाभिषेकंकृत्वा ॥ ततोरुद्रनिर्ऋतिशांतिकलशोदकेनान्येनशतच्छिद्रमंतर्धायाभिषिक्तो यजमानोधौतेवाससीपरि- धायतिलकंकृत्वा त्र्यायुषमितिमंत्रेणविभूतिंधृत्वा मुख्यदेवतापूजनं ॥ ॐउत्तिष्ठब्रह्मणस्पतेदेवांव्यग्नेनंबोधय ॥ आयुः प्राणंप्रजांपशुंकीर्तिंयजमानंचवर्द्धयइतिविसर्जनं ॥ ततश्श्रेयोग्रहणंदक्षिणादानानिकुर्यात् अथदक्षिणादानप्रकारः ॥ तत्र आचार्यायसवत्सांपयस्विनींधेनुंदक्षिणांदद्यात् ॥ ब्रह्मणेवृषभम् ॥ रुद्रजापिनेकृष्णमनड्वाहं ॥ रुद्रप्रतिमासोपस्करातत् कुंभश्च ॥ ऋत्विग्भ्योयथाशक्तिदक्षिणाःदद्यात् ॥ धेन्वनडुहोरसंभवेदशकर्षेपाणाधेनुअष्टावनडुहिस्मृता इतिमूल्यंदेयं यथाशक्तिवा ॥ शतंतदर्द्धंदशवापायसादीनाब्राह्मणान भोजयेत्शांतिपाठंजपित्वा यस्मात्कोशेतिपाठः ॥ कृतंकर्मेश्वरा र्पणंकुर्यादिति ॥ ॥ अथपूर्वमनुक्तंशतमूलाद्यत्रोच्यते ॥ स्वयमुत्पादयेत्प्रोक्षेत्मूलानांचशतंपिता ॥ मंगल्याश्चपवित्राश्च ओषध्यःकथयाम्यहं ॥ लक्ष्मणाशतमूलाचशिरोषेवेतसस्तथा ॥ सहकाश्वेतमूलाचविष्णुक्रांताथशंखिनी ॥ सर्पाक्षी मीननेत्राचपुत्रापारीकृतांजली ॥ पालाशोबिल्वकश्चैवरोचनाचंदनद्वयम् ॥ कृष्णमांसीशिरोशीरंचालकंचतथामला ॥ गोजिह्वातुलसीइष्याशतंपुष्पीसलांगली ॥ ब्रह्मदंडोद्रोणपुष्पीप्रियंगुःसितसर्षपाः ॥ पिप्पलीकाकजंघाचत्रायमाणाहुहू रतथा ॥ ज्योतिष्मतीचगांधारीनिर्गंधा पूर्णकोषिका ॥ भगक्षमासुभद्राचगुडुचीसेंद्रवारुणी ॥ अलंबुकारुदंतीचकदली केतकीतथा ॥ गोक्षरंशतपर्वाचअरिष्टिकापराजिता छिन्नरुहाशतपर्वानिकुंभाचसुवर्चला ॥ अश्वगंधाहस्तिकर्णाहरिद्रा द्वितयंतथा ॥ उष्ट्रोमधुकारश्चअश्वत्थोवकुलस्तथा ॥ सर्जराचार्यमार्गीयमंद्रारश्चातिमुक्तकः ॥ मालतीस्वर्णपुष्पाच श्रीपर्णीश्रीफलंतथा ॥ दर्भमूलंकरवीरमदयंतीविकंकतः ॥ पाटलासुरदातुश्चअर्द्धमूदनिकस्तथा ॥ फलंमन्मथवृक्षस्य

पलाशस्यचपल्लवाः ॥ रास्नानदीवृक्षमूलंसुरदारुर्विदारिका ॥ श्वेतवीर्याश्वेतपाकानीलोत्पलंतथैवच ॥ नाग केसरसींदारी
कुमारींवैवनिक्षिपेत् ॥ तीर्थांबुपंचगव्यंचसर्वौषध्यश्चकांचनं ॥ यथासंभवतोवापिग्राह्यंमूलशतंशुभमिति ॥ शतमूलनामानि
गृह्याणि ॥ केचिच्छतमूलानांहोमंकुर्वंतिकेचिन्नकुर्वंति अतएवशांतिद्योतादावनुक्तत्वात् तन्मतमालोच्यास्माभिरपिशतमूल
होमोनलिखितः ॥ ॥ शतमूलाशतंवेतसोवंजुलः ॥ सहकासहदेवीश्वेतमूलापुनर्नवा ॥ मोननेत्रामस्माक्षीपुत्रपारीपुत्र
जीवः ॥ कृतांजलीअंजलिनीहाथाजोडाइतिप्रसिद्धाः पलाशंकघरःबिल्वकौबिल्वः ॥ रोचनंचंदनद्वयंश्वेतंपीतंच ॥ उशीरं
वीरणं ॥ अमलाभूम्यामलकीगोजिह्वागलजामीतिप्रसिद्धाः ॥ लांगलीकलिहारीतिप्रसिद्धा ॥ ब्रह्मदंडीअधःपुष्पीद्रोण
पुष्पीकरीबुकः ॥ काकजंघाकाकांगीज्योतिष्मतीकंगुका ॥ गांधारींदेवगाधारीपूर्णकोशीकाकोशीतकी ॥ भगक्षमा
शिग्रुः ॥ सुभद्रासारिवा ॥ अलंबुकानुविविशाखपर्वाचवा ॥ अरिष्टकानागबला ॥ अपराजिताछिन्नरुहा ॥ पिंडगुडीची
शतपत्राकमलिनी ॥ निकुंभालतीजातीस्वर्णा पुष्पाकुशलीश्रीफलंबिल्वंमदयंतीयूथिकी ॥ विकंकतःस्राववृक्षः ॥ अर्द्ध
मूदनिकापालंका ॥ मन्मथवृक्षःआम्रः ॥ सुरदारुर्देवदारुः ॥ विदारिकाभूकूष्पाडीं ॥ श्वेतवीर्यागिरिकर्णी ॥ श्वेतपाकां
गुंजाशेषाणिस्वनामप्रसिद्धानि ॥ इतिवनस्पतिप्रकाशः ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदि
रविशंकरकृतेमूलनक्षत्रशांतिप्रयोगरश्मिःपंचचत्वारिंशत् ॥ ४५ ॥

॥ ॐश्रीमन्महापुरुषोत्तमायनमः ॥ अथाश्लेषाशांतिः ॥ तत्राश्लेषाफलं ॥ आश्लेषायाःक्रमेणपंचसप्तद्वित्रि
चतुरष्टैकादशषट्नवपंचेतिदशधाविभक्त नाडीषुक्रमेणराज्यंपितृनाशोमातृनाशः कामभोगःपितृभक्तिर्बलंहिंसकत्वंत्यागो
भोगोधनमितिफलानि ॥ अथपादविभागेनफलं ॥ तत्रप्रथमपादःशुभः ॥ द्वितीयपादेधननाशः ॥ तृतीयेमातुः ॥
चतुर्थेपितुः ॥ आश्लेषांत्यपादत्रयजाताकन्याश्वसुरंहंति आश्लेषासर्वपादेषुशांतिःकार्याप्रयत्नतः ॥ जातस्यद्वादशाहेतु
शांतिकर्मसमाचरेत् ॥ असंभवेतुजन्मर्क्षेअन्यस्मिन्वाशुभेदिने ॥ ॥ अथप्रयोगः ॥ द्वादशाहेतदसंसवेजन्मर्क्षेन्यस्मिन्
शुभदिनेवाप्रातर्नित्यविधिंविधाय ॥ तैलाभ्यंगोद्वर्त्तनादिनास्नातोयजमानः देशकालौसंकीर्त्य ममास्यकुमारस्यकुमार्या





वाआश्लेषाचतुर्थ चरणजननसूचितपित्रारिष्ट शांतिद्वाराश्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशौनकोक्तांअश्लेषाशांतिंकरिष्ये ॥
प्रथमद्वितीयतृतीयपादोत्पत्तोसंकल्पेतथोहः ॥ तत्रादौनिर्विघ्नतासिध्यर्थं महागणपतिपूजनं स्वस्तिपुण्याहवाचनंमातृका
पूजनंनांदिश्राद्धं आचार्यादिवरणंकरिष्येइतिसंकल्प्य ॥ सर्षपविकीरणंकृत्वा ॥ आपोहिष्टेतिकर्मभूमिंप्रोक्षयेत् ॥ इशकोणे
पंचवर्णैःस्वस्तिकंविरच्य ॥ तत्रस्वस्तिकेपूर्ववत्कलशंस्थाप्य तदुपरिअष्टदलांकितवस्त्रेसौवर्णिं शिवप्रतिमांपूर्वोक्तमंत्रेण
संस्थाप्य ॥ शोडशैरुपचारैःसंपूज्य ॥ तस्माद्रुद्रकुंभाच्चतुर्दिक्षुपूर्वादिक्रमेणकलश चतुष्टयंसंस्थाप्यतेषुयेपश्चाज्जुहतीति
मंत्रेणवरुणमावाह्यक्रमेणसंपूज्य मध्यमेरुद्रकुंभेजपः ॥ तत्रसूक्तानि ॥ ये३स्यांस्थप्राच्यांदिशिहेतयो नामदेवास्तेषांवो
अग्निरिषवः ॥ तेनोमृडततेनोधिब्रूतते भ्योवोनमस्तेभ्योवस्वाहा ॥ १ ॥ ये३स्यास्थदक्षिणायांदिश्यविश्यवोनामदेवा
स्तेषांवःकामइषवः ॥ तेनोमृड० ॥२॥ ये३स्यांस्थप्रतिच्यांदिशिवैराजानामदेवास्तेषांवाआपइषवः तेनोमृड० ॥३॥
ये३स्यांस्थोदीच्यांदिशिप्रविध्यंतोनामदेवास्ते पांवोवातइषवः ॥ तेनोमृड० ॥ ४ ॥ ये३स्यांस्थध्रुवायांदिशिनिलिंपा
नामदेवास्तेषांवओषधीरिषवः ॥ तेनोमृड ॥५॥ ये३स्यांस्थोर्ध्वायांदिश्यवस्वंतोनामदेवास्तेषांवोबृहस्पतिरिषवः ॥
तेनोमृड ततेनोधिब्रूततेभ्योवोनमस्तेभ्योवःस्वाहा ॥ ६ ॥ ॥ प्राचीदिगग्निरधिपतिरसितोरक्षितादित्याइषवः ॥
तेभ्योनमोधिपतिभ्योनमोरक्षितृभ्यो नमइषुभ्योनमएभ्योअस्तु ॥ यो३स्मान्द्वेष्टियवयंद्विष्मस्तंवोजंभेदध्मः ॥ १ ॥
दक्षिणादिगिंद्रोधिपतिः स्तिरश्चिराजिरक्षितापितरइषवः ॥ तेभ्योनमो०॥ यो३स्मान्द्वेष्टि० ॥२॥ प्रतीचीदिग्वरुणोधि
पतिःप्रदाकूरक्षितान्नमिषवः ॥ तेभ्योनमो०॥ यो३स्मान्द्वेष्टि०॥३॥ उदीचीदिक्सोमोधिपतिस्वजोरक्षिताशनीरिषवः॥
तेभ्योनमो० ॥ यो३स्मान्द्वेष्टि० ॥ ४ ॥ ध्रुवायादिग्विष्णुरधिपतिःकल्माषग्रीवोरक्षितावीरुधइषवः ॥ तेभ्योनमो० ॥
यो३स्मान्द्वेष्टि० ॥ ५ ॥ ऊर्ध्वादिग्बृहस्पतिरधिपतिःश्वित्रोरक्षितावर्षमिषवः ॥ तेभ्योनमो० ॥ यो३स्मान्द्वेष्टि० ॥६॥

रुद्रजलाषभेषजनीलशिखंडकर्मकृत् ॥ प्राशंपतिप्राशोजह्वरसान्कृष्वोषधे ॥१॥ ये१स्यांप्राची दिगितिसूक्तंपुनःपठनियम्
॥२॥ उदितस्त्रयोअक्रमन्व्यापःपुरुपोष्टकः ॥ हिरुग्वयंतिसिंधवोहिरुग्देवोवनस्पतिर्हिरुग्मंतुशत्रवः ॥ १ ॥ परेणैतुपथा
वृकःपरमेणोततस्करः॥ परेणदत्वतिरज्जुःपरेणाघायुरर्षतु ॥२॥ अक्षौचतेमुखंचतेव्य।घ्रजंभयामसि ॥ आत्सर्वाविंशतिं
नखान ॥३॥ व्याघ्रंदत्वंतांबयंप्रथमंजंभयामसि ॥ आदुष्टेनमथोअहिंयातुधानमथोवृकं ॥ ४ ॥ योअद्यस्तेनआयंतिस
संपिष्टोअपायति ॥ यथामपध्वंसेनैत्विद्रोवज्रेणहंतुतम् ॥ ५ ॥ मूर्णामृगस्यदंताअपिशीर्णाउपष्टयः ॥ निम्रुलेगोधा
भवंतुनीचायंछशयुर्मृगः ॥ ६ ॥ यत्संयमोत्रियमोत्रियंमोयनसंयमः ॥ इंद्रजाःसोमजाअंथर्वणमसिव्याघ्रंजभंन ॥ ७ ॥
॥ ३ ॥ भवाशर्वौमन्वेवांतस्यवित्तंययोवांमिदंप्रदिंशियद्विरोचंते ॥ यावस्येशाथेद्विपदोयश्चतुष्पहस्तौनोमुंचतमंहसः॥
॥१॥ ययोरल्यध्वर्यंउतयेदूरेचोघौविदितावि॑षुभृतामसिष्टो ॥ यावस्येशाथे० ॥२॥ सहस्त्राक्षोवृत्रहणाहुवेहंदूरेगव्यूति
स्तुवंनेम्युग्रौ ॥ यावस्येशाथे० ॥३॥ यावारेभाथेवहुसाकमग्रेप्रचेदस्त्राष्ट्रमभिभांजनेषु ॥ यावस्येशाथे० ॥ ४ ॥ ययो
र्वधांनापपद्यतेकश्चनांतर्देवेषुतपानुपेषु ॥ यावस्येशाथे० ॥ ५ ॥ यःकृत्यानून्मूलयातुधानोनितस्मैधतंवज्रमुग्रौ ॥
यावस्थेशाथेद्विपदोयश्चतुष्पदस्तोनोमुंचतमंहसः ॥ ६ ॥ अधिनोब्रूतंपृतनामूग्रौशंवज्रेणसृजतंयःकिमीदिनः ॥ स्तौमिभ
वासर्वौनाथितोजोहुविमितोनोमुंचतमंहसः ॥ ७ ॥ ब्रह्मजनज्ञानंप्रथमंपुरस्ताद्विशीमतः सुरुचोवेनआवः ॥ सबुध्न्या
उपमाअस्यविष्टाःसतश्चयोनिमसतश्चविवः ॥ १ ॥ अनाप्तायेवःप्रथमायानिकर्माणिचक्रिरे ॥ वीरान्नोअत्रमादमंतद्वएतत्
पुरोदधे ॥ २ ॥ सहस्त्रधारएवतेसमस्वरन्दिवोनाकेमधुजिह्वाअसश्चतः ॥ तस्यस्पृशोननिमिषतिभूर्णयःपदेपदेपाशिनः
सन्तिसेतवे ॥३॥ पर्युषुप्रधन्वावाजसातयेपरिवृत्राणिसक्षणिः ॥ द्विषस्तदध्यर्णवेनेयसेसनिस्त्रसोनामासित्रयोदशोमास





इंद्रस्यगृहः ॥ ४ ॥ न्वे१तेनारात्सीरसौस्वाहा ॥ तिग्मायुधौतिग्महेतिसुशेवौसोमारुद्राविहसौमृडतन्नः ॥ ५ ॥ अवैते
नारात्सीरसौस्वाहा ॥ तिग्मायुधौतिग्महेतीसुशेवौसोमारुद्रा विमृसुमृडतन्नः ॥ ६ ॥ अपैतेनारात्सीरसौस्वाहा ॥
तिग्मायुधौतिग्महेतीसुशेवौसोमारुद्राविहसुमृडतन्नः ॥ ७ ॥ मुमुक्तमस्मादुरितादवद्याज्जुषेथांयज्ञममृतमस्मासुधत्तम् ॥
चक्षुषेहेतोमनसोहेतेब्रह्मणोहेतेतपसश्चहेते ॥ ८ ॥ मेन्यामेनिरस्यमेनयस्तेसंतुये३स्माँअभ्यघायंति ॥ यो१स्माँश्चक्षुषा
मनसाचित्याकूत्याचयोअघायुरभिदासात् ॥ ९ ॥ त्वंतानग्नेमेन्यामेनिन्कृणुस्वाहा ॥ १० ॥ इंद्रस्यगृहोसि ॥ तंत्वा
प्रपद्येतंत्वाप्रविशामिसर्वगुःसर्वपुरुषः सर्वात्मासर्वतनूःसहयन्मेस्तितेन ॥११॥ इंद्रस्यशर्मासि ॥ तंत्वाप्रपद्ये० ॥ १२ ॥
इंद्रस्यवर्मासि ॥ तंत्वाप्रपद्ये० ॥१३॥ इंद्रस्यवरूथमसि ॥ तंत्वाप्रपद्ये०॥१४॥ येपन्थानोबहवोदेवयानाअन्तराद्यावा
पृथिवीसंचरन्ति तेषामज्यानियतमोवहाति तस्मैमादेवाःपरिधत्तेहसर्वे ग्रीष्मोहेमंतः शिशिरोवसंतःशरद्वर्षास्वितेनो
दधात ॥ आनोगोषुभजताप्रजायांनिवातइद्वःशरणेस्याम ॥ १५ ॥ इदावत्सरायपरिवत्सरायसंवत्सरायकृणुतावृहंन
मस्तेषांवयंसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥ २ ॥ अनडुद्भ्यस्त्वंप्रथमंधेनुभ्यस्तमरुंधति ॥ अधेनवेवयसेशर्म
यछश्चतुष्पदे ॥ ३ ॥ शर्मयछत्वोषधः सहदेवीररुंधति ॥ करत्पयस्वंतंगोष्ठमयक्ष्मांउतपूरुषान् ॥४॥ विश्वरूपांसुभगां
मछावदामिजीवलाम् ॥ सानोरुद्रस्यास्तांहेतिंदूरंनयतुगोभ्यः ॥५॥ मह्यमापोमधुमदेरयंतांमह्यंशूरोअमरज्योतिषेकं ॥
मह्यंदेवाउत विश्वेतपोजामह्यंदेवः सविताव्यचोधात् ॥ १॥ अहंविवेचपृथिवीमुतद्यामहमृतुंरजनयंसप्तसाकम् ॥ अहंसत्य
मनृतंयद्वदाम्यहंदैवींपरिवाचंविशश्च ॥२॥ अहंजजानपृथिवीमुतद्यामहमृतंरजतयंसप्तसिंधुन् ॥ अहंसत्यमनृतंयद्वदामियो
अग्निषोमावनुषेसखाया । ३ ॥ वैश्वानरोरश्मिभिर्नः पुनातुवातंप्राणेनेषिरोनमोभिः ॥ द्यावापृथिवीपयंसापयस्वती

ऋतावरीयज्ञियेनःपुनीताम् ॥ ४ ॥ वैश्वानरींसूनृतामारभध्वंयस्याआशास्तन्वोवीतपृष्ठाः ॥ तयागृणंतःसधमादेषुवयं स्यामपतयोरयीणाम् ॥ ५ ॥ वैश्वानरींवर्चसआरभध्वंशुद्धाभवतः शुचयःपावकाः ॥ इहेडयासधमादंमदंतोज्योक्पश्येम सूर्यमुच्चरंतं ॥ ६ ॥ यमोमृत्युरघमारोनिर्ऋथोवभ्रुःशर्वोस्तानीलशिखंडः ॥ देवजनाःसेनयोत्तस्थिवांसस्तेअस्माकंपरि वृजंतुवीरान् ॥ १ ॥ मनसाहोमैर्हरसाघृतेनशर्वायास्त्रउतराज्ञेभवाय ॥ नमस्येभ्योनमएभ्यःकृणोम्यन्यत्रास्मदघविषा नयंतु ॥ २ ॥ त्रायध्वंनोअघविषाभ्योवधाद्विश्वेदेवामरुतोविश्ववेदसः ॥ अग्नीषोमावरुणःपूतदक्षावातापर्जन्ययोःसु सुमतौस्याम ॥ ३ ॥ यांतेरुद्रइषुमास्यदंगेभ्योहृदयायच ॥ इदंतामद्यत्वद्वयंविषूचींविवृहामसि ॥ ४ ॥ यास्तेशतं धमनयोंगान्यनुविष्ठिता ॥ तासांतेसर्वासांवयंनिर्विषाणिह्वयामसि ॥ ५ ॥ नमस्तेरुद्रास्यतेनमःप्रतिहितायैनमोविसृज्य मानायैनमोनिपतितायै अप्स्वं१तर्यओषधीविरुधआविवेश ॥ यइमाविश्वाभुवनानिचाक्लृपत्तस्मैरुद्रायनमोअस्त्वग्नये ॥ ॥७॥ भवाशर्वौमृडतंमाभियातंभूतपतीपशुपतीनमोवाम् ॥ प्रतिहितामायतांमाविस्राष्टंमानोहिंसिष्टंद्विपदोमाचतुष्पदः ॥८॥ शुनेक्रोष्ट्रेमाशरीराणिकर्त्तमलिक्लवेभ्योगृध्रेभ्योयेचकृष्णाअविष्यवः ॥ मक्षिकास्तेपशुपतेवयांसितेविघसेमा विदंत ॥९॥ क्रंदायतेप्राणाययाश्चतेभवरोपयः ॥ नमस्तेरुद्रकृण्मःसहस्राक्षायामर्त्य ॥ १० ॥ पुरस्तात्तेनमःकृण्मउत्तरा दधरादुत ॥ अभिवर्गाद्दिवस्पर्यंतरिक्षायतेनमः ॥ ११ ॥ मुखायतेपशुपतेयानिचक्षूंषितेभव ॥ त्वचेरूपायसंदृशेप्रतीची नायतेनमः ॥१२॥ अंगेभ्यस्तउदरायजिह्वायाआस्यायते ॥ दद्भ्योगंधायतेनमः ॥ १३ ॥ अस्त्रानीलशिखंडेन सहस्राक्षेणवाजिना ॥ रुद्रेणार्धकघातिनातेनमासमरामहि ॥ १४ ॥ सनोभवःपरिवृणक्तुविश्वतआपइवाग्निःपरिवृणक्तु नोभवः ॥ मानोभिमांस्तनमोअस्त्वस्मै ॥ १५ ॥ चतुर्नमोअष्टकृत्वोभवायदशकृत्वःपशुपतेनमस्ते ॥ तवेमेपंचपशवो





विभक्तागावोअश्वाःपुरुषाअजावयः ॥१६॥ तवचतस्रःप्रदिशस्तवद्यौस्तवपृथिवीतवेदमुग्रोर्वं१तरिक्षम् ॥ तवेदंसर्वमात्मन्वद्यत्प्राणत्पृथिवीमनु ॥ १७ ॥ उरुःकोशोवसुधानस्तवायंयस्मिन्निमाविश्वाभुवनान्यंतः ॥ सनोमृडपशुपतेनमस्तेपरः क्रोष्टारोअभिभाःश्वानःपरोयंत्वघरुदोविकेश्यः ॥ १ ॥ धनुर्बिभर्षिहरितंहिरण्ययंसहस्रघ्निशतवधंशिखंडिन् ॥ रुद्रस्येषु श्चरतिदेवहेतिस्तस्यैनमोयतमस्यांदिशी३तः ॥२ ॥ योऽ३भियातोनिलयतेत्वांरुद्रनिचिकीर्षति ॥ पश्चादनुप्रयुंक्षेतंविद्धस्य पदनीरिव ॥ ३ ॥ भवारुद्रौसयुजासंविदानावुभावुग्रौचरतोवीर्याय ॥ ताभ्यांनमोयतमस्यांदिशी३तः ॥ ४ ॥ नमस्ते स्त्वायतेनमोअस्तुपरायते ॥ नमस्तेरुद्रतिष्ठतआसीनायोतेनमः ॥५॥ नमःसायंनमःप्रातर्नमोरात्र्यानमोदिवा ॥ भवाय चशर्वायचोभाभ्यामकरंनमः ॥६॥ सहस्राक्षमतिपश्यंपुरस्ताद्रुद्रमस्यंतंबहुधाविपश्चितम् ॥ मोपारामजिह्वयेयमानम् ॥ ॥७॥ श्यावाश्वंकृष्णमसितंमृणंतंभीमंरथंकेशिनःपादयंतम् ॥ पूर्वेप्रतीमोनमोअस्त्वस्मै ॥ ८ ॥ मानोभिस्रामत्यंदेवहे तिमानःक्रुद्धःपशुपतेनमस्ते ॥ अन्यत्रास्मद्दिव्यांशाखांविधूनु ॥ ९ ॥ मानोहिंसीरधिनोब्रूहिपरिणोवृङ्ग्धिमाक्रुधः ॥ मात्वयासमरामहि ॥१०॥ मानोगोषुपुरुषेषुमागृधोनोअजाविषु ॥ अन्यत्रोग्रविवर्त्तयप्यारूणांप्रजांजहि ॥१॥ यस्य तक्माकासिकाहेतिरेकमश्वस्येववृषणःक्रंदएति ॥ अभिपूर्वंनिर्णयतेनमोअस्त्वस्मै ॥ २ ॥ योंऽ१तरिक्षेतिष्ठतिविष्ट भितोयज्वनःप्रमृणन्देवपीयून ॥ तस्मैनमोदशभिःशक्वरीभिः ॥३॥ तुभ्यमारण्याःपशवोमृगावनेहिताहंसाःसुपर्णाःशकुना वयांसि ॥ तवयक्षंपशुपतेअप्स्वं१तस्तुभ्यंक्षरंतिदिव्याआपोवृधे ॥ ४ ॥ शिंशुमाराअजगराःपुरीकयाजषामत्स्यारज सायेभ्योअस्यसिनतेदूरंनपरिष्ठास्तितेभवसद्यःसर्वांपरिपश्यसिभूमिंपूर्वस्माद्धंस्युत्तरस्मिन्समुद्रे ॥ ५ ॥ मानोरुद्रतक्मना माविषेणमानःसंस्राद्दिव्येनाग्निना ॥ अन्यत्रास्मद्विद्युतंपातयैताम् ॥६॥ भवोदिवोभवईशेपृथिव्याभवआपप्रउर्वं३तरिक्षम् ॥

तस्मैनमोयतमस्यांदिशि३इतः॥७॥ भवंराजन्ययजमानायमृडपशूनांहिपंशुपतिर्बभूथ ॥ यश्रद्दधातिसंतिदेवाइतिचतुष्पदे
द्विपदेस्यमृडय ॥ ८ ॥ मानोमहांतमुतमानोअर्भकंमानोवहंतमुतमानोवक्ष्यतः मानोहिंसीःपितरंमातरं चस्वातन्वंरुद्रमारी
रिषोनः ॥९॥ रुद्रस्यैलवकारेभ्योसंसूक्तगिलेभ्यः इदंमहास्येभ्यश्वभ्योअकरंनमः ॥१०॥ नमस्तेघोषिणीभ्योनमस्ते
केशिनीभ्यः ॥ नमोनमस्कृताभ्योनमः संभुंजतीभ्यः ॥ ११ ॥ नमस्तेदेवसेनाभ्यस्वस्तिनोअभयंचनः ॥ १२ ॥
भवाशर्वावित्रूमोरुद्रंपशुपतिश्चयः इषूर्याएषासंविद्मतानःशंतुसदाशिवाः ॥ १ ॥ यस्तेसर्पोवृश्चिकत्रृष्टदंशमाहेमंतजब्धोभ्र
मलेगुहाशये ॥ क्रिमिर्जिन्वत्पृथिवियद्देजंतिप्राट्टषितंन्नःसर्पन्मोपसृपद्यच्छिवंतेनमोमृड ॥२॥ तस्मैप्राच्यादिशोअंतर्देशा
द्भवमिष्वासमनुष्ठातारमकुर्वन् ॥ भवएनमिष्वासःपाच्यादिशोअंतर्देशादनुष्ठातानुतिष्ठति नैनंशर्वोनभवोनेशानः ॥ नास्य
पशून्नसंमानांहिनस्तियएवंवेद ॥ १ ॥ तस्मैदक्षिणायादिशोअंतर्देशाच्छर्वमिष्वासमनुष्ठातारमकुर्वन् ॥ शर्वएनमिष्वासो
दक्षिणायादिशोअंतर्देशादनुष्ठानुतिष्ठति नैनंशर्वोनभवोनेशानः ॥ नास्यपशून्नसंमानान्हिनस्तियएवंवेद ॥ २ ॥ तस्मै
प्रतीच्यादिशोअंतर्देशात्पशुपतिमिष्वासमनुष्ठातारमकुर्वन् ॥ पशुपतिरेनमिष्वासः प्रतीच्यादिशोअंतर्देशादनुष्ठातानुतिष्ठति
नैनंशर्वोनभवोनेशानः ॥ नास्यपशून्नसंमानान्हिंनस्तियएवंवेद ॥ ३ ॥ तस्माउदीच्यादिशोअंतर्देशादुग्रंदेवमिष्वासमनु
ष्ठातारमकुर्वन् ॥ उग्रएनंदेवमिष्वासउदीच्यादिशोअंतर्देशादनुष्ठातानुतिष्ठति नैनंशर्वोनभवोनेशानः ॥ नास्यपशून्न
संमानान्हिंनस्तियएवंवेद ॥ ४ ॥ तस्मैध्रुवायादिशोअंतर्देशाद्रुद्रदनुष्ठातारमकुर्वन् ॥ रुद्रएनमिष्वासोध्रुवायादिशोअंत
र्देशादनुष्ठातानुतिष्ठति नैनंशर्वोनभवोनेशानः ॥ नास्यपशून्नसंमानान्हिंनस्तियएवंवेद ॥ ५ ॥ तस्माऊर्ध्वायादिशो
अंतर्देशान्महादेवमिष्वासमनुष्ठातारमकुर्वन् ॥ महादेवएनमिष्वासऊर्ध्वायादिशोअंतर्देशादनुष्ठातानुतिष्ठति नैनंशर्वोन





भवोनेशानः ॥ तस्यपशून्नसंमानान्हिंनस्तियएवंवेद ॥ ६ ॥ तस्मैसर्वेभ्योअंतर्देशेभ्यईशानमिष्वासमनुष्ठातारमकुर्वन् ॥
ईशानएनमिष्वाससर्वेभ्योअंतर्देशेभ्योअनुष्ठातानुतिष्ठति नैनशर्वोनभवोनेशानः ॥ नास्यपशूनसंमानान्हिंनस्तियएवंवेद ॥
॥७॥ निवरुद्रोपनीषद् अपश्यंत्वाविरोहतंदिवीतः पृथिवीभव ॥ अपश्यमस्यंतंरुद्रंनीलग्रीवंशिखंडितम् ॥ १ ॥ दिवउग्रो
वारुक्षत्प्रष्टात्भूम्यांमधि ॥ जनासःपश्यतेमनीलग्रीवंविलोहितम् ॥२॥ एषएत्यवीरहारुद्रोजलाषभेषजीः॥ वीतेक्षेममनी
नशद्वातिकारोप्येतुते ॥३॥ नमस्तेभवभामायनमस्तेभवमन्यवे ॥ नमस्तेअस्तुवाहुभ्यामुतोतइशवेनमः ॥४॥ शिवांया
मिषुंगिरिशंतहस्तेषिमरिष्यस्तवे ॥ शिवागिरित्रतान्कृणुमाहिंसीत्पुरुषान्मम ॥ ५ ॥ शिवेनवचसात्वागिगिशाछावदा
मसि ॥ यथानःसर्वइज्जगदयक्ष्मंसुमनाअसत् ॥६॥ यातइषुःशिवतमाशिवंवभूवनेधनुः ॥ शिवाशरव्या३यातयतयानो
मृडजीवसे ॥७॥ यातरुद्रशिवातनुरघोरापापकाशिनि ॥ तयानस्तन्वा३शंतमयागिरिशंत्याभिविचाकशत् ॥८ ॥ असौ
यत्ताम्राअरुणउतवभ्रुर्विलोहितः ॥ येचेमेअभितोरुद्रादिक्षुश्रिताः सहस्रशोवैषांहेडईमहे ॥९॥ अदश्यंत्वावरोहतंनिल
ग्रीवंविलोहितं॥ उतत्वागोपाअदृशंन्नुत्वोदहार्यः ॥ उतोत्वाविश्वाभूतानितस्मैदृष्टायतेनमः ॥१॥ नमोस्तुनीलशिखंडाय
सहस्राक्षायवाजिने ॥ अथोयेअस्यसत्यानस्तेभ्योहमकरंनमः ॥२॥ नमोसितआयुधायानातवानायधृष्णवे॥ उभाभ्या
मकरंनमोबाहुभ्यांतवधन्वने ॥ ३ ॥ प्रमुंचधन्वनस्यवुभयोरार्त्न्योर्याम् ॥ याश्चतेहस्तइषवःपराताभगवोवप ॥४॥ अवतत्य
धनुस्त्वंसहस्राक्षाशतेषुते ॥ विशीर्यशल्यानांमुखंशिवोनःशंभुराभव ॥ ५ ॥ विज्यंधनूःशिखंडिनोविशल्योवाणवांउत ॥
अनेशन्नःस्येशवःशिवोअस्यनिषंगतिः ॥ ६ ॥ परितेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः ॥ अथोयइषुधिस्तवारेअस्मिन्निधे
हितम् ॥ ७ ॥ यातेहेतिर्मीढुष्टमहस्तेवभूवतेधनुःतयात्वंविश्वतोअस्मांनयक्ष्मायापरिभुज ॥ ८ ॥ येवामीरोचनेदिवियेच
सूर्यस्यरश्मिषु ॥ येषामप्सुसदस्कृतंतेभ्यःसर्पेभ्योनमः ॥९॥ याइषवोयातुधानानांयेवावनस्पतीनाम् ॥ येवावटेषुशेरते
तेभ्यःसर्पेभ्योनमः ॥१०॥ यःस्वजनांनीलग्रीवोयःस्वजनांहरिरुतः ॥ कल्माषपुछमोषधेजंभयाश्चरुंधति ॥१॥ बभ्रुश्च
बभ्रुवर्णश्चनीलगलवाला: शिवपश्यसर्वेणनीलशिखंडेनभवेनमरुतापिता ॥ २ ॥ विरूपाक्षेणबभ्रुणाःचंवदिश्यतोहतः ॥

सवनीलशिखडवीरकर्मणिकर्मणि ॥३॥ इमामस्यप्राशंजहियेनेदंविभजामहि ॥ नमोभवायनमः शर्वायनमःकुमारशत्रवे ॥ ४॥ नमोनीलशिखंडायनमः सभाप्रपादिनेयस्यहरा अश्वतरौगर्दभावभितस्करौ ॥ ५॥ तस्मैनीलशिखंडायनमः सभाप्रपादिनेनमः सभाप्रपादिनइति ॥६॥ इतिमध्यकुंभेजपः ॥ शेषेषुकलशेषु पूर्वोक्तानिसूक्तानिऋत्विजोजपेयुः ॥ तदुत्तरेपंचवर्णैं चतुर्विंशतिदल पंकजंविरच्य ॥ तत्रकलशं स्थापयेत् ॥ तदुपरिअष्टदलांकितेवस्त्रेहेमनिर्मितआश्लेषा प्रतिमायां सर्पान्स्थापयेत् ॥ तत्र ॥ ॐयेअग्निजाओषधीजाअहीनांयेअप्सुजाविद्युतआवभुवुः ॥ येषांजातानि बहुधामहांतितेभ्यः सर्पेभ्योनमसाविधेम ॥ इतिसंस्थाप्यावाह्यध्यायेत् ॥ सर्प्पोरक्त त्रिनेत्रश्चद्विभुजः पीतवस्त्रकः ॥ फलकासीधरस्तीक्ष्णो दिव्याभरणभूषितः ॥ इतिध्यात्वा तद्दक्षिणतः हेममूर्त्तापुष्यदेवतां बृहस्पतिंस्थापयेत् ॥ ॐबृहस्पतिर्नइतिमंत्रेण ॥ एवंतदुत्तरेकृताग्न्युत्तारण हेमनिर्मितमूर्त्तौमघादेवतांपितृन्संस्थाप्य ॥ संविशंत्विहपितरः स्वानःस्योनंकृण्वंतःप्रतिरंतआयुः ॥ तेभ्यःशकेमहविषानक्षमाणाज्योग्जीवंतःशरदःपुरुचीः ॥ इतिमंत्रेणपितृन्संस्थाप्य॥ आवाह्यततःचतुर्विंशति पंकजभूमिस्छदलेषुपूर्वदलमारभ्य प्राग्दक्षिण्येनपूर्वाधिपतिभादि पुनर्वसुदेवता दितिपर्यंतचतु र्विंशतिवाहनादिकुर्यात् ॥ सयथा ॥ ॐभगायनमः भगंआवाहयामि ॥ एवंसर्वत्र ॥ अर्यम्णेनमः अर्यमणंआवाहयामि ॥२॥ वायवेनमःवायुंआ०॥ इंद्राग्निभ्यांनमः इंद्राग्नीआ० ॥ मित्रायनमः मित्रंआ०॥ इंद्रायनमः इंद्रंआ०॥ निर्ऋतयेनमः निर्ऋतिंआ० ॥ ॐअद्भ्योनमः आपआ०॥ विश्वेभ्योदेवेभ्योनमः विश्वान्देवान्नावा० ॥ विष्णवेनमः विष्णुंआ० ॥ वसवेनमः वसून्नावा०॥ वरुणायनमः वरुणंआ०॥ अजेकपदेनमः अजैकपादंआ०॥ अहिबुध्न्यायनमः अहिर्बुध्नंआ०॥ पूष्णेनमः पूषणआ० ॥ अश्विभ्यांनमः अश्विनौआ० ॥ यमायनमः यमंआ० ॥ अग्नयेनमः अग्निंआ०॥ प्रजापतयेनमः प्रजापतिंआवा० ॥ सोमायनमः सोमंआ० ॥ रुद्रायनमः रुद्रंआ० ॥ अदित्यैनमः अदितिंआ० ॥ ततोपूर्वादिक्रमेण इंद्रादिलोकपालान तत्तन्नाममंत्रेणावाह्य ॥ षोडशोपचारैःसंपूज्य ॥ कौस्तुभेतुतैत्तरोयकमंत्रैः पुष्यमघापूर्वादिनक्षत्राणा





मेवावाहनमुक्तंनतुनक्षत्रदेवतानां ॥ ततोआचार्यःस्थंडिलेवरदनामानमग्निं प्रतिष्ठाप्यतदीशान्यांग्रहान्प्रतिष्ठाप्यसंपूज्य तदीशान्यांकलशंसंस्थाप्श ॥ अभ्यात्तानादिपूर्वतंत्रंकृत्वा ॥ ततः अग्नेर्दक्षिणतउदकुंभंसदर्भसंस्थाप्य पत्नोहितिसूक्तेनाज्य होमपूर्वकंसंपात्याभिमंत्र्यग्रहेभ्यउक्तरीत्याहोमः ॥ अष्टोत्तरसहस्राष्टोत्तरशतसंख्ययाहोमोप्रधानदेवतायाः ॥ अष्टोत्तर शतमष्टाविंशतिवा अधिदैवप्रत्यधिदैवयोःगुरुपितृमंत्राभ्यांहोमः॥ ततोष्टाष्टसंख्ययानाममंत्रैःशेषनक्षत्राधीशानांचतुर्विंशति संख्यकानांहोमः ॥ एवमेवाष्टाष्टासर्ववितृदुर्गायैशिवायतथादुर्गावास्तोष्पती अग्निक्षेत्राधीशमित्रा वरुणमग्नीनांमंत्रैर्होमं विधाय ॥ एवंक्रमेणसर्वहोमः ॥ स्थापितदेवतानांपुनःपूजनंबलिदानंच ॥ ततःपूर्वोक्तरीत्यापूर्णाहुतिः ॥ अभ्यात्ताना द्युत्तरतंत्रंपरिसमाप्य ॥ सर्पादिदेवतानामुपस्थानंततोभिशेकःपूर्ववत् ॥ योसौवज्रधरोदेवोमहेंद्रोगजवाहनः ॥ सर्पजातं शिशोर्दोषंमातापित्रोर्व्यपोहतु ॥ योसौशक्तिधरोदेवोहुतभुग्मेषवाहनः ॥ सप्तजिह्वाश्चदेवोग्निः सर्पदोषंव्यपोहतु ॥ योसौदंडधरोदेवोधर्मोमहिषवाहनः ॥ सर्पजातंशिशोर्दोषंमातापित्रोर्व्यपोहतु॥ योसौखड्गधरोदेवोनिर्ऋतिराक्षसाधिपः॥ प्रशामयतुमपोत्थंदोषंगंडांतसंभवम् ॥ योसौपाशधरोदेवोवरुणश्चजलेश्वरः ॥ नक्रवाहप्रचेतानः सर्पदोषंव्यपोहतु ॥ योसौदेवजगत्प्राणोमारुतोमृगवाहनः ॥ मातापित्रोःशिशोश्चैवंसर्पदोषंव्यपोहतु ॥ योसौपशुपतिर्देवपिनाकीवृषवाहनः॥ आश्लेषामूलगंडांतंदोषमाशुव्यपोहतु॥ योसौवागीश्वरोदेवअधिदेवोबृहस्पतिः॥ मातापित्रोःशिशोश्चैवगंडदोषंव्यपोहतु पितरःसर्वभूतानारक्षंतुपितरःसदा ॥ सर्पनक्षत्रजातस्यवित्तंचज्ञातिवांधवान् ॥ सुरास्त्वे.त०॥ एवंशतछिद्रकलशाभिशेकेण अभिषिक्तोयजमानः तानिवस्त्रालंकरणानित्यक्त्वा अन्येवाससीपरिधायआज्यमवेक्ष्यतत्पात्रं विधायआचार्यायसदक्षिणं दत्वात्र्यायुषमितितिविभूतिधारणंकृत्वा ॥ पूजांतेताम्रपात्रेफलपुष्पादियुक्तमर्घ्यंगृहीत्वा ॥ सर्पाधीशनमस्तुभ्यं नागानांच गणाधिप ॥ गृहाणार्घ्यंमयादत्तं सर्वारिष्टप्रशांतयेतिविशेषार्घ्यंदत्वा देवतानांविसर्जनंप्रतिमादानंचकृत्वा ततोदक्षिणा दानं ॥ आचार्यायधेनुंदत्वा ॥ ऋत्विग्भ्योकृष्णमनड्वाहंचान्येभ्योदक्षिणांदत्वा ॥ गच्छगच्छेत्यग्निनत्वाविसृज्य ॥ यथाशक्तिब्राह्मणभोजनंविधाय ॥ यस्मात्कोशेतिपठित्वा ॥ शांताघौरीदिशांतिसूक्तंपठेत् ॥ ततःसुहृद्भिःसहभुंजीत ॥

कृतंकर्मेश्वरार्पणंकुर्यात् ॥ ॥ श्रीकृष्णायगोपीजनवल्लभाय० ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पत्नागरद्विवेदि रविशंकरकृतेआश्लेषाजननशांतिप्रयोगरश्मिःषट्चत्वारिंशत् ॥ ४६ ॥

॥ अथज्येष्ठाशांतिप्रयोगरश्मिः ॥ तत्रादौनक्षत्रफलं ॥ ज्येष्ठायादशभागेषुआद्यमातामहीमृतिः मातामहं द्वितीयेचतृतीयेहंतिमातुलं ॥ तूर्येजातेमातरंचहत्यात्मानंचपंचमे ॥ गोत्रजानषष्ठभागेयःसप्तमेतुभयंकुले ॥ अष्टमे स्वाग्रजंहंतिनवमेश्वसुरंतथा ॥ दशमांशकजातस्तुसर्पहंतिशुभंध्रु म् ॥ ज्येष्ठर्क्षेतुपुमान्जातोज्येष्ठभ्रातुर्विनाशकः ॥ ज्येष्ठर्क्षेकन्यकाजाताहंतिशीघ्रंधवाग्रजं ॥ पादत्रयेजातनरोज्येष्ठाप्यत्रप्रजायते ॥ ज्येष्ठांतेपादजातस्तुपितुः स्वस्यचनाशकः॥

॥ अथप्रयोगः ॥ द्वादशाहेशांन्त्युक्तशुभदिनेवागोप्रसवंकृत्वा ॥ देशकालौसंकीर्त्य । अस्यशिशोर्ज्येष्ठाजननसूचित सकलारिष्टशांतिपूर्वकं श्रींपरमेश्वरप्रीत्यर्थं सग्रहमखांज्येष्ठाजननशांतिंकरिष्येइतिसंकल्प्य ॥ तत्रादौनिर्विघ्नतासिध्यर्थं महागणपतिपूजनं स्वस्तिपुण्याहवाचनंमातृकापूजनं नांदिश्राद्धंआचार्यादिवरणंचकरिष्ये शांतिकलशकरणंच ॥ एतानि कृत्वाततोआचार्यः ब्रह्मजज्ञानंअव्यश्चेतिपठित्वा सर्षपविकीरणभूमिप्रोक्षणहेमनिर्मित इंद्रप्रतिमाग्न्युत्तारणानिकृत्वा ॥ ततआचार्यःस्थंडिलात्पूर्वस्यांदिशिकलशस्थापनंकृत्वा तूष्णींगंधेनाभ्यर्च्य ॥ शालितंडुलैःकलशंपूरयित्वा तत्रपूर्वोक्त प्रकारेणपूर्णपात्रंनिधाय तदुपरिसाष्टदलवस्त्रेइंद्रावाहनंकुर्यात् ॥ तद्यथा ॥ मानोविदन्नितिमंत्रस्याथर्वामरीचइंद्रोगायत्री इंद्रावाहनेविनियोगः ॥ ॐमानोविदन्वियाधिनोमोअभिव्याधिनोविदन ॥ आराच्छरव्याअस्मद्विषुचीरिंद्रपातय ॥ ॐभूर्भुवःस्वर्जनदेशचयासहितइंद्रंचतुर्दंतविलसदैरावतारूढंवज्रांकुशधारिणंद्विभुजमावाहयामि॥ तत्वरितःपूर्वादिक्रमेण इंद्राद्यष्टौलोकपालान ॥ तत्तन्मंत्रेण नाममंत्रेणवाआवाह्य ॐभूर्भुवःस्वर्जनदेशचयासहितइंद्रायनमः ॥ तथाचइंद्राद्यावाहित लोकपालेभ्योनमः आसनंसमर्पयामि ॥ एवंसर्वत्र ॥ शोडषोपचारैःसंपूज्य ॥ पूजासमाप्तिपर्यंतंमौनीर्भवेत् ॥ वस्त्रार्पण कालेरक्तवस्त्रद्वयं ॥ नैवेद्यकालेशष्कुल्यादिनानाभक्षनिवेदनंकुर्यात् ॥ महाराष्ट्रदेशेशष्कुलीनांखाजीकरंजीतिप्रसिद्धं नाम ॥ ततःशालितंडुलकलशादुत्तरतः पूर्वादिचतुर्दिक्षुचतुरः कुंभानमध्येशतछिद्रंचसंस्थाप्य ॥ तद्यथा ॥ पूर्वोक्तमंत्रैः









पंचस्थलेप्रत्येकमंत्रावृत्याभूमिस्पृष्ट्वा तत्र ॐव्रीहिमत्तमितियवान्निक्षिप्यतस्योपरिआकलशेष्वितिकलशपंचकान्संस्थाप्य ॥ आपूर्णेतिशतछिद्रकुंभरहितपूर्वादिदिक्कुंभचतुष्टयेषुउदकेनापूर्य ॥ तेषुगायत्रीमंत्रेणगोमूत्रं ॥ यस्तेगंधइतिगोमयं इति पूर्वोक्तमंत्ररीत्याक्षीरं दधिघृतंदुग्धंदधिघृतं मधुसर्करापंचरत्नानि पंचमृत्तिकापंचपल्लवान हिरण्यंकुशान्दुर्वासर्वौषधीः प्राग्दक्षिण्येनमंत्रावृत्याकुंभचतुष्टयेषुनिक्षिप्य परिधत्तइतिमंत्रेणवस्त्रयुग्मवेष्टितेषुतेषु पूर्णपात्राणिनिधायतेषु क्रमेणपूर्वोक्त मंत्रेणवरुणमावाह्य षोडशोपचारैःसंपूज्य ॥ ततःकलशेषुवरुणपूजनंकुर्यात् ॥ ततश्चतुर्षुकुंभेषुऋत्विजश्चत्वारिसूक्तानि जपेयुःसूक्तानितु ॥ अभयगणस्याथर्वाऋषिःसप्तर्षयोदेवताद्वेजगत्यौतेस्त्र उष्णिहःसूक्तजपेविनियोगः ॥ ॐअभयंद्यावा पृथिवीइहास्तुनाअभयंसोमः सवितानःकृणोतु ॥ अभयंनोस्तूर्वं१तरिक्षंसप्तऋषीणांचहविषाभयंनोअस्तु ॥ १ ॥ अस्मै ग्रामायप्रदिशश्चतस्त्रऊर्जंसुभूतं स्वस्तिसविता नःकृणोतु ॥ अशन्त्विंद्रोअभयंनःकृणोत्वन्यत्रराज्ञामभियातुमन्युः ॥२॥ अनमित्रंनोअधरादनमित्रंनउत्तरा ॥ इन्द्रानमित्रंनःपश्चादनमित्रंपुरस्कृधि ॥ ३ ॥ ॐश्येनोसिगायत्रछंदाअनुत्वारंभे ॥ स्वस्तिमासंवहास्ययज्ञस्योदृचिस्वाहा ॥ ४॥ ॐऋभुरसिजगच्छंदाअनुत्वारंभे ॥ स्वस्तिमासंवहास्ययज्ञस्योदृचिस्वाहा ॥५॥ ॐवृषासित्रिष्टुप्छंदाअनुत्वारंभे ॥ स्वस्तिमासंवहास्ययज्ञस्योदृचिस्वाहा ॥ ६॥ इत्यभयसूक्तम् ॥ ततइंद्रसूक्तं॥ पुरुषसूक्तं ॥ ततोरुद्रसूक्तं ॥ इतिपूर्वोक्तक्रमेणसूक्तानिजपित्वा ॥ स्थंडिलेऽग्निंप्रतिष्ठाप्य तदीशान्यांसकलशान्ग्रहान् संस्थाप्य ॥ अभ्यातानादिपूर्वतंत्रांतेसोदकुंभपत्नेहोतिसंपात्यग्रहहोमंकृत्वा पूर्वोक्तरीत्याप्रधानहोमंकुर्यात् ॥ एव मष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशति अष्टौवाएवंक्रमेण समिदाज्यचरुतिलान्हुत्वा ततःदिक्पालपूजनं बलिदानादिकंच कृत्वा ॥ पूर्णाहुतिःकार्या ॥ ततोभ्यातानाद्युत्तरतंत्रंसमाप्य भार्यासहितंमौंजपाशबद्धंशिशुंचयजमानमासनेउपविश्य पूर्वोक्तसूक्तैरभिशेकःकार्यः ॥ तत्रशांतिसूक्तेंद्रसूक्ताभ्यांअभिशेकइतिविशेषः ॥ इतिमंत्रैरभिषिक्तोयजमानः पद्मासनस्थो शुक्लवस्त्रचंदनकुसुमानिधृत्वा आज्यावलोकनंकुर्यात् ॥ तत्रमंत्ररूपंरूपमितिचित्रंदेवानामिति तच्चक्षुरितिमंत्रैरवलोकित

माज्यपात्रंसदक्षिणंब्राह्मणायदत्वा ॥ ततःइंद्रकलशसमीपमागत्यतत्पुरतउपविश्यगंधादिभिः पंचोपचारैरिंद्रंसंपूज्याचमन तांबूलेनिवेद्य ॥ गंधपुष्पफलयुक्तमर्घ्यंनिवेदयेत् ॥ तत्रमंत्रः ॥ नमस्तेसुरनाथायनमस्तुभ्यंशचीपते ॥ गृहाणार्घ्यंमया दत्तंगंडदोषप्रशांतये॥ इतिमंत्रेणार्घ्यंदद्यात् ततःत्र्यायुषमितिमंत्रेणविभूतिधारणंकृत्वा ॥ अनंतरंदेवताविसर्जनंश्रेयोग्रहणं दक्षिणादानंआचार्यहस्तेमति मादानंचकार्यं ॥ ततःकर्मसादुगुण्यार्थंआचार्यायसुशीलांपयस्विनीरक्तवर्णां सवस्त्रांसवत्सां हेमशृंगादिसर्वालंकारभूषितां विधिनागांदद्यात् ॥ दानमंत्रः ॥ यक्षगंधर्वसिद्धैश्चपूजितोसिशचीपते ॥ दानेनानेनदेवेश गंडदोषंप्रशामय ॥ इतिमंत्रेणसदक्षिणांगांदत्वा ॥ ततोष्टोत्तरशतंब्राह्मणानभोजयेत् ॥ तेभ्योदक्षिणांदत्वाप्रणिपत्य ॥ क्षमध्वमपराधानितिक्षमाप्येंद्रं प्रार्थयेत् ॥ अज्ञानादथवाज्ञानाद्विकल्पाद्वा धनस्यवयन्न्यूनमतिरिक्तंच तत्सर्वंक्षंतुमर्हसि इतिप्रार्थ्य ॥ गच्छगच्छेत्यग्निंविसृज्य ॥ मौजराशंनतिकेनेपुत्स्यकरायस्मात्कोशेति कर्मसमापनोयमंत्रंपठित्वा कर्मेश्वरार्पणं कुर्यात् ॥ यथायजमानःसाक्षतजलंहस्ते गृहीत्वावदेत् ॥ ज्येष्ठाशांतिसुकृतंयन्मयालब्धंतेनदेवेंद्रनामेश्वरप्रीयतामिति ॥ शांताद्योरितिशांतिसूक्तंपठेत् ॥ भूयसीदक्षिणादिकंपूर्ववदाचरेदिति ॥ ॥ इतिश्रीनदयर्वगृह्यसूत्रप्रयोगभानौवडपन्नागर द्विवेदिरविशंकरकृतेज्येष्ठानक्षत्रजनन शांतिप्रयोगरश्मिःसप्तश्चत्वारिंशत् ॥४७॥

॥ ॐश्रीगणेशायनमः ॥ अथचित्रादिनक्षत्रोत्पत्तौतत्फलानि ॥ चित्राद्यर्द्धेपुष्यमध्येद्विपादेपूर्वाषाढाधिष्ण्य पादेतृतीये ॥ जातःपुत्रश्चोत्तराद्येविधत्तेपित्रोर्भ्रातुःस्वस्यचापिप्रनाशनं ॥ उत्तराफाल्गुन्याद्यपादेइत्यर्थः ॥ द्विमासं श्चोत्तरांदोषःपुष्येचैवत्रिमासकः ॥ पूर्वाषाढाष्टमेमासिचित्राषण्मासिकंफलं । उत्तराप्रथमेपादेतिलपात्रंतथैवच ॥ अजा चित्रासुवैदद्यात् पूर्वाषाढेतुकांचनं ॥ तिष्येतुगांसवत्सांचसुशीलांचपयस्विनीमिति ॥ उत्तरातिष्यचित्रर्क्षपूर्वाषाढोद्भव स्यच ॥ कुर्याच्छांतिंप्रयत्नेननक्षत्राकारजंबुधः ॥ सुवर्णेनतदर्द्धेनयथावित्तानुसारतः ॥ नक्षत्राधिपतेरूपंकृत्वा वस्त्रद्वया- न्वितं ॥ पूजयेदितिशेषः ॥ पूषाश्विनागुरुपार्षमघाचित्रेंद्रमूलभे ॥ एषुऋक्षेषुजातस्यकुर्याद्गोजननंतथेतिगोप्रसवंकृत्वा नक्षत्राधिपतिप्रतिमांसंपूज्य ॥ आजादानंकार्यं ॥ उत्तरार्द्धेजातस्यकेवलगोमुखप्रसवमात्रंनतुपूजादानं ॥ एवंपुष्यद्वितीय





तृतीयपादयोर्जनने गोप्रसवनक्षत्राधिपपूजा गोदानानिकार्याणि ॥ प्रथमपादचतुर्थ पादयोर्जननेकेवल गोमुखप्रसव मात्रम् ॥ उत्तराफाल्गुनीप्रथमपादेजनने नक्षत्राधिपपूजांतिलपात्रदानंचकुर्यात् ॥ नात्रगोमुखप्रसवः ॥ एवंपूर्वा षाढातृतीयेपादेजनने नक्षत्रेशपूजांकांचनदानं उत्तरापूर्वाषाढयोरुत्तरभागेषु दोषविशेषानुक्तेर्न पूजादिकं ॥ मघाप्र थमपादजनने मूलवत्फलं ॥ तत्रगोप्रसवनक्षत्रेशपुजा ग्रहमखाःकार्याः ॥ मघायाआद्यघटिद्वये जननेनक्षत्रगंडांत शांतिरपि ॥ द्वितीयतृतीयांत्य पादजननेगोप्रसवमात्रं ॥ रेवत्यंतघटिद्वयेश्विन्याद्यघटिद्वये जननेनक्षत्रगंडांतशांति गोप्रसवग्रमखाःकार्याः ॥ इतरभागेषुकेवल गोप्रसवमात्रं ॥ एवंविशाखाचतुर्थ पादजननेशालक देवरनाशादिदुष्ट फलोक्तेग्रहमखःकार्यः ॥ यत्रकालेदुष्टफलमात्रमुक्तंशांतिर्नोक्तातत्रग्रहमखः कार्येतिकमलाकरोक्तेःएवमितरत्राप्युह्यं ॥

॥ अथचित्राशांतिप्रयोगः ॥ जननाद्वादशाहे शांत्युक्तनक्षत्रकाले वाकर्त्तादेशकालौस्मृत्वा अस्यशिशो चित्रापूर्वार्द्ध जन्मसूचित सर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं गोमुखप्रसवशांत्याख्यंकर्मकरिष्ये इतिसंकल्प्य ॥ तदंगत्वेन गणेशांबिकयोः पूजादिकंकरिष्येतिसंकल्प्य ॥ गणेशांबिकयोः पूजनमाचार्यदिनां वरणंतत्पूजनंच ॥ तेनयथा विधिनागोमुखप्रसवंकृत्वा ॥ ततोनक्षत्राधिपंपूजयेत् ॥ देशकालौसंकीर्त्यअस्यशिशोः चित्राद्यपादद्वयेजन्मसूचित सकलारिष्टनिवृत्तिद्वारानक्षत्रेशरूपी श्रीपरमेश्वरप्रीत्यर्थं यथासंभवद्रव्यैर्नक्षत्राधिशपूजनमहंकरिष्ये ॥ अत्रकेचिद्गणेशां बिकयोःपूजनंकुर्वंति ब्रह्मजज्ञानंअव्यसश्चेति यथासंभवंपठित्वा ॥ ततःपंचगव्येनयागभूमिप्रोक्षणंकृत्वा ॥ पूर्वस्यांदिशि गोमयेनोपलिप्तभूमौश्वेतचूर्णेनाष्टदलंविधाय ॥ तत्रतंदुलपुंजंकृत्वा तत्रकलशंस्थापयेत् ॥ तदुपरिअष्टदलांकितवस्त्रेषोडश माषमितांकृताग्न्युत्तारणांत्वष्टुःप्रतिमांनिधाय आवाहनाद्युपचारैःपूजयेत् ॥ तत्रमंत्रः ॥ ॐतत्सवितु० ॥ ॐभूर्भुवःस्व र्जनदेवत्वष्ट्रेनमः त्वष्टारंस्थापयामीतिक्रमेणावाहनादिभिरुपचारैःपूजयेत् ॥ तत्रसहस्रबाहुरितिपुरुषसूक्तेनशोडषोपचारः पंचामृतस्नानांतेरुद्राभिषेकेणाभिषिच्य नमस्कारान्कृत्वा ॥ अनयापूजयाचित्राधिपतित्वष्टाप्रीयतां अथअजादानं ॥ पूजासंभारान्संपाद्य ॥ पवित्रपाणिः कर्ताजीवास्येति विधिवदाचम्यदेशकालौसंकीर्त्य ॥ अस्यशिशोःचित्रापूर्वार्द्धजन्म

सूचितसर्वारिष्टशांतिपूर्वकंअशेषपापक्षयार्थं श्रीपरमेश्वरप्रीत्यर्थं अजाप्रदानंकरिष्ये ॥ तदंगत्वेनब्राह्मणवरणं पूजनंच करिष्येइतिसंकल्प्य ॥ पूगीफलंगृहीत्वा अमुकप्रवरान्वितामुकगोत्रोत्पन्न अमुकशर्माहंअमुकप्रवरान्वितोमुकगोत्रोत्पन्नं अमुकशर्माणंब्राह्मणं अस्मदजाप्रतिगृहीतारंत्वामहंवृणे वृतोस्मीतिद्विजंवाचयेत् ॥ दानप्रतिगृहीत्रे ब्राह्मणायइदमासनं इत्यादिविधिनाद्विजंसंपूज्य ॥ ततःसप्तधान्योपरिस्थितांप्राङ्मुखींसवत्सांपूजयेत् ॥ ॐभूर्भुवःस्वर्जनदेंअजायैनमः ध्यानादिदक्षिणांतैरुपचारैः संपूज्यालंकारानदत्वा ॥ शृंगभूषणार्थंसुवर्णं ॥ पादभूषणार्थंरजतं ॥ भालभूषणार्थंसुवर्ण तिलकं ॥ नेत्रभूषणार्थंताम्रंआरक्तवस्त्रंच ॥ दोहनार्थंकांस्यपात्रं ॥ एतानिसमर्प्य ॥ पुष्पांजलिंदत्वा ॥ सर्वत्रप्राङ्मुखो दाताप्रतिग्राहिंउदङ्मुखःहस्तेजलंदद्यात् ॥ अमुकगोत्रोत्पन्न० अमुकशर्माहं अदःगोत्रोत्पन्नाय अमुकशर्मणेविप्रायइयमजां अव्यंगांहेमशृंगींरौप्यखुरींताम्रपृष्ठींसुवर्णतिलकांघंटाभरणींकांस्यदोहांवस्त्राच्छादितां अस्यशिशोःचित्रापूर्वार्द्धजन्मसूचित सर्वारिष्टनिरसनार्थंनक्षत्राधिपत्वष्टाप्रीत्यै श्रीपरमेश्वरप्रीतये ब्राह्मणायतुभ्यमहंसंप्रददेनममेतित्यजेत् ॥ अजास्तननाभि मध्ययोर्मध्यभागंस्पृष्ट्वाविप्रहस्तेजलंक्षिपेत् ॥ मंत्रः ॥ त्वष्ट्रात्मनश्लक्ष्णेयज्ञसंपत्करेशुभे ॥ त्वष्टात्वंदहमेपापंजन्मांतरशतैःकृतं॥ दानसांगतासिद्ध्यर्थंइमांदक्षिणांतुभ्यमहंसंप्रददे ॥ द्विजमजांचप्रदक्षिणीकृत्य ॥ ततःशांताद्यौरितिशांतिपाठंकृत्वा तस्याः पश्चाज्जलं क्षिपेत् ॥ गृहाद्बहिर्गत्वाहस्तौपादौप्रक्षाल्याचम्य ॥ आदित्यमीक्षेत् ॥ गृहंप्रविश्यकर्मेश्वरार्पणंकुर्यात् ॥ अनेन दानेनश्रीवासुदेवःप्रीयतां ॥ इत्यजादानं ॥ ततोऽभिषेकस्तुपूर्ववत् ॥ चित्राणिसाकमितिसूक्तेनेतिविशेषः ॥ होमश्चापि एतेनैवसूक्तेनशेषंसर्वंपूर्ववत् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौवटपत्रनागरद्विवेदिरविशंकरकृतेचित्राशांतिप्रयोग रश्मिःसप्तचत्वारिंशत् ॥ ४७ ॥

॥ अथपुष्यनक्षत्रशांतिप्रयोगरश्मिः ॥ पुष्यद्वितीयतृतीयपादयोर्जननेगोप्रसवंकृत्वा नक्षत्राधीशंसंपूज्य ॥ गोदानंकार्यं ॥ प्रथमचतुर्थपादयोर्जननेकेवलमोप्रसवंकृत्वानतुपूजादानं ॥ ॥ अथप्रयोगः ॥ कर्ताजननात्द्वादशाहे तदसंभवेशांत्युक्तशुभदिनेवादेशकालावुच्चार्यअस्यशिशोःपुष्यद्वितीयतृतीयपादयोर्जननसूचित सकलारिष्टनिरसनद्वारा







श्रीपरमेश्वरप्रीत्यर्थं गोमुखप्रसवाख्यांशांतिंकरिष्ये इतिसंकल्प्य ॥ ततःगणेशांबिकयोःपूजनादि आचार्यादीनांवरणं कृत्वा गोमुखप्रसवंकुर्यात् ॥ ततोनक्षत्रेशंपूजयेत् ॥ तद्यथा ॥ देशकालावुच्चार्य अस्यशिशोः पुष्यद्वितीयतृतीयपादयो र्जन्मसूचितसकलारिष्टनिरसनद्वारापुष्याधिपबृहस्पतिप्रीत्यर्थं नक्षत्रेशपूजनमहंकरिष्ये ॥ ततःपुरुषसूक्तेनषोडशोपचारैः संपूज्य ततःआचार्योब्रह्मजज्ञानंअव्ययसश्चेतिपठित्वा ॥ ततःसर्षपैर्दिग्बंधनंकुर्यात् ॥ पंचगव्येनभूशुद्धिंविधाय ॥ प्रति मायाअग्न्युत्तारणादिविधिंकृत्वा ॥ ततःसाष्टदलभूमौविधिनाकलशंसंस्थाप्य ॥ तत्रबृहस्पतिमावाहयेत् ॥ तत्रमंत्रः ॥ ॐ बृहस्पतिनःपरिपात्विति ॥ आवाह्यविधिनानक्षत्रेशपूजयेत् ॥ अनयापूजयानक्षत्राधीशःप्रीयतांनममेंइतिपूजांनिवेद्य॥ अथ गोदानम् ॥ पूजासंभारान्संपाद्य। कर्तादेशकालावुच्चार्यअस्यकुमारस्यपुष्यद्वितीयतृतीयपादयोर्जन्मसूचितसर्वारिष्टशांति पूर्वकाशेष पापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थं ब्राह्मणायगोप्रदानंकरिष्ये ॥ तथाचब्राह्मणवरणंब्राह्मणपूजनंगोपूजनंचकरिष्ये इतिसंकल्प्य ॥ उदङ्मुखंद्विजंसंपूज्य ॥ अथगोपूजनं ॥ प्राङ्मुखींसवत्सांगांविधिनापूजयेत् ॥ यज्ञायज्ञियेसुदुघामिति मंत्रेणयज्ञसाधनभूतायामितिचमंत्राभ्यांषोडशोपचारैःसंपूज्य पूजाकालेधूपदीपात्पूर्वंगवेअलंकारान्दद्यात् ॥ शृंगभूषार्थं सुवर्णं ॥ पादभूषार्थंरजतम् ॥ भालभूषणार्थंआदर्शसुवर्णंच ॥ नेत्रभूषणार्थंरत्नद्वयं ॥ कंठभूषणार्थंघंटाचामरं ॥ यज्ञो पवीतंच ॥ सर्वावयवभूषार्थंपट्टकूलं ॥ पृष्ठभूषणार्थंताम्रं ॥ पुच्छभूषणार्थंमुक्ताफलानि ॥ सप्तधान्यानि ॥ दोहनपात्रम् ॥ एतानिसमर्प्य ॥ प्रार्थनांतेजलकुशाक्षतान् ससुवर्णमाज्यपात्रंगृहीतहस्तं गोपुच्छंवृतार्कं कृत्वा विप्रायदत्वा ॥ तदुपरिजलं सिंचनंकुर्वन्नितिवदेत् ॥ गोस्तारयतु ॥ पुण्यंवर्द्धतां ॥ शिवाआपःसंतुसौमनस्यमस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ दीर्घमायुः श्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ अमुकगोत्रोत्पन्नःअमुकशर्माहंअमुकगोत्रोत्पन्नाय अमुकशर्मणेब्राह्मणायइमांगांसवत्सां रुद्रदैवत्यांदोग्ध्री अव्यंगांहेमशृंगींरौप्यखुरींसद्वस्त्राच्छादितां सुशीलांकांस्यदोहिनी कान्वितांपयस्विनीं ताम्रपृष्ठींघंटा चामरआदर्शगंधपुष्पाद्यर्चितां सर्वालंकारयुतां ॥ यद्वासर्वालंकाराभावे यथाशक्तिद्रव्ययुतां ॥ अस्यकुमारस्यपुष्यद्वितीय तृतीयजन्मसुचित सकलारिष्टशांतिपूर्वकगोरोमतुल्य संवत्सरावधिसकलभोगपरिपूर्वक ईश्वरप्रीतिकामः अमुकशर्मणे

 

ब्राह्मणायतुभ्यमहंसंप्रददे ॥ दानवाक्यं ॥ यज्ञसाधनभूताया विश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवः प्रीयतामनया गवा ॥ इतिमंत्रांते देवस्यत्वा० ॥ प्रतिगृह्यतांप्रतिगृह्णामि० ॥ दानसांगतासिध्यर्थंदक्षिणांदत्वा ॥ अनेनगोदानेनकर्मांग रूपीपरमेश्वरः प्रीयतांनमम ॥ इतिगोदानं ॥ ततःस्थापितकलशोदकेनसपत्नीकं सापत्यंयजमानं हिरण्यवर्णइत्यादिमंत्रै रभिषिच्यप्रतिमांसंपूज्य ॥ अभ्यारउत्तिष्ठेतिविसृज्य श्रेयोग्रहणंदक्षिणादानं आचार्यहस्तेसोपस्करप्रतिमादानंचकृत्वा विप्रान्संपूज्यतान् सदन्नेनभोजयेत् मीलितेभ्योब्राह्मणेभ्योभूयस्यादिदानानि यथाशक्तिकृत्वा शांताद्यौरितिपठित्वा यस्मात्कोशेतिजप्त्वा कृतंकर्मेश्वरार्पणंकुर्यादिति ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौ षट्पत्नागरद्विवेदिरविशंकर कृतेपुष्यजननशांतिप्रयोगरश्मिरष्टचत्वारिंशत् ॥ ४८ ॥ ॥ जगदंबार्पणमस्तु ॥

॥ अथपूर्वाषाढाजननशांतिप्रयोगरश्मिः ॥ पूर्वाषाढातृतीयपादजननेनक्षत्रेशपूजासुवर्णदानं ॥ प्रथमद्वितीय चतुर्थपादजननेदोषाभावान्नतुपूजादिकं ॥ ॥ अथप्रयोगः ॥ कर्त्तादेशकालावुच्चार्यअस्यशिशोः पूर्वाषाढातृतीयपाद जननसूचितसकलारिष्टशांतिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुरुषसूक्तविधिनानक्षत्राधिपप्रतिमापूजनंकरिष्ये ॥ तदंगगणेशां बिकापूजनादिआचार्यादीनांवरणं ॥ सर्षपविकीरणं ॥ पंचगव्येनभूमिशोधनंकृत्वाग्न्युत्तारणादि सर्वंपूर्ववत्परिसमाप्य॥ पूर्वस्यांदिशिकलशस्थापनं ॥ तदुपरिनक्षत्राधिपंस्थापयेत् ॥ ॐआपोहिष्ठा० ॥ अद्भ्योनमः आपस्थापयामीतिरीत्या सर्वत्रपुरुषसूक्तेनशोडषोपचारानदत्वा संप्रार्थ्यपूजानिवेदन ॥ अत्रासर्वत्राग्निस्थापनांतेउदकुंभं प्रत्नोहीतिसंपात्याभि मंत्र्याभिशेककालेअभिशेकःकार्यः एवंसर्वत्रज्ञेयं ॥ अथसुवर्णदानं ॥ देशकालौस्मृत्वा अस्यकुमारस्यपूर्वाषाढातृतीय पादजन्मसूचितसकलारिष्टतिरसनपूर्वकं शुभफलाप्तयेनक्षत्राधीशप्रीतये ब्राह्मणायसुवर्णदानंकरिष्ये ॥ तदंगतयाब्राह्मण पूजनंकरिष्ये ॥ ततःसंपूज्य ॥ हिरण्यगर्भ०प्रयच्छमे ॥ इदंसुवर्णंअग्निदैवतं अमुकगोत्रायामुकशर्मणे ब्राह्मणायतुभ्यमहं संप्रददे॥ दानसांगतासिद्ध्यइमांरजतमयींदक्षिणांतुभ्यमहंसंप्रददे ॥ अनेनसुवर्णदानेनकर्मांगरूपीपरमेश्वरप्रीयतांनमम॥ ततःस्थापितकुंभोदकेन सपरिवारंयजमानंपूर्वोक्तैर्मंत्रैर्ब्राह्मणारभिषिंचेयुः ॥ आज्यावलोकनादिशांतिपाठांतंसर्वंपूर्ववत्

 

 

कृत्वा यस्मात्कोशेतिकृतं कर्मेश्वरार्पणंकुर्यादिति ॥ ॥ इतिश्रीमदथर्वगृह्यप्रयोगभानौषट्पत्नागर द्विवेदिरविशंकरकृते पूर्वाषाढाजननशांतिप्रयोगरश्मिः रेकोनपंचाशत् ॥४९॥

॥ अथोत्तराफाल्गुनीजननशांतिप्रयोगरश्मि तत्रउत्तराफाल्गुनीप्रथमपादजनने नक्षत्राधीशपूजातिलपात्र दानं ॥ तत्रगोप्रसवः ॥ शेषेषुपादेषुदोषाभावान्नपूजादिकं ॥ अथप्रयोगः ॥ जननाद्द्वादशाहेतदसंभवेतन्नक्षत्रदिनेवा देशकालावुच्चार्थ अस्यबालकस्यउत्तराप्रथमपाद जननसूचितसर्वारिष्टोपशांतिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुरुषसूक्तेनविधि नायथामिलितोपचारैर्यथामिलितोपद्रव्यैर्नक्षत्राधीश पूजनमहंकरिष्ये ॥ तदंगगणेशांबिकपूजनपूर्वकं स्वस्तिपुण्याह वाचनादिकरिष्येइतिसंकल्प्य ॥ स्वस्तिवाचनांतेआचार्यंकृत्वा सर्षपविकीरणादिप्रार्थनांतेसाष्ट दलभूमौविधिनाकलशं प्रतिष्ठाप्यपुर्णपात्रेसाष्टदलवस्त्रेहेमनिर्मितकृताग्न्यु त्तारणप्रतिमायांनक्षत्राधीशंपूजयेद् ॥ तत्रमंत्रः ॥ ॐभगंस्तेहस्तमग्र हित्सविताहस्तमग्रहीत् ॥ पत्नीतमसिधर्मणाहंगृहपतिस्तव ॥ इतिमंत्रेणभगायनमः ॥ भगमावाहयामि॥ ततःआसनादि षोडशोपचारैस्तेनैवमंत्रेणपुरुषसूक्तऋग्भिश्चसंपूज्य ॥ प्रार्थनापूर्वकनमस्कारांतेअनयापूजयाश्रीनक्षत्राधीशःप्रीयतामिति वदेत् ॥ इतिपूजानिवेदनं ॥ अत्रापिपूर्व वदुदकुंभसंपातादिकंज्ञेयं अथतिलपात्रदानं ॥ यथाशक्तिताम्रपात्रेवातिलान् क्षिप्त्वा ॥ कर्तादेशकालावनुकीर्त्य ॥ अस्यकुमारस्यउत्तराप्रथमपादजनन सूचितसर्वारिष्टशांतिपूर्वकअशेषपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं ब्राह्मणायतिलपात्रदानंकरिष्ये ॥ तदंगब्राह्मणवरणं तत्पूजनंचकरिष्ये इतिसंकल्प्य ॥ विप्रस्यपाद प्रक्षालनंगंधमाल्यादिपूजांयथाशक्तिकृत्वा ॥ स्वस्त्यस्तुबांइतिवाक्यानिपठेत् ॥ दानवाक्यं ॥ तिलाःकाश्यपसंभूता तिलाःपापहरास्मृताः ॥ तिलपात्रप्रदानेनकुक्षदोषंव्यपोहतु ॥ इदंतिलपात्रदानंअस्यशिशोः उत्तराप्रथमपादजननसूचित सकलारिष्टशांतिपूर्वकअशेषपापक्षयार्थं अमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ दानसांगतासिध्यर्थंदक्षिणादानं ॥ अनेनतिलपात्रदानेनकर्मांगरूपीपरमेश्वरःप्रीयतांनममेतिदाननिवेदनं ॥ ततःपूर्वस्थापितकलशोदकेन सापत्यंसपत्नीकं

 

यजमानं पूर्वोक्तैर्मंत्रैरभिषिच्य ॥ ततःस्थापितदेवतानांपचोपचारैःपूजनं ॥ ततःउत्तिष्ठेतिमंत्रेण विसृज्य ॥ ततोश्रेयो गृहणंदक्षिणादानंआचार्यहस्तेसोपरस्करप्रतिमादानंचकृत्वा ॥ ब्राह्मणान्यथामिलितान्भोजयीत्वा शांतिसूक्तादिपठनं सर्वंपूर्ववत्कृत्वा यस्मात्कोशेतिकर्मसमापनीय मंत्रंपठीत्वाकृतंकर्मेश्वरार्पणंकुर्यादिति ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोग भानौषट्पन्नागर द्विवेदिरविशंकरकृतेउत्तराफाल्गुनीजननशांतिप्रयोगरश्मिःपंचाशत् ॥ ५० ॥

॥ अथमघानक्षत्रजननशांतिप्रयोगः ॥ मघाप्रथमपादजनने मूलवत्फलंतत्रगोप्रसवनक्षत्रेश पूजाग्रहमखाः कार्याः ॥ अवशिष्टत्रयेकेवलगोप्रसवमात्रम् ॥ ॥ अथप्रयोगः ॥ जननात्द्वादशाहेतदसंभवेशांत्युक्तशुभदिनेवा कर्त्ता देशकालावनुकीर्त्य ॥ अस्यशिशोःमघाप्रथमपादजननसूचित सकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थं गोमुखप्रसव शांतिंकरिष्ये ॥ तत्रादौनिर्विघ्नतासिध्यर्थं गणपतिपूजनमहंकरिष्ये इतिसंकल्प्य ॥ गणेशपूजनादिकंसर्वंपूर्ववत् ॥ आचार्यवरणंतत्पूजनंचकृत्वाः ॥ ततःआचार्योब्रह्मजज्ञानमितिकर्मसमारंभणीयमंत्रपाठादिकंकृत्वा सर्षपविकीरणादि प्रार्थनांतेवेद्याम्युक्तरीत्यागोमुखप्रसवशांतिंकृत्वा नक्षत्राधीशंपूजयेत् ॥ तद्यथा ॥ देशकालौसंकीर्त्य अस्यकुमारस्यमघा प्रथमपादजन्मसूचित सकलारिष्टप्रशांतिपूर्वकशुभफलावाप्त्यर्थं नक्षत्राधिपतिपितृस्वरूपि श्रीपरमेश्वरप्रीत्यर्थं ग्रहमख पूर्वकयथासंभवद्रव्यैर्नक्षत्राधीषपूजनमहंकरिष्ये ॥ तदंगगणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनमातृकापूजनं नांदिश्राद्धं आचार्यऋत्विग्वरणंचकरिष्ये इतिसंकल्प्यएतानिकृत्वा ॥ ततोआचार्यःयदत्रसंस्थिता मितिसर्षपविकीरणंकुर्यात् ॥ आपोहिष्ठेतिमंत्रैःपंचगव्येन शुद्धोदकेनच भूप्रोक्षणंप्रतिमाग्न्युत्तारणंचकृत्वा ततःस्थंडिलपूर्वतःगोमयोपलिप्त भूमौशुभ्र चूर्णादिनापंचवर्णैरष्टदलंविरच्य तत्रपुण्याहवाचनोक्तताम्रमयंमृन्मयंवाकलशंप्रतिष्ठाप्य तदुपरिपूर्णपात्रेसाष्टदलवस्त्रेमघा देवतापितृनावाहयेत् ॥ तत्रमंत्रः ॥ संविशंत्विहपितरःस्वानःस्यानकृण्वंतःप्रतिरंतआयुः ॥ तेभ्यःशकेमहविषानक्षमाणा ज्योग्जिवंतःशरदःपुरूचिः ॥ इतिमंत्रेणपितृनसंस्थाप्य ॥ ॐभूर्भुवःस्वर्जनदेपितृभ्योनमः पितृन्नावाहयामि ॥ ततः





पूर्वोक्तरीत्यापुरुषसूक्तेनशोडषोपचारः ॥ अनयापूजयाश्रीनक्षत्राधीशः प्रीयतांनममेतिवदेत् ॥ ततःस्थंडिलेऽग्निंस्थाप यित्वातदीशान्यांसकलाशान्ग्रहानसंस्थाप्य तदीशान्यांद्वितीयंकलशं तदुपरियेपश्चाज्जुह्वतीतिमंत्रेणवरुणंसंस्थाप्यसंपूज्य तत्राऋत्विजमुपवेश्यतेनशांतिकलशोक्त प्रकारेणशांतिपाठंकारयेत् ॥ ततोभ्यात्तानादिपूर्वतंत्रावाघारावाज्यभागौकृत्वा ग्रहमखप्रकरणोक्तप्रकारेण गृहाणांहोमः ॥ ततःप्रधानहोमंकृत्वा प्रत्नोह्यीतिउदकुंभसंपातपूर्वकं कलशेसंपातानदत्वा ॥ स्थापितदेवतानां पुनःपूजनंदिक्पालेभ्यो प्रतिदिशंबलिंदत्वा पूर्णाहुतिःकार्या ॥ अभ्यात्तानाद्युत्तरतंत्रंकृत्वाकलशोदकैः सऋत्विगाचार्योपूर्वोक्तमंत्रैरभिशेकंकुर्यात् ॥ अभिशेकानंतरंविभूतिं कृत्वाज्येमुखंविलोक्यदेवान् विसृज्यश्रेयोग्रहणं दक्षिणादानंप्रतिमादि सर्वोपहारमाचार्यायदत्वा यथाशक्तिब्राह्मणान् सदन्नेनभोजयीत्वान्येभ्यो भूयसींदत्वाशांता द्यौरितिशांतिसूक्तंजप्त्वा यस्मात्कोशेतिपठित्वाकृतं कर्मेश्वरार्पणंकुर्यात् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट् पन्नागरद्विवेदि रविशंकरकृतेमघाजननशांतिप्रयोगरश्मिरेकपंचाशत् ॥ ५१ ॥ ॥ श्रीदक्षिणकालिकार्पणमस्तु ॥

॥ अथविशाखानक्षत्रजननशांतिप्रयोगरश्मिः ॥ विशाखाचतुर्थपादजननेदेवरनाशादि दुष्टफलोक्तेर्गृहमख पूर्विकाशांतिकार्या ॥ आद्यपादत्रयेदोषाभावात्नशांत्यादिकं ॥ ॥ अथप्रयोगः ॥ देशकालावुच्चार्यअस्यशिशोः विशाखातुर्यपादजननसूचित सकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांशांतिंकरिष्य इतिसंकल्प्य गणेश पूजादिसर्वंपूर्ववत्कार्यम् ॥ नक्षत्रप्रतिमानामग्न्युत्तारणपूर्वकंस्थापनं ॥ ततोग्रहहोमप्रधानहोमश्चाभिशेकादिकंसर्वंपूर्व दिति ॥ प्रतिमालक्षणमुक्तं ॥ ताम्रस्फटिकरक्तचंदनसुवर्णरजत लोहसीसंकांस्यमितिनवद्रव्याणिसुवर्णमेकमेववासर्वेषा मिति ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागर द्विजातिरविशंकरकृतेविशाखाजनन शांतिप्रयोगरश्मि र्द्विपंचाशत् ॥ ५२ ॥

॥ अथव्यतिपातवैधृतसंक्रांतिजननशांति प्रयोगरश्मिः ॥ कुमारजन्मकालेतुव्यतिपातश्चवैधृतिः ॥ संक्रमण स्यरवेस्तत्रजातोदारिद्र्यकारकः ॥ अनित्यंमृत्युमाप्नोतिनात्रकार्याविचारणा ॥ स्त्रीणांचशोकदुःखंचसर्वनाशकरोभवेत् ॥

संक्रमणशब्देनसंक्रमणकालात्पूर्वाः पराश्चषोडशघटिकागृह्यंते ॥ द्वात्रिंशदंडैःसंपूर्णसूर्यमंडलस्यराश्यंतरप्रवेशात् ॥ इति
शांतिसारेस्पष्टम् ॥ गोमुखप्रसवंकुर्याच्छांतिंचसनवग्रहाम् ॥ ॥ अथप्रयोगः ॥ उक्तकालेगोमुखप्रसवंकृत्वादेशकालौ
संकीर्त्यअस्यशिशोः व्यतीपातजन्मसंसूचितसर्वारिष्ट परिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सहग्रहमखांशौनकोक्तांव्यतीपात
जननशांतिंकरिष्ये ॥ तदंगगणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनं नांदिश्राद्धंआचार्यऋत्विग्वरणंचकरिष्ये ॥ अथ
संक्रांतिदिनेजननेसंकल्पः ॥ अस्यशिशोःसंक्रांतिपर्वनाडीमध्ये जननसूचितसकलारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं
सग्रहमखांशौनकोक्तांशांतिंकरिष्ये ॥ तदंगगणपतिपूजनादिपूर्ववत् ॥ अथवाएकदिनेव्यतीपातसंक्रमणसत्वेतुतंत्रेणै
कैवशांतिःकर्तव्या ॥ अत्रपूजाहोमादेःप्रसंगात्सिद्धिः ॥ द्विगुणोवाप्रधानहोमइतिभाति ॥ तत्रसंकल्पेविशेषः ॥ अस्य
कुमारस्यव्यतीपात संक्रांत्योर्जननसूचितसर्वारिष्ट परिहारद्वाराश्रीप्रीत्यर्थंसग्रहमखां शौनकोक्तांव्यतीपातसंक्रांतिशांतिं
तंत्रेणकरिष्ये ॥ तदंगगणपतिपूजनादिकंपूर्ववत् ॥ ततःवृताचार्यंगंधादिनासंपूज्य तस्मैपट्टवस्त्रयुगंकुंडलयुगमंगुलीयकंच
दद्यात् ॥ ततआचार्योयदत्रसंस्थितमिति सर्षपविकीरणंपंचगव्येन आपोहिष्ठेत्यद्भिश्चग्रहपूर्वदिग्भागं प्रोक्ष्यस्वस्त्ययनंत्व
मूष्वितिमंत्रौप्रार्थ्य ॥ तत्रगोमयलिप्तेरंगवल्लिभिरलं कृतेसनेदेशेपूर्वोक्तशांतिक्रमरीत्या कलशस्थापनादिकृत्वा ॥ पंच
द्रोणपरिमितंव्रीहिराशिंकृत्वा तदुपरिसार्द्धद्रोणद्वयमित तंदुलराशितदुपरिसपादद्रोणमितं तिलराशिंकृत्वा तत्राष्टदलंच
कृत्वा तत्रात्रणकुंभंस्थापयेत् ॥ इतिक्रमः ॥ तत्रकलशेसर्वौषध्यादिपंचरत्नांतानि पूर्वोक्तानिवस्तूनितत्तन्मंत्रैर्निक्षिप्य
वस्त्रयुग्मेनावेश्यतदुपरिसूक्ष्मवस्त्रयुतपूर्णपात्रंनिधाय तदुपरिनिष्कंतदर्द्धतदर्धान्यतरपरिमितहेमनिर्मित सूर्यप्रतिमांनिधाय
तत्रसूर्यावाहनादिउपचारैःसंपूजयेत् । तद्यथा ॥ व्याहृतीनांपरमेष्ठीप्रजापतीबृहते ॥ विषासहिमथर्वादित्योजगती
आदित्यस्थापनेविनियोगः ॥ ॐभूर्भुवःस्वर्जनदें ॐविषासहिंसहमानं सासहानंसहीयांसं ॥ सहमानंसहोजितंस्वर्जितं
गोजितंसंधनाजितं ईड्यन्नामवइन्द्रमायुष्मान्भूयासं ॥१॥ ॐभूर्भुवःस्वर्जनदेंसूर्यायनमः सूर्यंआवाहयामि ॥ तद्दक्षिणे
अग्नेमन्वेतिब्रह्माग्निःत्रिष्टुप् अग्निस्थापनेविनियोगः ॥ ॐअग्नेर्मन्वेप्रथमस्यप्रचेतसः पांचजन्यस्यबहुधायमिंधते ॥





विशोविशःप्रविशिवांसमीमहेसनोमुंचत्वंहसः ॥ ॐभू० अग्निंआवाहयामि ॥ २ ॥ उत्तरेधातादधात्वंगिराइशानो
गायत्रीइशानस्थापनेविनियोगः ॥ ॐधातादधातुनोरयिमिशानोजगतस्पतिः ॥ सनःपूर्णेनयच्छतुरुद्रंआवाहयामि ॥३॥
संक्रमणशांतिपृथक्करणपक्षेपिप्रधानदेवता सूर्यंतद्दक्षिणेग्निंउत्तरेरुद्रमितिदेवतात्रयमावाह्यसंपूज्य ॥ ॐभूर्भुवःस्वर्जनदें
सूर्याद्यावाहित देवताभ्योनमः आसनंपाद्यमर्घ्यं माचमनीयंस्नानं वस्त्रयुग्मंयज्ञोपवीतंगंधंअक्षतपुष्पधूपदीप नैवेद्यतांबूल
दक्षिणाःसमर्प्य पुष्पांजलींअंतेप्रार्थनापूर्वकनमस्कारानकृत्वा ॥ अनयापूजयाश्रीसूर्याद्यावाहितदेवताःप्रीयंतामितिपूजा
निवेदनं ॥ ततःएकऋत्विजसूर्यप्रतिमांस्पृशन् सर्वसौरमंत्रानजपेत् ॥ ॐउदस्यकेतवइतिसूर्यसूक्तस्यकण्वपुत्रःप्रष्कण्वो
अनुष्टुबादिनानाछंदांसिजपेविनियोगः ॥ अथसूर्यसूक्तप्रारंभः ॥ ॐउदस्यकेतवोदिविशुक्राभ्राजंतईरते ॥ आदित्य
स्यनृचक्षसोमहिव्रतस्यमीढुषः ॥ दिशांप्रज्ञानांस्वरयंतमर्चिषासुपक्षमाशुंपतयंतमर्णवे ॥ स्तवामसूर्यंभुवनस्यगोपांयोरश्मि
भिर्दिशआभातिसर्वाः ॥ २ ॥ यत्प्राङ्प्रत्यङ्स्वधयायासिशीभंनानारूपेअहनिकर्षिमायया ॥ तदादित्यमहितत्तेमहि
श्रवोयदेकोविश्वंभूरिभूमजायसे ॥ ३ ॥ विपश्चितंतरणिंभ्राजमानंवहंतियंहरितःसप्तबह्वीः ॥ स्रुतादृयमत्रिर्दिवमुन्निनाय
तंत्वापश्यंतिपरियांतमाजिम् ॥ ४ ॥ मात्वादभन्परियांतमाजिं स्वस्तिदुर्गांअतियाहिशीभं ॥ दिवंचसूर्यपृथिवींचदेवी
महोरात्रेविमिमानोयदेषि ॥ ५ ॥ स्वस्तितेसूर्यचरसेरथाययेनोभावंतौपरियासिसद्यः ॥ यंतेवहंतिहरितोवहिष्ठाः
शतमश्वायदिवासप्तबह्वीः ॥ ६ ॥ सुखंसूर्यरथमंशुमंतंस्योनंसुवन्हिमधितिष्ठवाजिनं ॥ यंतेवहंतिहरितोवहिष्ठाः शत
मश्वायदिवासप्तबह्विः ॥७॥ सप्तसूर्योहरितोयातवेरथेहिरण्यत्वचसोबृहतिरयुक्त ॥ अमोचिशुक्रोरजसःपरस्ताद्विधूय
देवस्तमोदिवमारुहत् ॥ ८ ॥ उत्केतुनाबृहतादेवआगन्नपावृक्तमोत्रिज्योतिःरश्रैत् ॥ दिव्यःसुपर्णसवीरोव्यरूयददितेः
पुत्रोभुवनानिविश्वा ॥ ९ ॥ उग्रत्वश्मीनातनुषेविश्वारूपाणिंपुष्यसि ॥ उभासमुद्रौकृतुनाविभासिसर्वांल्लोकान्परिभूर्भ्रा

जंमानः ॥ १० ॥ ॥ पूर्वापरंचरंतोमाययैतौशिशूक्रीडंतौपरियातोर्णवं ॥ विश्वान्योभुवनाविचष्टेहैरण्यैरन्यंहरितोवहंति
॥१॥ दिषित्वात्रिरधारयत्सूर्यामासायकर्त्तवे ॥ सएषिसुधृतस्तपन्विश्वाभूतावचाकशत् ॥ २ ॥ उभावंतौसमर्षसिवत्सः
संमातरावित्य ॥ नत्वेइंतदितः पुराब्रह्मदेवाअमीविदुः ॥ ३ ॥ यत्संमुद्रमनुश्रितंतत्सिषासतिसूर्यः ॥ अध्वास्यवितंतो
महान्पूर्वश्चापरश्चयः ॥ ४ ॥ तंसमाप्नोतिजूतिभिस्ततोनापचिकित्सतितंनामृतस्यभक्षंदेवानांनावरुंधते ॥ ५ ॥ उदुत्यं
जातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ ६ ॥ अपत्येतायवोयथानक्षत्रायंत्यक्तुभिः ॥ सुरायविश्वचक्षसे ॥७॥
अदृश्रन्नस्यकेतवोविरश्मयोजनांअनु ॥ भ्राजंतोअग्नयोयथा ॥ ८ ॥ तरणिर्विश्वदर्शतोज्योतिः कृदंसिसूर्य ॥ विश्वमा
भासिरोचनं ॥ ९ ॥ प्रत्यङ्देवानांविशः प्रत्यङ्देषिमानुषीः ॥ प्रत्यङ्विश्वंस्वर्दृशे ॥ १० ॥ ॥ येनापावकचक्षसा
भुरण्यंतंजनांअनु ॥ त्वंवरुणपश्यसि ॥ १ ॥ विद्यामेषिरजस्पृथ्वहामानोअक्तुभिः ॥ पश्यन्जन्मानिसूर्य ॥ २ ॥ सप्तत्वा
हरितोरथेवहंतिदेवसूर्य ॥ शोचिःषकेशंविचक्षणम् ॥३॥ अयुक्तसप्तशुंध्युवःसूरोरथस्यनप्त्यः ॥ ताभिर्यातिस्वयुक्तिभिः
॥४॥ रोहितोदेवमारुहन्तपसातपस्वी ॥ सयोनिमैतिसउजायतेपुनः ॥ सदेवानामधिपतिर्बभूव ॥ ५ ॥ योविश्वचर्षणी
रुतविश्वतोमुखोयोविश्व तस्पाणिरुतविश्वथस्पृथः ॥ संबाहुभ्यांभरतिसंपतत्रैर्द्यावापृथिवीजयमन्देवएकः ॥ ६ ॥ एकं
पाद्विपदोभूयोविचक्रमेद्विपात्त्रिपाधमभ्येतिपश्चात् ॥ द्विपाद्धषट्पदोभूयोविचक्रमेतएकपदस्तन्वं१समासते ॥ ७ ॥
अतंद्रोयास्यन्हरितोयदास्थाद्द्वेरूपेकृणुतेरोचमानः ॥ केतुमानुद्यन्त्सहमानोरजांसिविश्वाआदित्यप्रवतोविभासि ॥ ८ ॥
बण्महांअसिसूर्यबडादित्यमहांअसि ॥ महांस्तेमहतोमहिमात्वमादित्यमहांअसि ॥ ९ ॥ रोचसेदिविरोचसेअंतरिक्षे
पतंगपृथिव्यांरोचसेरोचसेअप्स्वं१तः ॥ उभासमुद्रौरुच्याव्यापिपदेवोदेवासिमहिषःस्वर्जित् ॥ १० ॥ ॥ अर्वाङ्म





रस्तात्प्रयतोव्यध्व आसुर्दिवश्चित्पतयन्पतंगः ॥ विष्णुर्विचितःशवसाधितिष्ठन्प्रकेतुनासहतेविश्वमेजत ॥ १ ॥ चित्रश्चि
कित्वान्महिषः सुपर्णआरोचयंरोदसीअंतरिक्षं ॥ अहोरात्रेपरिसूर्यंवसानेप्रास्यविश्वातिरतोवीर्याणि ॥ २ ॥ तिग्मोवि
भ्राजन्तन्वं३शिशानोरंगमासःप्रवतोरराणः ॥ ज्योतिष्मान्पक्षीमहिषोवयोधाविश्वाआस्थात्प्रदिशःकल्पमानः ॥ ३ ॥
चित्रंदेवानांकेतुरनीकंज्योतिष्मान्प्रदिशः सूर्यउद्यन् ॥ दिवाकरोतिद्युम्नैस्तमांसिविश्वातारीदुरितानिशुक्रः ॥४॥ चित्रं
देवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्च ॥ ५ ॥ उच्चापतंत
मरुणंसुपर्णंमध्येदिविस्तरणिंभ्राजमानं ॥ पश्यामत्वासवितारंयमाहुरजस्रंज्योतिर्यदविंददत्रिः ॥६॥ दिवस्पृष्ठेधावमानं
सुपर्णमादित्याःपुत्रंनाथकामउपयामिभीतः ॥ सनःसूर्यप्रतिरदीर्घमायुर्मारिषामसुमतौतेस्याम ॥ ७ ॥ सहस्राण्यंवियता
वस्यपक्षौहरेर्हंसस्यपततस्वर्गम् ॥ सदेवांत्सर्वानुरस्युपदद्यसंपश्यन्यातिभुवनानिविश्वा ॥ ८ ॥ रोहितःकालोअभवद्रोहि
तोग्रेप्रजापतिः ॥ रोहितोयज्ञानांमुखंरोहितस्व३राभरत् ॥ ९ ॥ रोहितोलोकोअभवद्रोहितोत्यतपद्दिवम् ॥ रोहितो
रश्मिभिर्भूमिंसमुद्रमनुसंचरत् ॥१०॥ सर्वादिशःसमचरद्रोहितोधिपतिर्दिवः ॥ दिवंसमुद्रमाद्भूमिंसर्वंभूतंविरक्षति ॥१॥
आरोहन्छुक्रोबृहतीरतंद्रोद्वेरूपेकृणुतेरोचमानः ॥ चित्रश्चिकित्वान्महिषोवातमायायावतोलोकानभियद्विभाति ॥ २ ॥
अभ्य३न्यदेतिपर्यन्यदस्यतेहोरात्राभ्यांमहिषःकल्पमानः ॥ सूर्यंवयंरजसिक्षियंतंगातुविदंहवामहेनाधमानाः ॥ ३ ॥
पृथिवीप्रोमहिषोनाधमानस्यगातुरदब्धचक्षुः परिविश्वंबभूव ॥ विश्वंसंपश्यन्त्सुविदत्रोयजत्रइदंशृणोतुयदहंब्रवीमि ॥४॥
पर्यस्यमहिमापृथिवींसमुद्रंज्योतिषाविभ्राजन्परिद्यामंतरिक्षं ॥ सर्वंसंपश्यन्त्सुविदत्रोयजत्रइदंशृणोतुयदहंब्रवीमि ॥५॥
अबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासं ॥ यह्वाइवप्रवयामुज्जिहानाःप्रभानवः सिस्रतेनाकमच्छ ॥६॥ इति

सूर्यसूक्तंपठेत् ॥ ततोएकऋत्विक्रुद्रप्रतिमांस्पृशन् मृत्युंजयमंत्रमष्टोत्तरशतमष्टाविंशतिवारंवाजपेत् ॥ ततश्चत्वारऋत्विज
श्चतुर्दिक्षुकुंभंस्पृष्ट्वा पूर्वोक्तक्रमेणसूक्तानिजपेयुः ॥ तत्रापिपूर्वमनुक्तत्वादग्निसूक्तंलिख्यते ॥ ॐ अग्नाविष्णुमहितद्वां
महित्वंपाथोघृतस्यगुह्यस्यनाम ॥ दमेदमेसप्तरत्नादधानौप्रतिवांजिह्वाघृतमाचरण्यात् ॥ १ ॥ अग्नाविष्णुमहिधामप्रियं
वांवीथोघृतस्यगुह्यांजुषाणौ ॥ दमेदमेसुष्टुत्यावांवृधानौप्रतिवांजिह्वाघृतमुच्चरण्यात् ॥२॥ स्वाक्तंमेद्यावापृथिवीस्वाक्तं
मित्रोअकरयम् ॥ स्वाक्तंमेब्रह्मणस्पतिः स्वाक्तंसविताकरत् ॥ ३ ॥ इंद्रोतिभिर्बहुलाभिर्नोअद्ययाच्छ्रेष्टाभिर्मघव
छूरजिन्व ॥ योनोद्वेष्टयधरःसस्पदीष्टयमुद्विष्मस्तमुप्राणोजहातु ॥ ४ ॥ उपप्रियंपनिप्नतंयुवानमाहुतीवृधं अगन्मबिभ्रतो
नमोदीर्घमायुःकृणोतुमे ॥ संमासिंचंतुमरुतःसंपूषासंबृहस्पतिः ॥ संमायमग्निःसिंचतुप्रजयाचधनेनचदीर्घमायुःकृणो
तुमे ॥५॥ इत्यग्निसूक्तं ॥ ततःपूर्वोक्तशांतिक्रमरीत्यासूक्तानिजपित्वा ॥ ततःकुंभपश्चिमदेशेऽग्निंस्थंडिलेस्वगृह्योक्त
विधिनाप्रतिष्ठाप्य ॥ कुंभस्योत्तरतोग्रहणामावाहनादिपूजांकृत्वा तदीशान्यांकलशेवरुणंसंपूज्य तत्रएकंब्राह्मणंशांति
पाठजपार्थंवृणुयात् ॥ ततोग्नेपश्चिमतःउपविश्यअभ्यात्तानादिपूर्वतंत्रंप्रत्नो हीत्युदकुंभंसंपात्याभिमंत्र्य उक्तरीत्याग्रहहोमं
कृत्वा सूर्यमष्टोत्तरशतचर्वादिद्रव्यैरग्निरुद्राभ्या मष्टाविंशतिभिश्चर्वाद्युक्त द्रव्यैर्होमःकार्यः ॥ त्र्यंबकमंत्रेणअष्टोत्तरशत
होमश्च ॥ होमांतेस्थापितदेवतानांपंचोपचारैःपूजनं ततःचरुतिलाज्यद्रव्येणास्विष्टकृतंहुत्वा ॥ ततःप्रायश्चित्ताहुत्यंते
बलिदानं ॥ ततःपूर्णाहुतिः ॥ अग्न्यर्चनांतेधृतनूतनवस्त्रयेर्दंपत्योःसबालयोः अभिशेकःपूर्वोक्तशांत्युक्तरीत्याकार्यः ॥
ततःवासःआचार्याय समर्प्यसपत्नीकःश्वेतवस्त्र चंदनादिधृत्वा भूषणमालादिनालंकृतः आज्यावलोकनंकृत्वा तत्पात्रं
सदक्षिणंब्राह्मणायदत्वा त्र्यायुषमितिविभूतिंधृत्वास्थापितदेवतानां उत्तरपूजनांतेदेवतांविसृज्य ततःश्रेयोग्रहणंमूर्तिदानं
चकृत्वा ततोवस्त्रहेमांगुलीयकैराचार्यंसंपूज्य ॥ व्यतीपातजननदोषशांत्यर्थं गोवस्त्रस्वर्णानितुभ्यंसंप्रददे इतिआचार्याय
तानिदत्वा दीनांधकृपणेभ्याभूयसींदत्वा तदर्थंप्रच्छादनपटंतथैवदद्यात् ॥ ऋत्विग्भ्योयथाशक्तिदक्षिणांदत्वाशतब्राह्मणान्









ऋत्विग्भिः सहमिष्टान्नैर्भोजयित्वा शांताद्यौरितिशांतिसूक्तंपठित्वा यस्मात्कोशेतिकर्म समापणीयमंत्रंजहृत्वा कर्मपूर्णतां
वाचयीत्वा कृतंकर्मेश्वरार्पणंकुर्यादितिकर्मणानेनभगवान् कर्मरूपीप्रीयतांनमम ॥ ॥ इतिश्रीमदथर्ववेदगृह्यसूत्रप्रयोगभानौ
षट्पन्नागर द्विवेदिरविशंकरकृते व्यतीपातसंक्रमणशांतिप्रयोगरश्मिः त्रिपंचाशत् ॥५३॥

॥ अथकालिकायैनमः ॥ ।. अथवैधृतिशांतिप्रयोगरश्मिः ॥ उक्तकालेगोससवंकृत्वा देशकालौसंकीर्त्य
अस्यशिशोःकुमार्यावा वैधृतौजननसूचितसकलारिष्ट परिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशौनकोक्तांवैधृतिजनन
शांतिंकरिष्ये ॥ तदंगगणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनं मातृकापूजनंनांदीश्राद्धंआचार्यं ऋत्विग्वरणंचकरिष्ये ॥
एतानिपूर्ववत्कृत्वा ॥ ब्रह्मजज्ञानंअव्यसश्चेतिपठित्वा वृताचार्यःसर्षपविकीरणादिप्रार्थनांते गोमयोपलिप्तभूमौपंचद्रोण
परिमितव्रीहिराशिं कृत्वातंसमंकृत्वा तदुपरिसार्द्धद्वय परिमितद्रोणराशिंतंदुलेनकृत्वा तदुपरिसपादद्रोणपरिमिततिल
राशिंकृत्वा तत्राष्टदलेकुंभंविधिनाप्रतिष्ठाप्य तन्मध्येपंचगव्यमंत्रैः पंचगव्यंक्षिपेत् ॥ कलशोपरिपूर्णपात्रेसाष्टदलवस्त्र
हेमनिर्मितप्रतिमात्रयंसंस्थाप्य ॥ तद्यथा ॥ सव्याहृतिकरुद्रमंत्रेणमध्येरुद्रमावाह्य तद्दक्षिणेसूर्यमंत्रेणसूर्यमावाह्य उत्तरतःसोम
मंत्रेणसोममावाह्य॥ देवतात्रयंशोडषोपचारैःसंपूज्य ॥ ततोरुद्रप्रतिमांस्पृष्ट्वामृत्युंजयमंत्रेणअष्टोत्तरशतंजपः॥ सूर्यप्रतिमां
स्पृष्ट्वासर्वसौरजपः न ततःसोमप्रतिमांस्पृष्ट्वाशकधूममितिमंत्रेणाष्टोत्तरशतंजपः ॥ अथस्थंडिलेऽग्निंप्रतिष्ठाप्यतदीशान्यां
ग्रहपीठदेवतामावाह्य तदीशान्यांकलशेवरुणंसंपूज्य ततःअभ्यात्तानादिपूर्वतंत्रंहोमं॥ प्रत्नोहीत्युदकुंभसंपातश्च ॥कृत्वा॥
ग्रहपीठदेवताहोमंकृत्वा ॥ ततःप्रधानहोमः ॥ अत्रप्रधानंरुद्रंप्रत्येक मष्टोत्तरशतसंख्याकाभिः समिच्चर्वाज्याहुतिभिः ॥
सूर्यसोमंचप्रत्येकमष्टाविंशतिसंख्याभिस्तदाहुतिभिः॥ मृत्युंजयंत्र्यंबकमंत्रेणाष्टोत्तरशतसंख्याकाभिस्तिलाहुतिभिर्हुत्वा॥
होमांतेस्थापितदेवतानांपंचोपचारैःपूजनं ॥ चरुतिलाज्यद्रव्येणस्विष्टकृतंहुत्वा ततःप्रायश्चित्तहोमांते बलिदानं ततः
पूर्णाहुतिः ॥ ततःअग्न्यर्चनांतेअभ्यात्तानाद्युत्तरतंत्रंसर्वंविधाय॥ ततःदंपत्योःसबालयोरभिषेकः॥ तत्रमंत्राः ॥ पूर्वोक्त
प्रकारेणरुद्रसूक्तेनसूर्यसूक्तेन ततःसोमसूक्तेनवरुणसूक्तेनअभिशेकः कार्यः ॥ अभिशेकेसर्वत्रमौंजीबंधनमितिज्ञेयं ॥ तत्र

सोमसूक्तस्यानुक्तत्वादत्रलिख्यते ॥ अथसोमसूक्तम् ॥ ॐशकधूमंनक्षत्राणि यद्राजानमकुर्वत ॥ भद्राहमस्मैप्रायंछनिदं राष्ट्रमसादिति ॥ १ ॥ भद्राहन्नोमध्यंदिने भद्राहंसायमस्तुनः ॥ भद्राहन्नोअह्नांप्रातरात्रीभद्राहमस्तुनः ॥ २ ॥ अहोरात्राभ्यांनक्षत्रेभ्यःसूर्याचंद्रमसाभ्याम् ॥ भद्राहमस्मभ्यं राजन्छकंधूमत्वंकृधि ॥ ३ ॥ योनोभद्रामकरःसायंनक्तमथो दिवा ॥ तस्मैतेनक्षत्रराजशकंधूमसदानमः ॥ ४ ॥ इतिसोमसूक्तं ॥ सुरास्त्वेत्यादिपौराणमंत्रैश्चाभिषिंचेयुः ॥ ततो यजमानोरूपंरूपमितिमंत्रेणाज्यावलोकनंकृत्वा तत्पात्रंसदक्षिणंद्विजाय दत्वात्र्यायुषमितिविभूतिधारणंकृत्वा प्रतिमाना मुत्तरपूजांतेविसर्जनंकृत्वा ततोश्रेयोग्रहणंआचार्यहस्तेसोपस्कर प्रतिमात्रयदानंकृत्वा आचार्यायवस्त्रद्वयंदत्वा गांहेमांगुलीयकादिसुवर्णप्रछादनपटंचदत्वा ॥ ऋत्विग्भ्यश्चदक्षिणांदत्वा ॥ शतंब्राह्मणानृत्विग्भ्यश्चभोजयेत् ॥ शांताद्यौरिति शांतिपाठंकृत्वा यस्मात्कोशेतिजप्त्वा ॥ कृतंकर्मार्पणमीश्वरायेतिवदेत् ॥ संक्रांतिदिनेवैधृतिसत्वेदेवताभेदाशांतिद्वयं पृथक्कार्यमिति ॥ ॥ इतिश्रीमदर्थवगृह्यसूत्रप्रयोग भानौषद्पन्नागर द्विवेदिरविशंकरकृते वैधृतीशांतिप्रयोगरश्मिश्चतुःपंचाशत् ॥ ५४ ॥

॥ अंबाय्यैनमः ॥ ॥ अथैकनक्षत्रजननशांतिप्रयोगरश्मिः ॥ ॥ अेकस्मिन्नेवनक्षत्रेभ्रात्रोर्वापितृपुत्रयोः ॥ प्रसूतिश्चोभयोर्मृत्युभयो एकस्यनिश्चितः ॥ पितृनक्षत्रेमात्रनक्षत्रेवाकन्यायापुत्रस्य वोत्पत्तौगोमुखप्रसवरहित शांतिमात्रं कार्यं ॥ अथप्रयोगः ॥ देशकालौसंकीर्त्य ॥ ब्रह्मजज्ञानंअध्यसश्चेति यथासंभवंपठित्वा ॥ अस्यशिशोःपित्रैकनक्षत्रोत्पत्ति सूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं एकनक्षत्रजननशांतिंकरिष्ये ॥ एवंमात्रादिनक्षत्रोत्पत्तौ संकल्पे तथोहःतत्रादौनिर्विघ्नतासिध्यर्थं गणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदिश्राद्धंआचार्य ऋत्विग्वरणं चकरिष्ये इतिसंकल्प्य ॥ एतानिकृत्वा ॥ अत्रनांदीश्राद्धमावश्यकम् ॥ इतिमयूखेस्पष्टं ॥ अन्यमतेनावश्यकं ॥ अत्रग्रहमखोनावश्यकः ॥ ततःआचार्योयदत्रसंस्थितमितिसर्षपविकीरणं पंचगव्येनभूमिप्रोक्षणप्रार्थनानिचकृत्वा ॥ ततः





स्थंडिलादीशांन्यांअष्टदलो परिविधिनाकलशंसंस्थाप्य तत्ररक्तवस्त्रेयस्मिन्नक्षत्रे जन्मतन्नक्षत्रप्रतिमांचित्राणि साकमिति सूक्तेनतन्नक्षत्रदेवताप्रतिमांवापूजयेत् ॥ वस्त्रार्पणकालेवस्त्रद्वयंसमर्पयेत् ॥ ततोग्निस्थंडिलेप्रतिष्ठाप्य ॥ इछाचेद्ग्रहपीठ देवतास्थापनंअथवाप्रथक्स्थापनम् ॥ अभ्यात्तानादिपूर्वतंत्रंपरिसमाप्य॥ पन्नोहीतिसूक्तेनाज्यहोमउदकुंभसंपातश्चकार्यः॥ एवंनक्षत्रदेवतानक्षत्राणिचचर्वादिद्रव्यैः प्रतिदैवतमष्टोत्तरशतंचित्राणी साकमितिसूक्तेनहोमंकृत्वा ॥ स्विष्टकृदादिप्राय-श्चित्तहोमांतेग्रहस्थापनपक्षे बलिदानंचकृत्वा ॥ अकृतपक्षेवलिदानाभावः ॥ अस्मिन्पक्षेसुवर्णप्रतिमायां विष्णुरौप्यप्रतिमायांरुद्रंचसंपूज्य ॥ आचार्यायान्यस्मैवासदक्षिणांदत्वा ॥ देशकालौसंकीर्त्य ॥ अस्यशिशोःपित्रैकनक्षत्रोत्पत्तिसूचित सकलारिष्ट परिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं ब्राह्मणायहरिहरमूर्त्तिदानंकरिष्ये ॥ तदंगब्राह्मणवरणंतत्पूजनंचकरिष्ये ॥ द्विजंसंपूज्य ॥ स्वस्त्यस्तुइत्यादिवाक्यान्पठेत् ॥ दानवाक्यं ॥ त्रिविश्वस्यास्यविश्वस्य पितरौत्रिश्वतोमुखौ ॥ प्रीयेतांमूर्त्तिदानेनदेवौहरिहरावुभौ ॥ इमेमूर्त्तीदक्षिणा सहितेएकनक्षत्रजननारिष्ट परिहारार्थंअमुकशर्मणेब्राह्मणाय तुभ्यमहंसंप्रददे तेनहरिहरप्रतिमाद्वय दानेनभगवान्कर्मांगरूपींपरमेश्वरःप्रीयतांनमम ॥ ततःदानांतेपूर्णाहुतिहोमः ॥ ताताेभ्यात्तानाद्युत्तरतंत्रंपरिसमाप्य अग्न्यर्चनांतेआचार्यः कलशोदकेनययोरेकनक्षत्रे जन्मतयोरभिषेकःपूर्वोक्तरीत्या अभिषेकंकृत्वा॥ ततोविभूतिंधृत्वा ॥ नक्षत्रेदेवताःसंपूज्यविसृज्यश्रेयोग्रहणंकृत्वा॥ आचार्यायप्रतिमादानंगोवस्त्रालंकार दानंच यथासंभवंकृत्वा माषत्रयपरिमितंसुवर्णंऋत्विग्भ्योदत्वा ॥ ततोधान्यवस्त्रादिभिःसहयान शय्यासनादीनांब्राह्मणांतरेभ्योदानंदत्वा न्येभ्योभूयसींदत्वा ॥ तैःसहाचार्यर्त्विजोभोजयित्वा ॥ पूर्णतांवाचयित्वाशांताद्यौरितिशांतिपाठं कृत्वा यस्मात्कोशेतिकृतं कर्मेश्वरार्पणंकुर्यादिति ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषद्पन्नागरद्विवेदि रविशंकरकृतेएकनक्षत्रजननशांतिप्रयोगरश्मिःपंचपंचाशत् ॥ ५५ ॥

॥ ॐश्रीमन्महाकालिकायैनमः ॥ ॥ अथग्रहणशांतिप्रयोगरश्मिः ॥ ग्रहणेसूर्यचंद्रस्यप्रसूतिर्यदिजायते॥ इत्थंसंजायतेयस्तु तस्यमृत्युर्नसंशयः ॥ व्याधिपीडाचदारिद्र्यंशोकश्चकलहोभवेत् ॥ अत्रगोमुखप्रसवःकार्यइतिभाति ॥

ग्रहमखस्तुकृताकृतः ॥ अथप्रयोगः ॥ सूर्यग्रहणप्रसूतौ तत्कालस्थितनक्षत्रस्यनक्षत्रदेवतायाप्रतिमां सूर्यस्यचयथाशक्ति
हेम्नाप्रतिमेविधायराहोः सीसेननागाकृतिंकृत्वा ॥ शौचांतेदेशकालौसंकीर्त्य ममभार्यायाःसूर्यग्रहणकालीनप्रसूतिसूचित
सर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीतयेसग्रहमखांशांतिंकरिष्ये ॥ तदंगगणपतिपूजनपूर्वकंस्वस्तिपुण्याहवाचनं मातृका
पूजनंनांदिश्राद्धमाचार्यवरणंचकरिष्ये ॥ इतिसंकल्प्य ॥ ततःआचार्योब्रह्मजज्ञानं अव्यसश्चेतियथाकालंपठित्वा यदत्र
संस्थितमितिसर्षपविकीरणं पंचगव्यशुद्धोदकाभ्यां भूमिप्रोक्षणंप्रार्थनांतं शुचिदेशेगोमयोपलिप्त भूमौअष्टदलेनवंसदशं
क्षालितंश्वेतवस्त्रंप्रसार्य तत्रमध्येसूर्यप्रतिमांसूर्यमंत्रेण अग्न्युत्तारणपूर्वकंप्रतिष्ठाप्य ॥ तद्दक्षिणेनागाकृतिराहुप्रतिमायांराहुं
मंत्रेणराहुंसंस्थाप्य ॥ ततःसूर्यस्योत्तरतःनक्षत्रदेवतांतन्मंत्रैर्नाममंत्रैर्वापूजयेत् ॥ नात्रकलशस्थापनादि ॥ पूजाकाले
सूर्यरक्तवर्णैर्वस्त्रगंधाक्षतपुष्पैःपूजयेत ॥ कृष्णगंधाक्षतपुष्पैःराहुंपूजयेत् ॥ ततोस्थंडिलेऽग्निंप्रतिष्ठाप्य तदीशान्यांग्रहपीठ
देवतांचसंस्थाप्य ॥ तदीशान्यांकलशेवरुणंसंपूज्य अभ्यात्तानादिपूर्वतंत्रंप्रत्नोहीत्युदकुंभंसंस्पात्याभि मंत्र्यत्यागंचतत्र
कृत्वा ॥ ततःसवितारंअर्कसमिदाज्यचरुतिलानां प्रत्येकमष्टोत्तरशताहुतिभिः ॥ राहुंदूर्वाज्यचरुतिलैस्तावत्संख्याभिः
नक्षत्रदेवतांजलवृक्षसमिदाज्यचरु तिलैस्तावत्संख्ययाहोमंकृत्वा ॥ शेषेणस्विष्टकृद्धोमः ॥ एवंप्रधानहोमंकृत्वा प्राय-
श्चित्तांतेबलिदानंपूर्णाहुतिश्च ॥ ततःअभ्यात्तानाद्युत्तरतंत्रंसमाप्य ॥ अग्न्यर्चनांतेग्रहकलशोदकेन अथवापंचगव्यंच
रत्नंपंचत्वक् पंचपल्लवैरोषधकल्कैश्च मिश्रितलौकिकजलैरभिषेकः ॥ ततःपूर्वोक्तप्रकारेणअभिषेकंकृत्वा ॥ आचार्यं
संपूज्यतस्मैप्रतिमात्रयंदक्षिणांचदत्वा ॥ ततोग्रहाणांपूजनविसर्जने प्रतिमाप्रतिपादनं ब्राह्मणभोजनसंकल्पश्चेतिसर्वंपूर्व
शांतिप्रकरणोक्तवत्कार्यं ॥ वेधकालेजन्मनिनैवशांतिः किंतुदुष्टकालाद्रुद्राभिषेकःकार्यइतिभाति ॥ शांताद्यौश्चेति
यस्मात्कोशेतिपठित्वा ॥ कृतंकर्मेश्वरार्पणंकुर्यात् ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौ षट्पन्नागरद्विजातिरविशंकर
कृतेसूर्यग्रहणेजननशांतिप्रयोगरश्मिः षट्पंचाशत् ॥ ५६ ॥

॥ अथचंद्रग्रहणजननशांतिप्रयोगरश्मिः ॥ कर्तादेशकालौसंस्मृत्य ममभार्यायाःचंद्रग्रहणकालीनप्रसूतीसूचित





सर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशांतिंकरिष्ये ॥ तदंगगणपतिपूजनपूर्वकंस्वस्तिपुण्याहवाचनं नांदि
श्राद्धादिकरिष्येतिसंकल्प्येएतानिकृत्वा । ततःआचार्यवरणंतत्पूजनंचकृत्वा ॥ ततोआचार्यःसर्षपविकीरणादिप्रार्थनांते
गोमयोपलिप्तभूमौनवंश्वेतंवस्त्रंप्रसार्यतस्योपरिमध्येराजतंचंद्रबिंबंशकधूममितिसोममंत्रेण आवाह्यतद्दक्षिणे राहुंउत्तरेनक्षत्र
देवतांनक्षत्रसूक्तेनावाह्य शोडषोपचारैसंपूज्य ॥ ततःस्थंडिलेऽग्निंप्रतिष्ठाप्य॥ तदीशान्यांग्रहानावाह्य॥ अभ्यात्तानादिपूर्व
तंत्रंसमाप्य ॥ प्रधानहोमः ॥ चंद्रमष्टोत्तरशतसंख्याकाभिः पलाशसमिदाहुतिभिस्तावतिभिराज्याहुतिभिः तिलाहुति
भिश्चर्वाहुतिभिश्चराहुमष्टोत्तरशतसंख्याकाभिः प्रत्येकंदूर्वातिलाज्यचर्वाहुतिभिः ॥ नक्षत्रदेवतांप्रत्येकमष्टोत्तरशतसंख्या
काभिः ॥ जलवृक्षसमिदाज्यचरुतिलाहुतिभिः ॥ शेषेणस्विष्टकृदादि सर्वंहुत्वाअभ्यात्तानाद्युत्तरतंत्रंविधाय सूर्यग्रहण
शांतिवत्सर्वंकृत्यं कर्त्तव्यमित्यलंविस्तरेग ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौ षट्पन्नागरद्विवेदिरविशंकरकृते
चंद्रग्रहणेजननशांतिप्रयोगरश्मिःसप्तपंचाशत् ॥ ५७ ॥

॥ अथविघ्नहर्त्रेनमः ॥ अथनक्षत्रगंडांतशांतिप्रयोगरस्मिः ॥ रेवत्यश्लेषाज्येष्टानक्षत्राणामत्यघटिद्वयमश्विनी
मघामूलानामाद्यघटिद्वयमितिघटिका चतुष्टयमितत्रिविधंनक्षत्रगंडांतम् ॥ अथस्पष्टोर्थः ॥ रेवतीनक्षत्रस्यअंतघटिका
द्वयमितिघटिकाचतुष्टयपरिमितसंधिनक्षत्रंगंडांतं ॥ अेवंअश्लेषामघानक्षत्रयोः ज्येष्ठामूलनक्षत्रौचज्ञेयौअश्विनीमघामूलाना
पूर्वार्द्धेबाध्यतेपिता ॥ पूषाहिशंकपश्चार्द्धेजननी बाध्यतेशिशोः ॥ पूषारेवती ॥ अहिरश्लेषा ॥ शुक्रज्येष्ठा ॥ सर्वेषांगंड
जातानांपरित्यागोविधियते ॥ वर्जयेद्दर्शनंयावत्तस्यांषाण्मासकंभवेत् ॥ शांतिर्वापुष्कलाकार्यासोममंत्रेणभक्तिमान् ॥
अथप्रयोगः ॥ षण्मासोत्तरमथवाजननादेकादशे हनिप्रथमतोगोप्रसवंकृत्वा देशकालौसंकीर्त्यममास्यशिशोः रेवत्य
श्विनीसंध्यात्मकगंडांतजननसूचितसर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं नक्षत्रगंडांतशांतिंकरिष्ये ॥ तदंगगणपति
पूजनपूर्वकंस्वस्तिपुण्याहवाचनं मातृकापूजनंनांदिश्राद्धंचकरिष्येइतिसंकल्प्य ॥ एतानिकृत्वा ॥ ततोअस्मिन्कर्मणि
याजुर्वेदज्ञाचार्यंवृत्वा ततोऋत्विग्वरणांतेतंचंदनशुक्लमाल्यैः क्षौमवासोभ्यांसंपूजयेत् ॥ षोडशपलमष्टपलंवाचतुःपलंवा

कांस्यपात्रंविधायनिर्माणकाले सोममंत्रंपठेत् ॥ यद्वापूर्वनिर्मितकांस्यपात्रस्य पुनर्निर्माणंसोममंत्रेणकुर्यात् ॥ चंद्रप्रति
मायाअग्न्युत्तारणंकृत्वा ॥ ततोआचार्यःयदत्रेतिसर्षपविकीरणादि भूसंस्कारंकृत्वा प्रार्थनांतेस्थंडिलात्पूर्वस्यांदिशि
गोमयोपलिप्तभूमौ अष्टदलंविरच्य ॥ तदुपरिकांस्यपात्रंनिधाय तस्मिन्पायसंपयोवानिक्षिप्य तत्रनवनितपूर्णशंखंनिधाय
तस्मिन्पायसंपयोवानिक्षिप्य तत्रनवनितपूर्णशंखंनिधाय तस्मिन्राजतंचंद्रबिंबंसंस्थाप्य सोमोहमितिध्यानपूर्वकं चंद्रशक
धूमनक्षत्राणीतिमंत्रेणआवाहनादि शोडषोपचारैस्तत्रचंद्रपूजनंकुर्यात् ॥ नत्रंश्वेतसदृशंवस्त्रद्वयंसमर्पणीयं॥ पुष्पाणिश्वेतानि
सहस्रमर्पणीयानि ॥ मौक्तिकंदक्षिणातदभावे यथाशक्तिद्रव्यंवादद्यात् ॥ पूजांतेसोममंत्ररुष्यादिस्मरणपूर्वकंसहस्रं
जपेत् ॥ तदुत्तरतस्ताम्रकलशंपूर्वोक्तप्रकारेणसंस्थाप्य तत्रराजतप्रतिमायांबृहस्पतिमंत्रेणवागीश्वरंसंपूज्य ॥ तदुत्तरतः
क्रमेण तेनैवविधिनानिहितकुंभचतुष्टये गंधादिकंपूर्वोक्तक्रमेणनिक्षिप्य ॥ ततश्चतुर्षुक्रमेणविभूतिकुंकुमचंदनकुष्टगोरोच
नानिसिंचेत् ॥ तेषुवरुणंसंपूजयेत् ॥ ततःपश्चिमदेशेस्थंडिलादि अग्निप्रतिष्ठापनांतंकृत्वा स्थापितकलशोत्तरभागेग्रहाना
वाहनादिवरुणपूजनांतंकृत्वा ॥ ततःअभ्यात्तानादिपूर्वतंत्रंविधाय ॥ पूर्ववत्प्रत्नोहीत्युदकुंभ संपात्याभिमंत्र्यपूण्याहहोमं
चकृत्वा ॥ ततःग्रहपीठदेवतानां पूर्वतंत्रानुसारेणहोमंकृत्वा ॥ नात्रप्रधानदेवताहोमः ॥ ततःस्विष्टकृतादिप्रायश्चित्त
होमांतेबलिदानं ॥ ततःपूर्णाहुतिः होमांतेअभ्यात्तानाद्युत्तरतंत्रंविधाय पूर्णपात्रविमोकाद्यग्न्यर्चनांतेवरुणकलशचतुष्टय
स्थोदकेनदिवा गंडांतजातं बालंपितरासहरात्रिजातं संध्ययोजातमुभाभ्यां सहाभिशिंचेत् ॥ ॐसहस्राक्षेणेतिमंत्रस्य
यक्ष्मनाशनःप्रजापत्यइंद्रस्त्रिष्टुप् अभिषेकेविनियोगः ततःसर्वकलशोदकैः पूर्वोक्तशांत्युक्तरीत्याभिषेकःकार्यः ॥ ततः
अभिषेकांतेसुस्नातः सत्नीकःकर्त्ताघृतचंदनादिविभूतिधारणंकृत्वा ॥ आचार्यायशंखदानंकुर्यात् ॥ इमंसचंद्रंशंखंसवस्त्र
युगंसमौक्तिकंनवनीताद्युपस्करसहितं गंडदोषापनुत्तये दैवज्ञाययाजुषेतुभ्यमहंसंप्रददे इतितत्सांगतासिध्यर्थं सहिरण्यां
धेनुंदद्यात् ॥ ततोवागीश्वरंताम्रपात्रसहितं तुभ्यंगंडदोषशांत्यर्थंसंप्रददेइति ॥ बृहस्पतिप्रतिमादानंतदंगत्वेनयथाशक्ति
दक्षिणादानंच ॥ ततःस्थापितदेवतानामुत्तरपूजनपूर्वकं विसर्जनमाचार्यायहस्तेप्रतिमादानंच ॥ ततःसहस्राक्षेणेतिमंत्रस्या









युर्वृध्यर्थं यथाशक्तिजपोदशावर ब्राह्मणभोजनंचेति ॥ शांताद्यौरितिशांतिपाठः यस्मात्कोशेतिजपःकृतं कर्मेश्वरार्पणं
कुर्यादिति ॥ ॥ इतिश्रीमदर्थवगृह्यसूत्रप्रयोग भानौषट्पन्नागर द्विवेदिरविशंकरकृतेनक्षत्रगंडांत शांतिप्रयोगरश्मि
रष्टपंचाशत् ॥ ५८ ॥

॥ अथाश्लेषामघागंडांतशांतिप्रयोगरश्मिः ॥ कर्त्ताब्रह्मजज्ञानंअव्यसश्चेति कर्मप्रारंभणीयकौमंत्रौस्मृत्वा
जीवास्थेतिमंत्रेणविधिवदाचम्यप्राणानायम्य देशकालावुच्चार्य अस्यशिशोःअश्लेषामघासंध्यात्मकगंडांतजननसंसूचित
सकलारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं नक्षत्रगंडांतशांतिंकरिष्ये ॥ तत्रादौगणेशपूजनपूर्वकं स्वस्तिपुण्याहवाचनं
मातृकापूजनंनांदिश्राद्धंचकरिष्ये इतिसंकल्प्य ॥ गोमुखप्रसवंसंकल्पादौकृत्वा ॥ ततोवृताचार्यःनांदिश्राद्धांतेसर्षपवि
कीरणांदिप्रार्थनांतेगोमयोपलिप्त भूमौअष्टदलंविरच्य तदुपरिकांस्यपात्रंनिधाय तन्मध्येपायसंदुग्धंवानिक्षिप्य तत्रनव
नीतपूर्णशंखंनिधाय तस्मिनराजतंचंद्रबिंबंसोममंत्रेणावाह्य संपूज्यपूजांतेचंद्रमंत्रेणसहस्रंजपःकार्यः॥ ग्रहमखहोमःकार्यः॥
प्रत्नोहीत्युदकुंभसंपातस्वस्त्ययनहोमश्चकृत्वा ॥ बृहस्पतिमंत्रेण नात्रप्रधानदेवताहोमः ॥ ग्रंथांतरेतुताम्रकधशेराजत
प्रतिमांबृहस्पतिमंत्रेण वागीश्वरंसंपुज्य ॥ तदुत्तरेकुंभचतुष्टयेषु वरुणंसंपूज्य अभिषेकमूर्तिदानादिकंसर्वंपूर्ववत् ॥ ॥इति
श्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागर द्विवेदिरविशंकरकृते द्वितीयनक्षत्रगंडांतप्रयागरश्मि रेकोनषष्टिः ॥ ५९ ॥

जगदंबार्पणमस्तु ॥ ॥ अथतृतीयनक्षत्रगंडांतशांतिप्रयोगरश्मिः ॥ आदौगोप्रसवंकृत्वा देशकालौसंकीर्त्य
अस्यशिशोःज्येष्ठामूलसंध्यात्मक गंडांतजननसंसूचितारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीतये नक्षत्रगंडांतशांतिंकरिष्ये ॥
तदंगगणेशपूजनादि नांदीश्राद्धांतेआचार्यंवृत्या तेनभूशुध्यादिप्रार्थनांते स्थंडिलपूर्वभागेपद्मोपरि कांस्यपात्रंनिधाय
तस्मिन्पायसंक्षीरंवानिक्षिप्य तस्मिन्नवनीतपूर्णशंखंनिधाय तस्मिन्संखेराजतंचंद्रबिंबं चंद्रमंत्रेणावाह्य तदुत्तरेवागीश्वर
प्रतिमांसंपूज्य तदुत्तरेकुंभचतुष्टयेषुवरुणंसंपूज्य ॥ ततःपश्चिमेस्थंडिलेऽग्निंतदीशान्यां ग्रहांश्चावाह्यअभ्यात्तानादिपूर्वतंत्रं
समाप्य प्रत्नोहीत्युदकुंभंसंपात्यस्वस्त्ययनहोमादि ग्रहमखोक्तरीत्याहोमंसमाप्य ॥ नात्रप्रधानदेवताहोमः प्रायश्चित्त

होमादिशेषंसर्वंपूर्ववत् ॥ ततःअभ्यात्तानाद्युत्तरतंत्रं सर्वपूर्ववत्परिसमाप्य दशावरब्राह्मणभोजनंदक्षिणादानादिसर्वं पुर्ववत्॥ ॥ इतीश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकरकृतेतृतीयगंडांतशांतिप्रयोगरश्मिःषष्ठिः॥६०॥

॥ अथतिथीगंडांतशांतिप्रयोरश्मिः ॥ ॥ पंचमीषष्ठ्योर्दशम्येकादश्योःपंचदशीप्रतिपदोःसंधिभूतंघटिद्वयंतिथि गंडातंतिथिगंडांतेपूर्वार्द्धेजन्मनितत्कालं स्नात्वावृषभदानं तन्मौल्यदानंवाकृत्वा सूतकांतेशांतिःकार्या ॥ उत्तरार्द्धेजन्मनि शांतिमात्रं ॥ ॥ अथप्रयोगः ॥ तिथिगंडपूर्वार्द्धेजन्मनिकर्त्तास्नातः पुत्रमुखावलोकनात्पूर्वंवृषभदानंकुर्यात् ॥ तत्रसंकल्पे विशेषः ॥ अस्यशिशोस्तिथिगंडांत पूर्वार्द्धजन्मसूचितसर्वारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थंअनडुहदानमहंकरिष्ये ॥ तदंगअनडुहपूजनंब्राह्मणपूजनंचकरिष्ये । द्विजंसंपूज्य ॥ अश्वस्यास्यतरस्येतिमंत्रेण वृषभंसंपूज्य ॥ मंत्रः ॥ ॐअश्वं स्यास्यतरस्याजस्यपेत्वस्यच ॥ अथंऋषभस्ययेवाजास्तानस्मिन्त्रेंहितनूवशीन् ॥ स्वस्त्यस्तु ॥ दीर्घमायुःश्रेयःशांतिः पुष्टिस्तुष्टिश्चास्तु ॥ अमुकगोत्रोत्पन्नः अमुकशर्माहंअमुकगोत्रोत्पन्नाय अमुकशर्मणेब्राह्मणाय इमंवृषभंरुद्रदैवत्यंअव्यं गंहैमशृंगंरौप्यखुरं वस्त्राछादितंसर्वालंकारसहितं अस्यशिशोःतिथिगंडपूर्वार्द्धजन्मसूचित सर्वारिष्टनिरसनार्थंदशधेनुफल प्राप्तये अमुकशर्मणेब्राह्मणायतुभ्य महंसंप्रददेनममेतित्रिः दक्षिणपूर्वपादंकरेधृत्वा विप्रहस्तेजलंक्षिपेत् ॥ दानवाक्यम्॥ धर्मस्त्वंवृषरूपेणजगदानंदकारक ॥ अष्टमूर्त्तेरधिष्टानमतः पाहिसनातन ॥ प्रतिगृह्यतांप्रतिगृह्णामि ॥ दानसांगता सिध्यर्थं इमांदक्षिणांतुभ्यमहंसंप्रददे ॥ अनेनवृषभदानेनश्रीभगवान्कर्मांगरूपीप्रीयतां परमेश्वरइति ॥ इतिवृषभदानं वृषभासंभवेकार्षापणाष्टकंवा ॥ ततःसूतकांतेशुभदिनेवा कर्त्तादेशकालौसंकीर्त्य अस्यशिशोः तिथिगंडपूर्वार्द्धजन्म सूचितसर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं शांतिंकरिष्ये ॥ तदंगगणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनं मातृका पूजनंनांदिश्राद्धंचकरिष्ये ॥ इतिसंकल्प्य ॥ एतानिकृत्वा ॥ ततःआचार्यवरणंतत्पूजनंचकृत्वा ॥ ततोआचार्यःब्रह्मज ज्ञानमित्यादिपठित्वा यदत्रसंस्थितमिति सर्षपविकीरणादिप्रार्थनांते स्थंडिलपूर्वभागेपूर्वोक्तरित्या कलशस्थापनंकृत्वा तस्योपरिपूर्णपात्रेहैमवरुणप्रतिमायांये पश्चाजुहतीतिवरुणंपूजयेत् ॥ ततोऽग्निंप्रतिष्टाप्यग्रहान्संपूज्य अभ्यात्तानादिपूर्व





तंत्रंविधाय ॥ स्वस्त्ययनहोम श्चतुरस्रमणौसंपातश्चकृत्वा पूर्वोक्तरीत्याग्रहहोमंकृत्वा वरुणमपिचर्वादिद्रव्यैः प्रतिद्रव्यं अष्टोत्तरशतंहुत्वा इत्यादिहोमांतेस्विष्टकृतादि बलिदानपूर्णाहुतिः अभ्यात्तानाद्युत्तर तंत्रंपरिसमाप्य अघ्यर्चनांतेततः कलशद्वयोदकेन पूर्वोक्तशांतिक्रमरीत्यापूर्वमंत्रैःपित्रादित्रयाणांअभिषेकोयवव्रीहिमाषतिलमुद्गानांदक्षिणात्वेनविसर्जनादि यथाशक्तिब्राह्मणभोजनसंकल्पः शांताद्यौरितिशांतिसूक्तपठनं यस्मात्कोशेतिकृतं कर्मेश्वरार्पणंकुर्यात् अभिषेककालेसर्वत्र मौजीबंधनमंतेनदीफेनेषुविसर्जन मितिसर्वत्रज्ञातव्यम् ॥ ॥ इतिश्रीमदर्थगृह्यसूत्रप्रयोगभानौषट्पन्नागरद्विवेदिरविशंकर कृतेत्रिविधतिथिगंडांतशांतिप्रयोगरश्मिरेकषष्ठिः ॥ ६१ ॥

॥ श्रीमन्महेश्वरायनमः ॥ अथतिथिगंडांतार्द्धजन्मनिपुनतात्कालिकदानं ॥ शांतौमातुःशिशोश्चाभिषेक विशेषःशेषंसर्वंपूर्ववत् ॥ ॥ इतितिथिगंडांतशांतिविशेषः ॥ ॥ अथलग्नगंडांतशांतिप्रयोगरश्मिः ॥ कर्कसिंहयो र्वृश्चिकधनुर्मीनमेषयोश्चलग्नयोः संधिभूतैकाघटिकालग्नगंडांतम् ॥ तत्रपूर्वार्द्धेजन्मनिकांचनदानम् ॥ सूतकांतेशांतिः कार्या ॥ उत्तरार्द्धेजन्मनिशांतिमात्रम् ॥ अथप्रयोगः ॥ लग्नगंडपूर्वार्द्धेजन्मनिकर्तास्नातःपुत्रमुखमनालोक्यनालछेदनात् पूर्वंदेशकालौसंकीर्त्य अस्यशिशोः लग्नगंडपूर्वार्द्धजन्मसूचितसर्वारिष्ट निरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थं ब्राह्मणायकांचन दानंकरिष्ये इतिसंकल्प्यद्विजंसंपूज्य ॥ स्वस्त्यस्त्वित्यादिवाक्यानपठेत् ॥ हिरण्यगर्भगर्भस्थं० ॥ प्रयच्छमे० ॥ इदं हिरण्यदानंलग्नपूर्वार्द्धजन्मसूचित सकलारिष्टपरिहारार्थं अमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ दानसांगतासिध्यर्थं इमां दक्षिणांतुभ्यमहंसंप्रददे ॥ इतिकांचनदानं ॥ ततःसूतकांतेशांत्युक्तशुभदिनेवाकर्तादेशकालावुच्चार्य अस्यशिशोःलग्नगंड पूर्वार्द्धजन्मसूचित सकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थंशांतिंकरिष्ये ॥ तदंगगणपतिपूजनपूर्वकं स्वस्तिपुण्याह वाचनंमातृकापूजनंनांदिश्राद्धंआचार्यादिवरणंचकरिष्ये इतिसंकल्प्य एतानिकृत्वा ॥ वृताचार्यःब्रह्मजज्ञानमित्यादियथा संभवंपठित्वा ॥ यदत्रमित्यादिसर्षपविकीरणादिप्रार्थनांतेस्थंडिल पूर्वभागेविधिनाकलशंप्रतिष्ठाप्य तस्योपरिहेमनिर्मित वरुणप्रतिमांवरुणमंत्रेणपूजयेत् ॥ ततःस्थंडिलेऽग्निंप्रतिष्टाप्य तदीशान्यांग्रहनावाह्य ॥ ततअभ्यात्तानादिपूर्वतंत्रंविधाय

पूर्वतंत्रांतेपूर्वोक्तरीत्याग्रहहोमंस्वस्त्ययनहोमंचकृत्वा ॥ वरुणंप्रतिद्रव्येण अष्टोत्तरशतसंख्याभिः समिधांचरोराज्यस्य
तिलयवानांचाहुतिभिर्हुत्वा ॥ शेषेणस्विष्टकृतमित्यादि बलिदानपूर्णाहुतिः ॥ ततअभ्यात्तानाद्युत्तरतंत्रंविधाय अग्न्यर्च
नांतेकलशद्वयोदकेन पित्रादित्रयाणां अभिषेकोयवव्रीहितिलमुद्गानांदक्षिणात्वेन दानविसर्जनादि यथाशक्तिद्विजान्
सदन्नेनभोजयेत् ॥ भूयस्यादिशांतिपाठांतंकर्मसर्वंपूर्ववत् यस्मात्कोशेतिकृतंकर्मेश्वरार्पणंकुर्यादिति ॥ ॥ इतिश्रीमदथर्व
गृह्यसूत्रप्रयोगभानौ षट्पन्नागरद्विजातिरविशंकरकृते तिथिगंडांतार्द्धजन्मविशेषसहित लग्नगंडपूर्वार्द्धजननशांतिप्रयोग
रश्मिः द्विषष्टिः ॥ ६२ ॥

॥ अंबायैनमोनमः ॥ अथलग्नगंडउत्तरार्द्धजननशांतिप्रयोगरश्मिः ॥ उत्तरार्द्धजन्मनितु तात्कालिकदानं ॥
सूतकांतेशुभदिनेवाकर्त्तादेशकालौस्मृत्वा अस्यशिशोःलग्नगंडउत्तरार्द्धजन्मसूचित सकलारिष्टपरिहारद्वारा श्रीपरमेश्वर
प्रीत्यर्थं सहग्रहमखांशांतिंकरिष्ये ॥ तदंगगणेशपूजनाभ्युदयिकांतेआचार्यः सर्षपविकीरणादिसर्वंपूर्ववत्कुर्यात् ततः
कुंभेहेमप्रतिमायांवरुणंसपूज्य वरुणोद्देशेनप्रतिद्रव्यमष्टोत्तरशतसंख्यया समिच्चर्वाज्यतिलयवानांहोमःकार्यः ॥ यवव्रीहि
माषतिलमुद्गानांदक्षिणात्वेनदानानि ॥ शेषंसर्वंपूर्ववदित्यतिशयेनालं ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्
पन्नागरद्विवेदिरविशंकरकृते लग्नगंडांतशांतिप्रयोगरश्मिस्त्रिषष्टि ॥ ६३ ॥

॥ अथदिनक्षयादिशांतिप्रयोगरश्मिः ॥ दिनक्षयेनभद्रायांप्रसूतिर्यदिजायते ॥ यमघंटेदग्धयोगेचदारुणि ॥
दुष्टयोगतिथीनांचनिशिद्धांशेषुभेतदा अतिदोषकरिप्रोक्तातस्मिन्पापयुतेतीथी ॥ अथयमघंटादीनांलक्षणानि ॥ तत्रादौ
यमघंटलक्षणं ॥ मघाविशाखाआर्द्राचमूलमृक्षंचकृत्तिका ॥ रोहिणीहस्तइत्येतेयमघंटाक्रमाद्रवेरिति ॥ रविवारमारभ्ये
त्यर्थः ॥ अथदग्धयोगलक्षणं ॥ षष्ठीचशनिवारेण शुक्रेणैवतुसप्तमी ॥ अष्टमीगुरुवारेणनवमीचंद्रजेनतु ॥ दशमीभूमि
पुत्रेणसोमेनैकादशीतथा ॥ सूर्येणद्वादशीयुक्तादग्धयोगाःप्रकीर्त्तिताः॥ बुधेतृतीयाकुजपंचमीपुषष्ठीगुरौचाष्टमिशुक्रवारे॥
एकादशीसोमशनिर्नवम्यांद्वादश्यमर्कातिथिदग्धयोगाः ॥ अथमृत्युयोगलक्षणं ॥ त्यजरविअनुराधा उत्तराषाढचंद्रेशत





भिषमपिभौमेत्त्वांद्रजेचाश्विनिषु ॥ मृगशिरगुरुवारेसार्पदैवंचशुक्रेरविसुतमपि हस्तेमृत्युयोगावदंति ॥ १ ॥ अथकालदंडा
नंदयोगश्चलक्षणं ॥ कालदंडोभानुवासरभरणीयोगः अश्विन्यादिसाभिजिन्नक्षत्राणांचतुर्भिः क्रमेणादित्यवासरादिषु
योगेनसंपन्नेष्वष्टाविंशतियोगेषुपठितः आनंदःकालदंडश्चेति ॥ दुर्योगतिथीनांचनिषिद्धभागस्तु विष्कंभवज्रयोस्तिस्र
षट्चगंडातिगंडयोः ॥ परिघार्द्धंपंचशूलेव्याघातेंकघटित्यजेत् ॥ चतुःषडर्कनिग्रर्कभूततिथ्याद्यनाडिकाः ॥ अष्टांक८
मनु१४तत्त्व१६आशा१०बाणसंख्याविसर्जयेत् ॥ इत्युक्ताज्ञेया ॥ दिनक्षयादिदोषेष्वेकैकदोषदूषितकालेजननेशिवे
रुद्रैकादशी ॥ अभिषेकःकार्यः ॥ द्वित्रादिदोषसमुच्चये ग्रहयज्ञाश्वत्थप्रदक्षणादिसमुच्चयः दीपंशिवालयेभक्त्याघृतेन
परिदापयेत् ॥ गाणपत्यंपुरुषसूक्तं सौरंमृत्युंजयंशुभं ॥ शांतिजाप्यंकृत्वा मृत्युंजयीभवेदितिवाक्याद्बहुदोषे उक्तजपादि
समुच्चयेपि ॥ कृष्णायनमः ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौ षट्पन्नागरद्विवेदि रविशंकरकृतेदिनक्षयादिजनन
शांतिप्रयोगरश्मिश्चतुःषष्टि ॥ ६४ ॥

॥ अथविषघटिशांतिप्रयोगरश्मिः ॥ तत्रकौस्तुभे ॥ तिथिवारनक्षत्राणांविषनाड्याउक्तास्तथापिज्योति
र्ग्रंथेषुनक्षत्र विषघटिनाडीष्वेवमहादोषत्वेनोक्तेर्नक्षत्र विषघटिष्वेवजननेउक्तशांतिःकार्या ॥ तिथ्यादीविषघटीनामुप
दोषत्वाद्रुद्राभिषेकंकुर्यात् ॥ अथविषघटीलक्षणम् ॥ तत्रादौतिथीनांविषनाडिः ॥ तिथी१५॥ इषु५॥ नाग८ अद्रि७
गिरी७इश११वारिधिः४गज८अद्रि७दिक्१०पावक३ दिक्१०भास्कर१२मुनि७भ८॥ संख्याप्रथमातिथेः ॥ क्रमा
त्परंविषाख्यं घटिकाचतुष्टयमिति ॥ अस्यार्थः ॥ प्रतिपदां१५ पंचदशघटिकानंतरं चत्वारिनाड्यःविषं ॥ एवंतिथि
द्वितीयायांअष्टघटिकानंतरंघटिचतुष्टयंविषं ॥ एवमग्रेप्यूह्यम् ॥ अथवारविषघटिः विंशति२० चतुः४द्वादश१२दिक्१०
शैल७बाणाश्च५तत्त्वानि२५ यथाक्रमेणसूर्यादिवारेषु भवत्यानंतरंनाड्योविषाख्यं घटिकाचतुष्टयमिति ॥ अस्यार्थः ॥
आदित्यवारेविंशति२०घटिकानंतरंचतस्रोविषनाड्यः ॥ सोमवासरेघटिचतुष्टयानंतरंचतस्रोविषनाड्यः ॥ भौमवासरे
द्वादशघटिकानंतरंचत्वारिनाड्यःविषं ॥ एवमग्रेप्यूह्यं ॥ अथनक्षत्रविषनाडिः ॥ खमार्गणाः५०वेदपक्षाः२४खरामाः३०

व्योमसागरा४० वेद्धिचंद्रा१४रूपदस्रा२१खरामा३०व्योमबाहवः२०द्विरामा३२ खाग्नयः३०शून्यदस्रा२०कुंजरभूमय १८रूपपक्षा२१ व्योमदस्रा२० वेदचंद्रा१४ चतुर्दश१४शून्य चंद्र१० वेदचंद्र१४ अक्ष५वेदबाहवः२४ शून्यदस्रा२० शून्य चंद्रा१० पूर्णचंद्रा१० गजेंद्रवः१८ तर्कचंद्रा१५ वेदपक्षा२४खरामा३०॥ अश्विन्यादिक्रमात् ॥ आभ्यःपरांस्युःघटिकाच तस्रोविषनाडयाइत्येवंव्यवस्थापूर्वतज्ञोद्भव्या॥ अथस्पष्टोर्थः॥ अश्विन्यांपंचाशद्घटिका५०भ्योनंतरं चतुर्नाड्योविषम्॥ भरण्यांचतुर्विंशतिघटिकानंतरंचतुर्नाडयो.विषम् ॥ कृत्तिकायांत्रिंशत् घटिकानंतरंघटिचतुष्टयंविषम् ॥ एवमग्रेप्यूह्यम् ॥ विषनाडीषुसंजातःपितृमातृधनात्मनां ॥ नाशकृद्विषशस्त्राग्निःक्रूरेलग्नेशकेपिच ॥ ॥ अथप्रयोगः ॥ कर्ताशौचांतेदेश कालाद्यनुस्मृत्यं विषनाडयामेतच्छिशूजननसूचित सर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं वृद्धगर्गोक्तविधिनाशांतिं करिष्ये ॥ तदंगगणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनंमातृकापूजनं नांदिश्राद्धमाचार्यवरणंचकरिष्ये इतिसंकल्प्य ॥ एतानिकृत्वा ॥ ब्रह्मजज्ञानेत्यादिपठित्वा आचार्यःयदत्रेतिसर्षपविकीरणं पंचगव्येनभूमिप्रोक्षणं स्वस्त्ययनंप्रार्थनांते यथाशक्तियथालक्षणनिर्मितां हैमवतीनांरुद्रादित्य प्रतिमांचतसृणांअग्न्युत्तारणंकृत्वा स्थंडिलपूर्वभागेपूर्वोक्त रीत्याभुवं सृष्ट्वातत्रौषधयः संवदंतइतिचतुःप्रस्थपरिमितान् व्रीहीन्प्रक्षिप्यतैः स्थंडिलंपरिकल्प्यतत्रैकं कलशंप्रतिष्ठाप्य कलशेउदक पूरणादिपूर्णपात्रनिधानांतंतत्तन्मंत्रैःकृत्वाः पूर्णपात्रोपरिसाष्टदलवस्त्रे प्रतिमाचतुष्टयमुदक्संस्थंक्रमेण निधायतदावाहनादि षोडशोपचारैःदेवताःसंपूजयेत्॥ तद्यथा॥ गृह्यमखोक्तरुद्रमंत्रेणरुद्रम्॥ यममंत्रेणयमं॥ अग्निमंत्रेणाग्निं॥ मृत्युमंत्रेणमृत्युं॥ एवंक्रमेणतत्तन्मंत्रैरावाह्यतैरेवमंत्रैःसंपूज्य॥ ततोस्थंडिलेऽग्निंप्रतिष्ठाप्यस्थापितोत्तरभागेगृहपूजनं कलशस्थापनांतंकृत्वा॥ ततःअभ्यात्तानादिपूर्वतंत्रंसमाप्य ॥ नक्षत्रविषघटिश्चेत् ॥ पत्नोहीत्युदकुंभंसंपात्य स्वस्त्ययनहोमश्चकार्यः ॥ तिथिवार विषनाडीशांतौकेवलंस्वस्त्ययनहोममात्रंकुर्यादिति ततोग्रहहोमः ॥ रुद्रयमअग्निमृत्यूनयज्ञियवृक्षवरुसमिद्घृततिलाहुतिभिः प्रतिदैवतंप्रतिद्रव्यमष्टोत्तरशत संख्याभिःजुहुयात् ॥ एवंसऋत्विगाचार्योप्रधानहोमंकृत्वा प्रायश्चित्तहोमांतेबलिदानं ततःपूर्णाहुतिः ॥ ततोभ्यात्तानाद्युत्तरतंत्रंसमाप्य ॥ अग्न्यर्चनांतेकलशद्वयोदकेनाभिषेकः ॥ पूर्वोक्तमंत्रैरभिषेकः ॥









प्रीयतांभगवानीशपिनाकीसर्वतोमुखः ॥ तवमूर्त्तिप्रदानेनसर्वाभिष्टप्रदोभव ॥ १ ॥ इषत्याम्रोयतःकालोदंडहस्तः प्रसन्नधीः॥ रक्तवृक्नीलकायश्चमहिषस्थःशिवंकुरु ॥२ ॥ पिंगभ्रूश्मश्रुकेशांतः पिंगाक्षचरुणोरुणः छागस्थःसहसूत्रश्च ज्वलनोरक्तलोचनः ॥ तवमूर्तिप्रदानेनमम पापंविनाशय ॥ ३ ॥ दंष्ट्राकरालवदनोनीलांजनसमाकृतिः ॥ रक्ताक्षोसिगदापाणिर्मृत्युर्मांपातुसर्वदा ॥ ४ ॥ इतिचतुर्भिःश्लोकैश्चाभिषेकःकार्य ॥ ततोविभूतिधारणंस्थापितदेवतानांपूजनंच कृत्वा ततःश्रेयोग्रहणंदक्षिणादानं आचार्यहस्ते ॥ प्रीयतांभगवानीशइत्यादिभिश्चतुर्भिः श्लोकैः प्रतिमाचतुष्टयदानंच कृत्वातस्मै गोभूहिरण्यवस्त्राणितन्निष्क्रयंवादद्यात् ॥ कृतस्यकर्मणःसांगतायैइमां दक्षिणांतुभ्यमहंसंपददेइति ॥ एवं मृत्विग्भ्योपियथाशक्तिदक्षिणादानं॥ अभ्यात्तानाद्युत्तरतंत्रंसर्वंपरिसमाप्य ॥ ततोगृहपीठदेवताआचार्यहस्तेप्रतिपादनं ब्राह्मणभोजनंशांताद्यौरिति सूक्तपाठः यस्मात्कोशेतिपठित्वा ॥ कृतंकर्मेश्वरार्पणंकुर्यादिति ॥ ॥ इतीश्रीमदथर्वगृह्यसूत्र प्रयोगभानौषट्पन्नागरद्विवेदीरविशंकरकृतेविषनाडीजननशांतिप्रयोगरश्मिः पंचषष्टिः ॥ ६५ ॥

॥ अथयमलजननशांतिप्रयोगरश्मिः तत्रश्रोताग्निमतः सोग्नयेमरुत्वतेत्रयोदशकपालं पुरोडाशंनिर्वपेदिति ॥ अथयस्यवधूर्गौवाजनयेचेद्यमौततः समरुद्भ्यश्चरुंकुर्यात् पूर्णाहुतिमथापिवेतिकारिकोक्तेः ॥ अथश्रौताग्निमतस्तुसंकल्प करणेविशेषः ॥ ममभार्यायायमलजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं मारुतेष्ट्यायक्ष्येइतिसंकल्पः ॥ स्मार्त्ताग्निमतस्तु ॥ ममभार्यायायमलजननसूचित सर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं मारुतस्थालीपाकेनयक्ष्ये॥ अथनिरग्निकयजमानशांतिकरणेसंकल्पः ॥ ममभार्यायायमलजननसंसूचितसर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांकात्यायनोक्तांशांतिंकरिष्ये ॥ इतिसंकल्प्यः ॥ तत्रादौगणेशपूजनपूर्वकं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदिश्राद्धंआचार्यादिवरणंचकरिष्ये ॥ एतानिकृत्वावृताचार्यःयदत्रसंस्थितमिति सर्षपविकीरणादिप्रार्थनांतंविधाय ॥ ततःस्थंडिलपूर्वभागे गोमयोपलिप्तभूमौश्वेतचूर्णादिनाष्टदलं विरच्यतत्रप्रागादिक्रमेणैशान्यांता सुदिक्षुपूर्वोक्तविधिना कलशाष्टकपूरणांतं कृत्वा हिरण्यंकषायादिसहितंप्रक्षिप्य ॥ कषायस्तुक्षीरवृक्षाणांकषायः ॥ ततःदूर्वाश्चौषधीसर्वौषधीश्च

प्रक्षिप्य गंधादिप्रक्षेपवरुणपूजनांतंकृत्वा ॥ अथकलशाष्टकोदकैराचार्योदंपत्योरभिषेकंकुर्यात् ॥ ततःपूर्वोक्तशांतिरीत्या तत्तद्देवतामंत्रैर्दंपत्योरभिषेकंकुर्यात् ॥ ततअभिषिक्तौदंपतीश्वेतवस्त्रचंदन पुष्पसौवर्णभूषणैश्चालंकृत्यदर्भेषूपविस्यतौतत्रो दङ्मुखौतिष्ठतः तत्समीपेप्राङ्मुखआचार्यः स्थंडिलेऽग्निंप्रतिष्ठाप्यैशान्यांग्रहपूजां कलशस्थापनांतंकृत्वा अभ्यात्तानादि पूर्वतंत्रंविधाय ॥ अपस्तिस्रभिराज्याहुतिभिः इंद्रंसप्तभिः वरुणंपंचभिः आपःएकयाग्निंअष्टभिराज्याहुतिभिः पूर्वत्राभिषे कायमुक्तैश्चतुर्विंशतिमंत्रैः ॥ अग्निंसोमंपवमानं पावकंमारुतंमरुतः यमंअंतकंमृत्युंचैकैकयाचवाहुत्यानाममंत्रैर्होमंकुर्या त्तद्यथा ॥ स्वस्त्ययनहोमः ॥ अथप्रधानहोमः ॥ तत्रादौग्रहपीठदेवता होमंकृत्वाततःपूर्वोक्त अभिषेकमंत्रैराज्येनचतु र्विंशतिआहुतिर्जुहुर्यात् ॥ तेचमंत्राः ॥ ॐआपोहिष्ठा० ॥ महेरणायचक्षसेस्वाहा ॥ १ ॥ अद्भ्यइदंनमम ॥ एव मग्रेपि ॥ योव०शि० ॥ उशतीरिवमातरःस्वाहा ॥ २ ॥ तस्माअरं०॥ आपोजनयथाचनःस्वाहा ॥ ३ ॥ इंद्रस्यौजस्थ इतिद्वयोर्वामदेवाइंद्रोगायत्रीआज्यहोमेविनियोगः ॥ ॐइंद्रस्यौजस्थ० ॥ स्वाहा ॥१॥ इंद्रस्यौजस्थ०॥ स्वाहा ॥२॥ इंद्रोमहीतिपंचानांवामदेव इंद्रस्त्रिष्टुप्इंद्रप्रीत्यर्थमाज्यहोमेविनियोगः ॥ ॐइंद्रोमहि० ॥१॥ ॐइंद्रोमहिम० ॥२ ॥ ॐइंद्रो जघान० ॥३॥ ॐसिंहिशीर्ष० ॥४॥ ॐअहीनांस० ॥५॥ स्वाहेतिसर्वत्रइंद्रायेदंनमम ॥एतदेवमंत्रसप्तकंस्पष्टीक्रियते ॥ तद्यथा ॥ ॐइंद्रस्यौजस्थेंद्रस्यसहस्थेंद्रस्यबलंस्थेंद्रस्यवीर्यं।१स्थेंद्रस्यनृम्णंस्थ ॥ जिष्णवेयोगायब्रह्मयोगैर्वोयुनज्मि ॥१॥ इंद्रस्यौजस्थेंद्रस्य० ॥ जिष्णवे० ॥२॥ इतिद्वौः॥ अथपंचकम् ॥ ॐइंद्रोमेहिमरंधयन्मित्रश्चवरुणश्च ॥ वातापर्जन्योउ भा ॥१॥ इंद्रोमेहिमरंधयत्पृदाकुंचपृदाकुम् ॥ स्वजंतिरश्चिराजिंकसर्णीलंदशोनसिम् ॥ २ ॥ इंद्रोजघानप्रथमंजनितारं महेतव ॥ तेषांमुतृह्यमाणानांकःस्वित्तेषामसदृसः ॥ ३ ॥ संहिशीर्षाण्यग्रभंपौजिष्टइवकर्वरं ॥ सिंधोर्मध्यंपरेत्यव्यनिज महेर्विषम् ॥ ४ ॥ अहीनांसर्वेषांविषंपरावहंतुसिंधवः ॥ हतास्तिरश्चीराजयोनिपिष्टासःपृदाकवः ॥ ५ ॥ इतीदंमंत्र सप्तकं ॥ ॐउदुत्तममितित्रह्मावरुणस्त्रिष्टुप् आपप्रीत्यर्थेआज्यहोमेविनियोगः ॥ ॐउदुत्तमं० ॥ अथावय० ॥ स्वाहेदं





अद्भ्यः ॥ अथवाशन्नोदेवीतिमंत्रःप्रयोज्यः ॥ ॐवैश्वानरेतिसप्तर्चस्याथर्वाग्निस्त्रिष्टुप् अग्निप्रीतयेआज्यहोमेविनियोगः॥ ॐवैश्वानरोरश्मिभिर्नःपुनातुवातःप्राणेने षिरोनभोभिः ॥ द्यावापृथिवीपयसापयस्वतीऋतावरीयज्ञियेन पुनीतां ॥१॥ वैश्वानरींसूनृतामारभध्वंयस्याआशास्तन्वोवीतपृष्ठाः ॥ तयागृहणंतःसधमादेषुवयंस्यामपतयोरयोणाम् ॥ २ ॥ वैश्व.- नरींवर्चसआरभध्वं शुद्धाभवंतःशुचयःपावकाः इहेडयासधमादंमदंतोज्योक्पश्येमसूर्यमुच्चरंतम् ॥३॥ यत्तेदेवीनिर्ऋति राबबंधदामग्रीवास्वविमोक्यंयत् ॥ तत्तेविष्याम्यायुषेववर्चसे बलायादोमदमन्नमद्धिप्रसूतः ॥ ४ ॥ नमोस्तुतेनिर्ऋते तिग्मतेजोयस्मयान्विचृताबंधपाशान् ॥ यमोमह्यंपुनरित्त्वांददातितस्मैयमायनमोअस्तुमृत्यवे ॥ ५ ॥ अयस्मयेद्रुपदे बेधिषइहाभिहितोमृत्युभिर्येसहस्रं ॥ यमेनत्वंपितृभिःसंविदानउत्तमंनाकमधिरोहयेमं ॥ ६ ॥ संसमिद्युवसेवृषन्नग्ने विश्वान्यर्यआइडस्पदेसमिध्यसेसनोवसून्याभर ॥ ७ ॥ इतिप्रत्यृचमेकैकयाज्यंजुहुयात् ॥ अथनिर्वापचरुहोमः ॥ अत्र दानधर्मेणेचरुमवदाय आज्य दिनत्रदेवताभ्योजुहुयात् ॥ ताश्च ॥ ॐअग्नयेस्वाहा ॥ अग्नयइदंनमम ॥ यथालिंगंसर्वत्र त्यागः ॥ ॐसोमायस्वाहा ॥२॥ ॐपवमानायस्वाहा ॥३॥ ॐपावकायस्वाहा ॥४॥ ॐमारुतायस्वाहा ॥५॥ ॐमरुद्भ्य स्वाहा ॥ ६ ॥ ॐयमायस्वाहा ॥७॥ ॐअंतकायस्वाहा ॥८ ॥ ॐमृत्यवेस्वाहा ॥ मृत्यवेदंनमम ॥ ततःस्विष्टकृतादि बलिदानांतेपूर्णाहुतिःकार्या ततःअभ्यात्तानाद्युत्तरतंत्रंविधाय पूर्णपात्रविमोकान्यग्रपर्चनांते ग्रहकलशेनाभिषेकःकार्यः पूर्वोक्तमंत्रैः ॥ ततोविभूतिधारणांतेस्थापितदेवतापूजनं विसर्जनंचकृत्वा श्रेयोग्रहणंआचार्यहस्ते प्रतिपादानांतं कृत्वा द्विजान्भोजयित्वा ॥ स्वस्तिभवंतोब्रुवंत्विवितिवाचयोत ॥ तेचस्वस्तीतिवदेयुः॥ तेभ्यआशिषोगृहीत्वा भूयस्यादियथा शक्तिदानंमिलितेभ्योब्राह्मणेभ्योदत्वा शांताद्यौरितिशांतिपाठंपठित्वा यस्मात्कोशेतिजप्त्वा॥ कृतंकर्मेश्वरार्पणंकुर्यादिति अथदासीमहिषीबडवागोहस्तिनीनांयमलजनने पीयंशांतिःकार्या इयंशांतिगृहोत्पातेषु उलूककपोतगृध्रश्येनानांगृहप्रवेशे

स्तंभप्ररोहेवल्मिकप्ररोहेमधुजनने अशनशयनपानभंगेपल्लिपतनेशरटप्ररोहणे छंत्रध्वजविनाशेषु अग्न्युत्पातेषुचकार्येति चकात्यायनमतम् ॥ साचसाग्निकैःकात्यायनैः स्वगृहाग्नौकार्यानिरग्निकैस्तैरन्यैश्च लौकिकाग्नौइतिविशेषः ॥ ॥ इति श्रीमदथर्ववेदगृह्यसूत्र प्रयोगभानौपट्पन्नागर द्विवेदिरविशंकरकृते उत्पाताद्युपयोगीशांतिसहितयमलजनन शांतिप्रयोग रश्मिःषट्षष्टि ॥ ६६ ॥

॥ अथपौषेस्त्रीप्रथमप्रसूति शांतिप्रयोगरश्मिः ॥ शौनकः ॥ सिंहेतुगावो महिषीतुमाघेनभेचमासेवडवा प्रसूतिः ॥ पौषेतुभार्याप्रथमप्रसूतिः कृत्वाप्तुशांतिंस्वगृहेश्नुतेसुखं ॥ १ ॥ माघेबुधेतुमहिषीश्रावणेवडवादिवा ॥ सिंहे गावस्त्रियःपौषेस्वामिनोमृत्युदायकाः ॥ ॥ अथप्रयोगः ॥ कर्त्ताशौचांतेदेशकालौसंकीर्त्य ममभार्यायाः पौषमासेप्रथम प्रसूतिसूचितसर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशौनकोक्तांशांतिंकरिष्ये ॥ तदंगगणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनमातृकापूजनं नांदिश्राद्धंआचार्यादिवरणादिकरिष्ये ॥ इतिसंकल्प्य ॥ एतानिकृत्वा ॥ वृताचार्यो ब्रह्मजज्ञानंअव्यसश्चेतिपठित्वा यदत्रसंस्थितमितिसर्षपविकीरणादि प्रार्थनांतंविधाय ॥ ततोगृहस्यैशानभागेस्वस्तिक द्वयंविरच्य तत्रदक्षिणोत्तरयोश्चपूर्वोक्तरीत्या भूमिस्पृष्ट्वा ॥ व्रिहिमत्तमितिव्रिहिभिस्तेषुदेशेषुराशिद्वयंकुर्यात् ॥ कलश मंत्रेणदक्षिणोत्तरक्रमेण प्रक्षालितकुंभद्वयं राश्योपरिनिधाय ततःसौवर्णादिनिर्मितरुद्रसूर्यप्रतिमयोरग्न्युत्तारणंकृत्वा पूर्व निर्मितस्थंडिलेविधिवदग्निंप्रतिष्ठाप्य अग्निध्यानांतेस्थापित देवताकुंभेशान्यांग्रहपूजनादिकलशस्थापनांतंकृत्वा ॥ ततः आचार्योअभ्यात्तानादि पूर्वतंत्रंपरिसमाप्य ॥ तत्रादौग्रहपीठदेवताः प्रसिद्धरीत्याकृत्वा ॥ रुद्रंसूर्यंचप्रत्येकंप्रतिद्रव्येणा ष्टोत्तरशतसंख्याभि स्तिलाज्यचरुद्रव्येहोमःकार्यः ततोआचार्यःकुंभद्वयसमीपेउपविश्य ॥ तीर्थोदकेनकलशद्वयोदकेना पूर्य ॥ यस्तेगंधमितेगंधंसर्वौषधीः दूर्वांपंचपल्लवान्पंचपल्लवत्वचः एतानिपूर्वोक्ततत्तन्मंत्रैःकलशेनिक्षिप्य पूर्णपात्र निधानांतंकृत्वा ततःसाष्टदलवस्त्रद्वयेप्रतिमेसंस्थाप्य ॥ तद्यथा ॥ आतेपितरितिमंत्रस्यगृत्समदोरुद्रस्त्रिष्टुप् ॥ रुद्रावाहने विनियोगः ॥ ॐआतेपित० ॥ रुद्रंसांगंसपरिवारंसायुधमावाहयामि ॥ ततउत्तरकलशेविषासहिंसहमानेत्यस्याथर्वासूर्यो





जगती ॥ सूर्यावाहनेविनियोगः ॥ ॐविषासहिंसहमान० ॥ इतिसूर्यमावाह्यषोडशोपचारैःसंपूज्य ॥ ततःएकऋत्विकदक्षिण कलशेचत्वारिपूर्वोक्तानिरुद्रसूक्तानिजपेत् ॥ अन्यऋत्विकउत्तरकुंभेपूर्वोक्तसौरमंत्रान्जपेत् ॥ यद्वामूलमंत्रौयावद्धोम समाप्तिस्तावज्जपेत् ॥ ततोआचार्यःअग्नेःपश्चादुपविश्यपूर्वोक्तमंत्रेणअग्न्यर्चनादिकृत्वा नवग्रहादिप्रधानदेवतानांतत्तन्मंत्रै र्विहितद्रव्यैर्होमंकृत्वा ॥ ततःस्विष्टकृतादिप्रायश्चित्तांते बलिदानंततःपूर्णाहुतिः ॥ ततोभ्यात्तानाद्युत्तरतंत्रंसमाप्याग्न्यर्च नांतेकलशत्रयोदकेनाभिषेकः ॥ ततोविभूतिधारणंस्थापित देवतापूजनविसर्जनश्रेयोग्रहणानिकृत्वा ॥ ततःदक्षिणादानं तदंतेयथाशक्तिद्विजान्सदन्नेनसंतर्प्याशिषो गृहीत्वाशांताद्यौरितिपठित्वायस्मात्केशेतिकृतंकर्मेश्वरार्पणंकुर्यात् ॥ इती श्रीमदथर्ववेदगृह्यसूत्रप्रयोगभानौपट्पन्नागरद्विवेदिरविशंकरकृते पौषमासेप्रथमप्रसूतिशांतिप्रयोगरश्मिःसप्तषष्टिः ॥६७ ॥

इयंशांतिर्महिषीवडवाप्रसूतावपिज्ञेया ॥ ॥ अथाधोमुखशांतिप्रयोगरश्मिःबृहच्छौनकोये ॥ प्रसवेतुयथानारीबालकंतु अधोमुखं ॥ वंशारिष्टकरं चैत्रमातापित्रोर्विशेषतः बालकंतुपरित्यज्ययावच्चूडोपकर्मणि ॥ मातापित्रौर्विशेषेणतन्मुखं नावलोकयेत् ॥ तस्यारिष्टविनाशाय कुर्याच्छांतिंयथाविधिः ॥ अत्रादौगोप्रसवः कार्यइतिप्रेभाति ॥ अथप्रयोगः ॥ जननात्द्वादशादेशांत्युक्त शुभदिनेवाआदौगोप्रसवंकृत्वा ततोदेशकालौसंस्मृत्य ॥ अस्यकुमारस्यकुमार्यावाअधोमुख जननसूचितसकलारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखेबृहच्छौनकोक्तांशांतिंकरिष्ये ॥ तत्रादौगणेशपूजा पूर्वकंस्वस्तिपुण्याहवाचनं मातृकापूजनंनांदीश्राद्धंकरिष्य इतिसंकल्प्य ॥ एतानिकृत्वा ॥ ततोआचार्यंवृत्वातेनसर्षपवि कीरणादिप्रार्थनांते स्थंडिलपूर्वभागेस्वस्तिकंविरच्य तत्रयथाशक्तित्रिहिराशिंकृत्वा तस्योपरिविधिना कलशंप्रतिष्ठाप्य पूर्णपात्रेसाष्टदलवस्त्रे अग्न्युत्तारणपूर्वक सुवर्णनिर्मितप्रतिमायां ॥ त्र्यंबकमित्यस्यवशिष्ठो मृत्युंजयरुद्रोत्र्यंबकोनुष्टुप् पूजने विनियोगः ॥ ॐत्र्यंबकंयजामहे० ॥ इतिमंत्रेणवाह्य षोडशोपचारैःसंपूज्य ॥ प्रार्थनांतेएकऋत्विक्कुंभं स्पृष्ट्वाचत्वारिरुद्र सूक्तानिजपेत् ॥ यद्वारुद्रैकादशनिर्जपेत् ॥ ततःस्थंडिलेग्निंप्रतिष्ठाप्य तदीशान्यांग्रहस्थापनादि कलशपूजनांतेअभ्यात्ता नादिपूर्वतंत्रंसमाप्य स्वस्त्यनहोमःकार्यः ॥ अग्नमृत्युंजयंअष्टोत्तरशतसंख्याकाभिः ॥ यज्ञीयवृक्षसमिदाज्याहुतिभि

स्वावतीभिश्चर्वाहुतिभिस्तिलाहुतिभि राज्याहुतिभिश्चहोमःकार्यः ॥ अथग्रहपीठदेवता होमांतेमृत्युंजय प्रधानहोमः ॥
ततःस्विष्टकृदादिप्रायश्चित्त होमांतेबलिदान ॥ ततःपूर्णाहुतिः ततोभ्यात्तानाद्युत्तरतंत्रंसमाप्य अग्न्यर्चनांतेमृत्युंजय
कलशसमीपेमाताबालंत्यक्त्वा पराङ्मुखोभवेत् ॥ ततोआचार्यःबालंगृहीत्वामात्रेदद्यात् ॥ दत्तोस्माभिरयंबालोयुष्म
द्दत्तमगृह्यच ॥ दीर्घायुरपिबालोयंपूर्ववत्कुलवर्द्धनः ॥ ततःकलशद्वयोदकं कस्मिंचित्पात्रेआदायपूर्वोक्तऋग्भिः ॥ पौराण
मंत्रैश्चदंपत्योरभिषिंचेत् ॥ ततोविभूतिधारणंस्थापित देवतापूजनंविसर्जनं श्रेयोग्रहणंआचार्यहस्तेप्रतिमादानंदक्षिणादानं
चकृत्वा दशावरान्ब्राह्मणान्भोजयित्वा ॥ शांताद्यौरितिशांतिसूक्तंजप्त्वा यस्मात्कोशत्युच्चार्यकृतंकर्मेश्वरार्पणंकुर्यादिति॥
॥ इतिश्रीमदथर्ववेदगृह्यसूत्रप्रयोगभानौ षट्पन्नागरद्विवेदिरविशंकरकृते अधोमुखजननशांतिप्रयोगरश्मिःरष्टषष्ठि ॥ ६८ ॥

॥ अथत्रिकप्रसवशांतिप्रयोगरश्मिः ॥ सुतत्रयेसुताचेत्स्यात्तत्रयोवासुतोयदि ॥ मातापित्रोः कुलस्यापितदा
निष्टंमहद्भवेत् ॥ ज्येष्ठनाशोवित्तहानिरितिसर्वंभवेत्ध्रुवं ॥ ॥ अथप्रयोगः ॥ कर्त्ताशौचांतेदेशकालौस्मृत्वा मम
भार्यायाःसुतत्रय जन्मानंतरंकन्याजननेसूचित सर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशौनकोक्तांशांतिं
करिष्ये ॥ इतिसंकल्प ॥ कन्यात्रयजन्मानंतरंपुत्रजननेतु ॥ ममकन्यांत्रयजन्मानंतरं पुत्रजननसूचितसकलारिष्ट
निरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशांतिंकरिष्ये ॥ इतिसंकल्प्य ॥ तत्रादौगणेशपूजापूर्वकंस्वस्तिपुण्याहवाचनं
मातृकापूजनंनांदिश्राद्धंचकरिष्येतिसंकल्प्यैतानिकृत्वा ॥ ततोआचार्यादीनष्टत्वातान् गंधादिभिःसंपूज्य ॥ ततोआचार्यः
ब्रह्मजज्ञानमव्यसश्चेतिपठित्वा यदत्रसंस्थितमिति सर्षपविकीरणादिप्रार्थनांतेस्थंडिलपूर्वभागे ग्रहपूजाकलशस्थापनवरुण
पूजनांतंकृत्वा तदुत्तरेउदक्संस्थानांपंचकलशानां पूर्वोक्तविधिनायथाशक्ति धान्योपरिस्थापितानामुपरि यथाशक्तिहेम
निर्मिताः ब्रह्माविष्णुमहेशेंद्र प्रतिमाः स्थापयित्वातासुदेवताःपूजयेत् ॥ तत्रमंत्राः ॥ ब्रह्मजज्ञानमथर्वाब्रह्मात्रिष्टुप्ब्रह्मा
वाहनेविनियोगः ॥ ॐब्रह्मजज्ञानं० ॥ प्रतद्विष्णुरथर्वाविष्णुर्गायत्री विष्णवावाहनेविनियोगः ॥ ॐप्रतद्विष्णु० ॥ मानो
विदन्ब्रह्माइश्वरोनुष्टुप् महेशावाहनेविनियोगः ॥ ॐमानोविदन्० ॥ त्रातारमिंद्रगर्गइंद्रस्त्रिष्टुप् इंद्रावाहनेविनियोगः ॥









ॐत्रातारमिंद्र० ॥ धातादधात्वंगिराइशानोगायत्री इशानस्थापनेविनियोगः ॥ ॐधातादधा० ॥ इतिक्रमेणावाह्यताः
षोडशोपचारैःसंपूज्य ॥ ततएकऋत्विक्रुद्रकुंभंस्पृष्ट्वाचत्वारि रुद्रसूक्तानिजपेत् ॥ ततःपूर्वोक्तक्रमेणशांतिसूक्तादि
सूक्तानिपठेत् ॥ ततःअग्निस्थापनाद्यभ्यात्तानादिपूर्वतंत्रांतंविधाय ॥ ततःस्वस्त्ययनहोमंकुर्यात् ॥ ब्रह्माणंविष्णुंमहेशं
इंद्रंरुद्रंप्रत्येकं समिदाज्यतिलचरूणांप्रत्येकमष्टोत्तरशताहुतिभिर्होमःकार्यः ॥ यथालिंगंसर्वत्रत्यागः॥ ततःग्रहहोमपुरःसरं
प्रधानहोमयुक्तमंत्रैःकृत्वा ॥ ततःस्विष्टकृतादिप्रायश्चितहोमांतेबलिदानंपूर्णाहुतिश्च ॥ ततोभ्यात्तानाद्युत्तरतंत्रंविधाय ॥
ततोग्न्यर्चनांतेषट्कलशोदकेन सकुटुंबयजमानाभिषेकः ॥ पूर्वोक्तप्रकारेणाभिषेकंकुर्यात् ॥ ततआज्यावलोकनं ॥
तत्पात्रंसदक्षिणंद्विजायदत्वा ॥ अथविभूतिधारणं स्थापितदेवतानामुत्तर पूजनंविसर्जनंचश्रेयोग्रहणं आचार्यहस्ते
प्रतिमादानंतस्मैहिरण्यांधेनुंचदत्वा ब्राह्मणानभोजयीत्वा शांतिपाठंचकायित्वा यस्मात्कोशेतिपठित्वा कृतंकर्मेश्वरार्पणं
कुर्यादिति ॥ ॥ इतीश्रीमदथर्ववेदगृह्यसूत्रप्रयोगभानौ षट्पन्नागरद्विवेदीरविशंकरकृते त्रिकजननशांति प्रयोगरश्मिः
रेकोनसप्तति ॥ ६९ ॥

॥ श्रीमन्महाकालिकायैनमः ॥ अथभद्राजननशांतिप्रयोगरश्मिः ॥ अथातोविष्टिजातानामातापितृकुलस्य
च ॥ महारिष्टप्रदंप्रोक्तंद्विपदादिविनाशकृत् ॥ मातापितृसुहृद्बंधुकुलादीनांभयप्रदम् ॥ तद्दोषपरिहारार्थंशांतिंकुर्यात्
प्रयत्नतः ॥ ॥ अथप्रयोगः ॥ कर्त्ताएकादशाहेवातदसंभवे शुभदिनेवागोमुखप्रसवंकृत्वा ॥ ततःदेशकालौसंकीर्त्य ॥
अस्यशिशोःभद्राजनन सूचितसकलाशुभनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशांतिंकरिष्ये ॥ कन्याजननेतु ॥
अस्याकुमार्याःभद्राजननेतिविशेषः ॥ तत्रादौनिर्विघ्नतासिध्यर्थं महागणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनंमातृका
पूजनंनांदिश्राद्धंआचार्यऋत्विग्वरणं चकरिष्ये इतिसंकल्पः ॥ एतानिकृत्वा वृताचार्यःब्रह्मजज्ञानं अव्यसश्चेतिपठित्वा
जीवास्थेतिविधिवदाचम्य यदत्रसंस्थितमितिसर्षपविकीरणादिप्रार्थनांते स्थंडिलपूर्वभागेपीठोपरिप्रसारितवस्त्रे ग्रहाना
वाह्यसंपूज्य तदीशान्यांकलशे वरुणंसंपूज्य तदुत्तरेउदकसंस्थकलशपंचकेस्वर्णप्रतिमासु ब्रह्मविष्णुमहेश्वरइंद्ररुद्रानावाह्य

पूजयेत् ॥ पंचदेवतानां पंचपूर्वोक्तमंत्रैर्यथाविधिपूजनं चकृत्वा ॥ ततोएकऋत्विक्रुद्रकुंभंस्पृष्ट्वाचत्वारिरुद्रसूक्तानिजपेत्॥
प्रत्येकमेकादशवारंसूक्तानांजपः ॥ ततएकऋत्विक्शांतिसूक्तंजपेत् ॥ ततस्थंडिलेऽग्निंप्रतिष्ठाप्यसंपूज्य अभ्याधानादि
पूर्वतंत्रंकृत्वा स्वस्त्ययनहोमःकार्यः ॥ ततोब्रह्माणंविष्णुंमहेशं इंद्रंरुद्रंच प्रत्येकं समिदाज्यचरुतिलैः प्रतिद्रव्यमष्टोत्तर
शतसंख्याहुतिभिःहोमःकार्यः ॥ यथालिंगंसर्वत्रत्यागः ॥ ततःऋत्विगाचार्यःसग्रहहोम पुरःसरंप्रधानहोमंपूर्वोक्तमंत्रैः
कृत्वा ॥ होमकालेऋत्विजःगणपतिसूक्तंपौरुषं सौरंमृत्युंजयमंत्रंरुद्रंचउच्चैःपठेयुः ॥ ततःस्विष्टकृतादिप्रायश्चित्तहोमांते
बलिदानंचपूर्णाहुतिः॥ ततोभ्याधानाद्युत्तरतंत्रंसमाप्य॥ ततोग्न्यर्चनांतेपट्कलशोदकेन सकुटुंबंयजमानोपरिअभिषेकः
ततःआज्यावलोकनंतत्पात्रं सदक्षिणंद्विजायदत्वा ॥ अथविभूतिधारणं स्थापितदेवतानामुत्तरपूजनंविसर्जनं श्रेयोग्रहणं
आचार्यहस्तेप्रतिमादानं तस्मैसहिरण्यंधेनुदानंचकृत्वा ॥ ब्राह्मणान्भोजयित्वा शांतिपाठंकारयित्वा यस्मात्केशेति
समापनं ॥ कृतेनानेनकर्मणाभगवानकर्मरूपीश्वरार्पणमस्तु ॥ ॥इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौपट्पन्नागरद्विवेदि
रविशंकरकृतेभद्राजननशांतिप्रयोगरश्मिःसप्ततिः ॥ ७० ॥

॥ श्री अथऊर्ध्वदंतजननशांतिप्रयोगरश्मिः ॥ उपरिप्रथमंयस्यजायतेथशिरोद्विजाः ॥ दंतैर्वासहयस्य
स्याज्जन्मभार्गवसत्तम ॥ द्वितीयेचतृतीयेचचतुर्थेपंचमेतथा ॥ यदादंताश्चजायंत मासेचैवमहद्भयं ॥ मातरंपितरंवाथखा
देदात्मानमेवच ॥ बालानामष्टमेमासिषष्ठेमासिततः पुनःदंतायस्यचजायंते मातावाम्रियतेपिता ॥ बालकःपीड्यतेवात्र
स्वयमेवनसंशयः ॥ केचितुअष्टमेमासिदंतजन्मशुभमाहुः ॥ ॥ अथप्रयोगः ॥ ममास्यशिशोः प्रथममूर्ध्वदंतजनन
सूचितसर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशांतिंकरिष्ये ॥ तदंगगणपतिपूजनपूर्वकंस्वस्तिपुण्याहवाचनं
नांदिश्राद्धंचकरिष्ये इतिसंकल्प्य एतानिकृत्वा ॥ शांतिकर्मसुसर्वत्रशांत्युदकंकार्यमितिज्ञेयम् ॥ अतएवशांत्युदकंकृत्वा
ततोआचार्यवरणांतेआचार्यः ब्रह्मजज्ञादियथासंभवंमंत्रानुच्चार्य ॥ यदत्रेतिसर्पपविकिरणांते प्रतिमानामग्न्युत्तारणंच
कृत्वा होमदेशोत्तरभागेगजपृष्ठनौकायां सौवर्णपीठेवासस्तिकयुतंबालमुपविश्य ॥ सर्वौषधिसर्वगंधादियुक्तजलैः स्नाप





यित्वा स्थंडिलपूर्वभागेविधिनाकलशंप्रतिष्ठाप्य तस्योपरिपूर्णपात्रेउदक्संस्थंक्रमेणधातारं वह्निंसोमंवायुंपर्वतान् केशवंच
षट्प्रतिमाः नाममंत्रेणावाह्य संपूज्याग्निंप्रतिष्ठाप्य तदीशान्यांग्रहान्संपूज्य अभ्याधानादिपूर्वतंत्रंसमाप्यधातारंसकृच्चरुणा
वह्न्यादिपंचदेवताःएकैकयाज्याहुत्याहोमयेत् ॥ धात्रेत्वाजुष्टंनिर्वपामीत्यादितंत्रेतिर्वापप्रोक्षणे ॥ अत्रयथालिंगंसर्वत्र
त्यागः ततःस्वस्त्यनहोमः ॥ ततःग्रहपीठदेवताहोमांतेचरुमादाय ॥ ॐधात्रेस्वाहेतिसकृदाहुतिः ॥ ततःश्रुवेणाज्यं
गृहीत्वापंचाहुतिर्जुहुयात् ॥ सायथा ॐवह्नयेस्वाहा ॥१॥ ॐसोमायस्वाहा ॥२॥ ॐवायवेस्वाहा ॥३॥ ॐपर्वतेभ्यः
स्वाहा ॥ ४ ॥ ॐदेवदेवायस्वाहा ॥५॥ यथालिंगंत्यागः ॥ चर्वाज्याभ्यांस्विष्टकृतं ॥ ततःप्रायश्चित्तहोमांतेबलिः
पूर्णाहुतिश्च ॥ ततोभ्याधानाद्युत्तरतंत्रंसमाप्य ॥ पूर्णपात्रविमोकनाग्न्यर्चनांतेकलशद्वयोदकेनाभिषेकः ॥ ततोविभूति
धारणंस्थापितदेवताना मुत्तरपूजनंविसर्जनं श्रेयोग्रहणंआचार्यहस्तेप्रतिमादानांतंकृत्वा ॥ शांतिदिनमारभ्यसप्तदिन
पर्यंतंप्रत्यहंयथाशक्तिब्राह्मणान्भोजयेत् ॥ अष्टमदिनेकांचना ददानंतेभ्यः कार्यदिनाष्टकंब्रह्मचर्यादिव्रतचर्यांतेपरमेश्वरा
र्पणंकुर्यात् ॥ यस्मात्केशेतिजपः ॥ कृतेनानेनकर्मणाकर्मांगदेवताप्रीयतांनमम ॥ अथसदंतजननशांतिः ॥ देशकालौ
संकीर्त्यअस्यशिशोःसदंतजननसूचितसकलारिष्ट परिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशौनकोक्तांशांतिकरिष्ये ॥
तदंगगणेशपूजनादि नांदिश्राद्धांतेचार्यः कलशेप्रतिमासुधातारमित्यादि षट्देवतासंपूज्य ॥ ग्रहहोमादिसर्वंउर्ध्वदंत
शांतिवत्कार्यमित्यलमाडंबरेणेति ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौ षट्पन्नागरद्विवेदि रविशंकरकृतेसदंतजनन
शांतिसहितोर्ध्वदंतशांतिप्रयोगरश्मिरेकसप्तति ॥ ७१ ॥

॥ अथद्वितीयादिमासेदंतजननशांतिः ॥ देशकालौसंस्मृत्यास्यशिशोः ॥ द्वितीयमासेदंतजन्मसूचितस० ॥
सग्रहमखांशांतिंकरिष्ये ॥ एवंतृतीयमासेदंतजन्मसूचितेत्यादि संकल्पवाक्यंयथानिर्मितंयोजयेत् ॥ गणेशपूजनादि
यस्मात्केशेत्यंतंसर्वंपूर्वशांतिवत्कार्यमित्यलंविस्तरेण ॥ ॥ इतीश्रीमद०रविशंकरकृते द्वितीयतृतीयचतुर्थपंचमेमासेदंत
जननशांतिप्रयोगरश्मिर्द्विसप्तति ॥७ ॥

॥ अथषष्टमाष्टममासयोर्दंतजननशांतौविशेषः ॥ देशकालौसंकीर्त्यअस्यशिशोः षष्टममासेदंतजननसूचित सर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखांशांतिंकरिष्ये ॥ तदंगगणेशपूजनादिश्राद्धांतेवृताचार्यः स्थंडिल पूर्वभागेकलशंविधिनाप्रतिष्टाप्य तस्योपरिपूर्णपात्रेसु र्णनिर्मितबृहस्पतिमावाह्य संपूज्यस्थंडिलेग्निंप्रतिष्टाप्य ग्रहपूजनादि कलशस्थापनांतेअभ्यात्तानादिपूर्वतंत्रंसमाप्य स्वस्त्यनहोमोग्रहहोमश्च ॥ अत्रप्रधानंबृहस्पतिमष्टोत्तरशतसंख्ययादधि मध्वाज्यक्तअश्वत्थसमिदाहुतिभिःहोमयेत् ॥ ततोहोमांतेग्रहयज्ञअकृतपक्षे केवलाज्येनस्विष्टकृतंहुत्वा ततःप्रायश्चिच होमाद्यग्न्यर्यनांतेकलशोदकेनभिषेकः ततोविभूतिधारणादि शांतिसूक्तपाठांतंकर्मसर्वंपूर्ववत्कार्थं ॥ ॥ इतिश्रीमदथर्व गृह्यसूत्रप्रयोगभानौ षट्पन्नागरद्विवेदिरविशंकरकृते षष्टमाष्टममासयोर्दंतोत्पत्ति शांति प्रयोगरश्मिस्त्रिसप्ततिः ॥ ७३ ॥ अष्टमादिषुमासेषुदंतजन्मशुभावहमितिज्योतिर्निबंधोक्तेः ॥

॥ श्रीमहाकालिकायैनमोनमः ॥ ॥ अथगणेशायनमः ॥ अथप्रससववैकृतशांतिप्रयोगरश्मिप्रारंभः ॥ यत्रगर्भेविपर्यासोमानुषाणांगवामपि ॥ अद्भूतानिप्रसूयंतेतत्रदेशस्यविप्लवः ॥ मानुषामानुषाणांचगोअश्वामृगपक्षिणाम् जायंतेजातिभेदाश्वसदंतविकृतास्तथा ॥ बहुशीर्षाअशीर्षावाबहुकर्णाविशेषतः ॥ एकशृंगाद्वित्रिशृंगातथैवत्रिचतुर्भुजाः ॥ दीर्घकर्णामहाकर्णागजकर्णाश्चमानवाः ॥ राजश्रेष्टेकुलेनाशोधनस्यबहुसंक्षयः ॥ अष्टोत्तरसहस्राणिचरुर्वैजुहुयात्घृतम् ॥ समिधातुपालाशानांतर्पयेत्पूर्ववद्विजान् ॥ अशिराजायतेजंतुनयाद्विविशिरास्तथा ॥ अत्रसूर्याद्भूतेसूर्यंपूजयेज्जुहुया दपि ॥ दध्याज्यमधुसंयुक्ताःसमिधस्त्वर्कसंभवाः ॥ मृगीजनयतेसर्पान्मंडूकांश्चैवमानवाः । अत्राद्भुतेगीतपूजाहोमंच कारयेत् ॥ औदुंबरस्यसमिधौरुधिसर्पिःसमन्विताः ॥ स्त्रीगर्भपातोयमलंप्रसूयंतेथवास्त्रियः ॥ सदंताश्चैवजायंतेजाते मात्रावसंतिच ॥ बुधाद्भुतेबुधायात्रापूजाहोमौसमाचरेत् ॥ ॥ संक्षेपेणयथाप्राज्ञमित्थंजननशांतयः ॥ अनेनप्रीयतांदेवो गभवान्शंकरोमम ॥ १ ॥ अत्रमूलवचनानिकौस्तुभ मयूखादिशांतिग्रंथेभ्यो ज्ञेयानिविस्तरभया द्बालानांदुरधिगमत्वा च्चनलिखितानि ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्र प्रयोगभानौषट्पन्नागर द्विवेदिरविशंकरकृते प्रसववैकृतिशांतिप्रयोग रश्मिश्चतुःसप्तमिः ॥ ७४ ॥ ॥ इतिजननशांतयःसमाप्ताः ॥







॥ अथसर्वशांत्युपयोगीकर्मविशेषं सर्वशांतिष्वनुक्तत्वादत्रस्फुटीक्रियते ॥ तदुक्तंकौशिकसूत्रभाष्ये ॥ अथ पापनक्षत्रेजातेस्त्रीवापुरुषोवायोजातस्तस्य शांतिरुच्यतेत्युपक्रम्यनक्षत्र कल्पोक्तंसर्वंचेत्युपसंहारः कृतःमध्येअभ्यासोपि दर्शितः ॥ तत्रार्द्रादिपापनक्षत्राणिदर्शितानि ॥ अतएवसर्वेषुपापनक्षत्रेषुगंडशांतिषुच शिष्टाइदंकर्मकुर्वंति ॥ तस्मात् गर्गोक्तशौनकोक्त प्रागुक्तगोप्रसवादि सर्वशांतिषुबुधैरिदंकर्मकर्तव्यमिति ॥ आप्लवनासेचनेचक्षीरौदनप्राशनंच एतानि त्रिणिकर्माणिसर्वत्रकार्याणि ॥ अथवाप्रत्नोहीतिसूक्तेनोदकमभिमंत्र्य पापनक्षत्रजातंशिरसि पूर्वोक्तऋतुशांतिप्रकरणोक्त मंत्रैरभिषेकंकुर्यात् एतएवाग्रेस्फुटीकृतः ॥ अथसर्वशांतिषुब्रह्मवेदाध्यायिभिः कार्यानक्षत्रकल्पोक्ता पापनक्षत्रशांति रुच्यते ॥ तत्रगृह्यसूत्रेकौशिकः ॥ प्रत्नोहीतिपापनक्षत्रेजातायेति ॥ अथकौशिकसूत्रभाष्येचापि ॥ अथपापनक्षत्रेजाते स्त्रीवापुरुषोवायोजातस्तस्यशांतिरिति ॥ तथापापनक्षत्राण्युक्तानितत्रैव ॥ आर्द्राऽश्लेषामघाचित्रास्वातिविशाखाज्येष्टा मूलंशतभिषाभरणीत्येतानि ॥ एतेषुयोजायतेतस्येदंकर्मगंडेनसंधौच मूलनक्षत्रेदंकर्मकुर्यात् ॥ ॥ अथप्रयोगारंभः ॥ श्रीपर्ण्यादिप्रशस्तदारुमये पीठेउपविश्यसपत्नीकोयजमानःसंकल्पयेत् ॥ अत्राद्य०तिथौअमुकपापनक्षत्रोत्पन्न शिशोर्जन्म जनितपीडोपशांतये सूत्रोक्तामुकनक्षत्रशांतिं सग्रहमखांकरिष्येतिसंकल्प्य ॥ गणेशांबिकापूजनादि सर्वंअभ्यात्तानांतं कृत्वा ॥ अत्रासमूलंबर्हिस्तरणं ॥ समूलइध्माउपसमाधायेतिविशेषः ॥ तत्रपूर्वोक्तरीत्याग्रहस्थापननक्षत्रदेवतास्थापनादि ग्रहहोमांतंकृत्वा सपाशामुंजरज्वाकंठेकटयांपादयोःबध्वातीर्थोदकपूरितंघटंस्थाप्य ॥ प्रत्नोहीतिसूक्तेनसंपातानदद्यात् ॥ तद्यया ॥ प्रत्नोहिकेत्यृचस्यसूक्तस्थापर्वागिरा स्त्रिष्टुप्घटोदकसंपाताज्यहोमेविनियोगः ॥ ॐप्रत्नाहिकमीड्यो अध्वरेषु सनाच्चहोतानव्यंश्चसत्सि ॥ स्वांचाग्नेतन्वंपिप्रायंस्वास्मभ्यंचसौभगमायंजस्वइदंपजापतये० ॥ ज्येष्ठघ्न्यांजातोविचृतो र्यमस्यमूलबर्हणात्परिपाह्येनं ॥ अत्येनंनेषदुरितानिविश्वादीर्घायुत्वायशतशारदाय प्रजापतइदं० ॥ व्याघ्रेह्न्यजनिष्ट विरोनक्षत्रजाजायमानःसुवीरः ॥समावधीत्पीतरं वर्द्धमानोमामातरं प्रमिनीज्जनित्रिंस्वाहा इदंप्रजापतयेनममेतित्यागः

संपातश्च ॥ पुनस्तेनैवसूक्तेनआगमक्षीरोदनेसंपातान्दत्वा पुनस्तेनैवसूक्तेनदर्सपिंजुली अभिमंत्र्यघटेनिक्षिप्य पुनस्तेनैवसूक्तेनआगमक्षीरोदनमभिमंत्र्य सपत्निकस्तेनैवसूक्तेनप्राशयेत् ॥ ततोदिक्पालपूजनं बलिदानंपूर्णाहुति: ॥ ततोभ्यात्तानाद्युत्तरतंत्रं ॥ अथत्रापूर्णाहुत्यनंतरं तेनैवसूक्तेनतथाचपूर्वोक्तैः सूक्तैःसशिशुंसपत्नीकं यजमानमभिषिच्य ॥ अभ्यात्तानाद्युत्तरतंत्रंसमापयेत्॥ आचार्यायगां॥ ऋत्विग्भ्योयथाशक्तिदक्षिणांदत्वाग्रीवापाशंभौंजंनदीफेनेषुनिदधानि॥ कटिपाशंचोदकेप्रक्षिपति ॥ ॐनदीनांफेनांअनुतान् विनश्यन भ्रूणघ्निपूषनदुरितानिमृक्ष्वेतिमंत्रार्द्धेण ॥ ततोब्राह्मणभोजनं ॥ भूयसींदक्षिणादत्वा शांताद्यौरीतिसूक्तंमजप्य यस्मात्कोशेतिपठित्वा कृतंकर्मेश्वरार्पणंकुर्यात् ॥ ततःसुहृद्भिःसभुंजीततिलककरणंब्राह्मणाशिशोग्रहणादि सर्वंपूर्ववत्ज्ञेयमित्यलमतिशयाडंबरेण ॥ ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौ षट्पन्नागरद्विवेदिरविशंकरकृते सूत्रोक्तसर्वपापनक्षत्रजननशांतिप्रयोगरश्मिःपंचसप्ततिः ॥ ७५ ॥

कलिमलाहरणेक्षमतांगताविबुधवृंदनिसेवितपादुका ॥ मयिमनोविदधातुदयान्वितं जयदयाधिकताधिगतायतः ॥ १ ॥ श्रमेणानेनमहताभक्तभक्तस्यकालिके ॥ ममप्रीणातुदेवित्वंक्षमासाराहिमातृता ॥ २ ॥ रमाताताविबोधेन प्रथमःकालिकाश्रयात् ॥ धैर्यरामात्मजेनायं प्रकाशश्चप्रकाशितः ॥ ३ ॥ इतिस्वाभिष्टदेवतास्तुति पूर्वकंस्वात्मनामप्रकाशनम् ॥ श्रीजगदंबार्पणमस्तु ॥ इतिश्रीमदथर्वगृह्यसूत्रप्रयोगभानौषट्पन्नागर द्विवेदिरविशंकरकृते पचसप्ततिप्रयोगसंदर्भितोयंप्रथमःप्रकाशःसमाप्तिमगमत् ॥ १ ॥ ॥ अज्ञानदोषान्मतिविभ्रमाच्चयत्किंचिदूनंलिखितंमयात्र ॥ तत्सर्वमार्यैऽपरिशोधनीयं दोषोनदेयोखलुलेखकस्य ॥ १ ॥ यादृशंपुस्तकंदृष्टंतादृशंलिखितंमया ॥ यदिशुद्धमशुद्धंवाममदोषोनदीयताम् ॥ २ ॥ नारायणाय० ॥

॥ अथर्ववेद प्रयोगभानौ प्रथमप्रकाशःसमाप्तोयम् ॥

॥ जगदंबार्पणंभूयात ॥ श्रीरस्तु ॥

॥अथर्ववेद प्रयोगभानौ प्रथमप्रकाशः समाप्तम्॥

